Shri Rajasthan Sanskrit College Granthamala.

[*Seth Radhakrishnaji Paddar Memorial*]

PRATHAMA KUSUMA.

# THE SIDDHANTA LAKSHAṆA

OF

M. M. SHRI GANGESHOPADHYAYA.

WITH THE COMMENTARIES

**Didhiti, Jagadishi, Vivriti, Dipika and Kalishankari.**

BY

*Shri Raghunath Shiromani, Shri Jagadish Tarkalânkar, Shri Vamacharan Bhattacharya, Shri Guru Prasad Shastri and Kalishankar Bhattacharya.*

EDITED BY

SHRI GURU PRASAD SHASTRI

*Principal, Shri Rajasthan Sanskrit College, Meer Ghat, Benares City.*

*First Edition.*

PUBLISHED BY

MASTER KHELARI LAL & SONS.,

SANSKRIT BOOK DEPOT,

*Kachauri Gali, Benares City.*

1933

श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालायाः
[ सेठराधाकृष्णजीपोद्दारस्मारकं ]
प्रथमकुसुमम् ।

महामहोपाध्याय-श्रीगङ्गेशोपाध्यायविरचितं

# सिद्धान्त-लक्षणम् ।

श्रीरघुनाथशिरोमणिविरचितया
दीधित्या
श्रीजगदीशतर्कालङ्कारकृतया
जागदीश्या
न्यायाचार्य-तर्कतीर्थ-श्रीवामाचरणभट्टाचार्यकृतया
विवृत्या
श्रीगुरुप्रसादशास्त्रि-व्याकरणाचार्य-दर्शनाचार्य-न्यायशास्त्रिकृतया
दीपिकया
महामहोपाध्याय-श्रीकालीशङ्करभट्टाचार्यरचितया
विवेचनया च समुल्लासितम् ।

सम्पादकः—
श्रीगुरुप्रसादशास्त्री
प्रिन्सिपल श्रीराजस्थान-संस्कृत-कालेज, मीरघाट, काशी ।



प्रथमं संस्करणम् ।
काशी-संस्कृत-बुकडिपोऽधिपतिभिः
मास्टर खेलाड़ीलाल ऐण्ड सन्स् महोदयैः
श्रीलक्ष्मीनारायणमुद्रणालये मुद्रापयित्वा प्रकाशितम् ।

१९९० गुरुपूर्णिमा ।

॥ श्रीः ॥

# अथ प्रास्ताविकं किञ्चित्—

अयि सुरभारतीप्रेयांसः, प्रेयांसो विद्वांसोऽन्तेवासिनश्च !

विदितमेवैतत्तत्र भवतां भवतां,—यदष्टादशसु विद्यास्थानेषु परमाभ्यर्हितामान्वीक्षिकीं नाम तर्कविद्यां निश्श्रेयसाधिगमसाधनां षोडशपदार्थनिरूपणपरां जगदेव दुःखपङ्कनिमग्नमुदिधीर्षुः करुणाऽकूपारो भगवान् गोतमो महर्षिराविरकार्षीदिति ।

पदार्थतत्त्वप्रकाशिकान्तामिमान्वीक्षिकीं—जगन्ति जगत्प्राणं पवमानमिव—सकलशास्त्राणि समाश्रित्यैव प्रवर्त्तमानानि प्राधान्यमस्याः शिरसा वहन्तीत्यपि स्पष्टमेव तान्त्रिकाणाम्—"आन्विक्षिकी, त्रयी, वार्त्ता, दण्डनीतिश्च शाश्वती"त्यादिप्रस्तावप्रक्रमे प्रथममन्वाख्यानादेव ।

सूत्ररूपायाः खल्वस्यास्तत्त्वमजानद्भिर्योगाचार-चार्वाकादिनास्तिकवादिदिग्गजैराक्रम्याक्रम्योन्मूल्यमानामिमां रक्षितुं महर्षिदेशीयैर्गङ्गेशोपाध्यायैः प्रमाणरूपमेकमंशमालम्ब्यैव श्लोकद्वादशसाहस्रीपरिमितश्चिन्तामणिरिव प्रमाणिकानां—तत्त्वचिन्तामणिनामा ग्रन्थो निरमायि ।

चिन्तामणेस्तस्य च- वर्द्धमान - पक्षधर-प्रगल्भ-वाचस्पति - यज्ञपति-वासुदेवसार्वभौम-चक्रवर्त्ति-रघुनाथशिरोमणि - मथुरानाथ - भवानन्दादिभिर्वाग्देवताऽवतारैर्जगद्विदितपाण्डित्यैर्नाना व्याख्यानानि निरमायिषत, तान्यपि जगदीश-गदाधर-मथुरानाथादिभिः प्रकामं परिवर्द्धितानि, तान्यपि च भृशं विद्वद्भिः क्रोडपत्र-विवेचनादिभिरलं पल्लवितानीति साक्षात्परम्परा-व्याख्यानैस्त्रिंशल्लक्षग्रन्थात्मतामिदानीं गतोऽयं पण्डितमण्डलीषु परं प्रमोदमाधत्ते—'नव्यन्याय' तया च व्यपदिश्यत इति—वस्तुस्थितिः ।

तदेवमनन्तशाखेऽपि ग्रन्थकल्पद्रुमे 'सिद्धान्तलक्षणं' नाम प्रकरणं व्याप्तिवादमूर्धाभिषिक्तपदमाटीकमानं विराजत इति सम्प्रदायविदामत्रेतरनिर्व्यपेक्षं संरम्भो विलोक्यते ।

तच्च चिन्तामणि'सिद्धान्तलक्षणं' कतिपयैरेवाक्षरैर्ग्रथितं सिद्धमन्त्रबीजमिवाचिन्त्याऽपरिमेयशक्तितत्त्वचमत्कारचतुरं रघुनाथशिरोमणिभट्टाचार्यकृतदीधितिं विना, सारस्वतं महो गुरूपदेशं विनेव न लक्ष्यीभवति ।

दीधितिश्चेयं लोकविदितमाहात्म्यातिशया—

"विदुषां निवहैरिहैकमत्याद्यददुष्टं निरटङ्कि, यच्च दुष्टम्।
मयि जल्पति कल्पनाऽधिनाथे 'रघुनाथे' मनुतां तदन्यथैव"—

इति साटोपमात्मगौरवं स्वयमेवाऽऽचक्षाणैः श्रीरघुनाथशिरोमणिभिर्निर्मिता कियदिव सारतरा तर्ककर्कशाऽभिनवार्थसार्थमुद्योतयन्ती छात्रैर्दुरधिगमेति नानभिज्ञा विद्वांसो न्यायरसिका अमुष्यार्थस्य,

तस्याश्च गुरुतरतर्ककार्कश्यं मेधाविनोऽपि श्राम्यतोऽप्यन्तेवासिनो व्याकुलीभावं नेतुमलमिति महामहोपाध्यायजगदीशभट्टाचार्यैरार्यचेष्टितैरभिनवव्याख्यानमुद्भावितम्।

'जागदीशी'नाम्ना प्रसिद्धं तदल्पाक्षरैर्भूयसोऽर्थस्य प्रकाशकमिति पुनरपि खिद्यतां छात्राणां मानसानि प्रोल्लासयितुमलं प्रभवन्ती 'विवृति'र्वामाचरणभट्टाचार्यैर्निरमायीति परं प्रमोदस्थानम्।

दीपिकयापि काऽपि अभिनवा सरणिराविष्कृतेति भृशमुपकृताः परीक्षार्थिसार्था इति च हर्षभारं बिभृमः।

हन्त ! क्रोडपत्रादीनामतिभूयस्त्वेप्यद्ययावन्नातिथिर्नयनयोरस्माकं काचन टीका किलैवम्भूता भूतेति,—

पारेशतं वत्सराणामपि नैवम्विधो व्यापारः केनापि अधिनव्यन्यायशास्त्रमुरीकृतोऽमुना महतीयं त्रुटिरपहस्तितेति च सप्रमोदमुद्घोषयामः।

व्याकरणादिशास्त्रान्तराणामपि न्यायशास्त्रोपजीवकतया व्याकरणशास्त्र्याचार्यादिपरीक्षासु परिश्राम्यतां छात्राणामनेन भूयानुपकारो भविष्यति इति प्रकाशयन्तोऽपि नातिवादितादोषेण लिप्यामहे।

ननु एतादृशं ग्रन्थमिमं मसृण-मसृणैः पत्रैश्च्चाकचिक्यया मस्या मनोहरैरक्षरैर्मुद्रापयित्वा प्रकाशयद्भिर्भगवती सरस्वती सादरमर्चितेव।

'श्रीराजस्थान–संस्कृत–कालेजपुस्तकमाला'प्रकाशनेन कलाशालेयं [राजस्थान–सं० कालेज] काममानन्दातिरेकेण विदुषां चेतश्चटुलीकुरुते।

सकलकलाकलापसौभाग्यघस्मरे विकलेऽपि कालेऽस्मिन् कुतोऽपि सौभाग्यभरेणाविर्भवन्ती पीयूषवल्लरीव पुस्तकमालेयं केषां न गैर्वाणीप्रणयिनां हृदयैरामन्त्रयते ? अङ्ग ! अनुगङ्गं वाराणस्यामस्यां भूयसा शम्बलेन प्रचलत्सु [ 'गोयनका' महाविद्यालयादि ] विद्यालयेषु न केनाप्येवम्विधो-

भिनवोऽभ्यर्हितः पन्थाः समाश्रितो यमेषाऽचिरप्रवृत्ताऽपि नैकविधं व्याप्रियमाणाऽपि कृच्छ्रादर्थमर्जयन्ती कलाशाला [ श्रीराजस्थान–संस्कृत–कालेज ] श्रूयते ।

सर्वमेतच् श्रेयश्चिरजीविनमस्मत्स्नेहास्पदं श्रीगुरुप्रसादशास्त्रिणमुद्गच्छतीति अमुं नैकविधाभिराशीर्भिरभिनन्दयन्तः————

——"अन्यैरपि विद्यालयैरेवंविधैव पद्धतिराश्रयणीया, येन भगवत्यास्त्रिदशमकुटमणिमरीचिचर्चितचरणारविन्दायाः शारदाम्बायाः सौभाग्यं पुनरप्यनणीयसीं छायां पुष्णाति" इति प्रार्थयमाना विरमामः ।

इति—

१९९० गुरुपूर्णिमा
७ । ७ । ३३

विदुषामाश्रवः—
(पं०) काशीरामशर्मा एम्० ए०
[भूतपूर्वः पाठशालानिरीक्षणाध्यक्षः]
यू० पी० काशी ।

## कृतज्ञताप्रकाशः—

परममहनीयकीर्त्तिकुसुमामोदिपरिमलप्राग्भारमेदुरितप्रतापावर्जित—सुधादीधितिविलासवन्धुरकमलिनीवल्लभप्रागल्भ्यैरुदारचरितैर्महामान्यैः—प्रातःस्मरणीयानणीयोगुणनिकुरम्बैः श्रीकाशीरामशास्त्रि एम. ए. [भूतपूर्व इन्स्पेक्टर संस्कृत पाठशाला,यू. पी.] महोदयैः पुस्तकमालायाः किलाऽस्या भूमिकामारचयद्भिर्वयमिमे परमुच्चैस्तरामास्पदं प्रापिताः स्मः ।

हन्त ! एषां पवित्रकरकिसलयाभ्यामारोपितोऽङ्कुरोऽयमधिकामधिकाशि विच्छित्तिमासादयिष्यतीति सुदृढोऽस्माकं निश्चयः ।

यच्चास्मत्सु वलवत्स्निह्यद्भिः प्रशंशा-पल्लविता शुभाशीःप्रसूनावलिरभ्यूहिता, सेयं विकलेनापि कलेनेव वालभाषितेन प्रमोदमुद्बिभ्रतां गुरूणां स्नेहानुवन्धमेवाविष्कुरुत इति—

श्रीगुरुप्रसादशास्त्रिणः

श्रीराजस्थान-संस्कृत-कालेज,

मीरघाट, काशी

समर्पणम्

❀ निभृतं प्राभृतम् ❀

माननीयाय,

विद्वत्प्रणयिने, पण्डितवराय,

"श्रीसदायतनपाण्डेय" महोदयाय,

[ एम्. एल्. सी. ]

सुरभारतीनिरवधिकस्नेहाभिष्वङ्गशालिने

सादरं समर्पयति—

श्रीगुरुप्रसादशास्त्री।

।। श्रीः ।।

# सिद्धान्त-लक्षण-जागदीशी

विवृति-दीपिकालङ्कृता

अत्रोच्यते—प्रतियोग्यसमानाधिकरणयत्समाना-

विवृतिः

निजकान्तमनन्तमीश्वरं चरणान्ते यदि वीक्ष्य लज्जसे ॥
हृदि पादयुगं तदा त्वया जननीशानि ! मम प्रदीयताम् ॥ १ ॥
यदीयविरहादद्य काशी न्यायविवर्जिता ।
नत्वा तं भारताराध्यं श्रीवामाचरणं गुरुम् ॥ २ ॥
जागदीशीतिविख्यातटीकाया विवृतिर्मया ।
क्रियते धीमता श्रीमद्वामाचरणशर्मणा ॥ ३ ॥
अतुलनगुणमान्याः सर्वथा मे प्रणम्या
वचनरचनविद्या विद्यते येषु वेद्या ॥
लिखनमपि मदीयं नेत्रपातं तदीयं
यदि विपहत, एष स्यामहं पूरिताशः ॥ ४ ॥

"नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्ति" रिति प्रश्नस्य समाधानमाह मूले—"अत्रोच्यत" इत्यादिना । प्रथमं यत्पदं हेतुपरम् । तत्सामानाधिकरण्यञ्च तद-

दीपिका

सर्व-तन्त्र-स्वतन्त्र-श्रीस्नेहिरामाभिधान् गुरून् ।
वादि-वारण-पञ्चास्यान् सिद्ध-सारस्वतान्नुमः ॥१॥
वामा-चरण-पाथोज-सौरभोल्लासि-मानसे ।
वीणयन्ती संनिधत्तां हंसारूढा सरस्वती ॥२॥

धिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न

विवृतिः

धिकरणवृत्तित्वं, प्रतियोग्यसामानाधिकरण्यं प्रतियोग्यधिकरणावृत्तित्वं, तदुभयमत्यन्ताभावविशेषणम् । द्वितीयं यत्पदं साध्यपरम् । तदुत्तरनञो व्यत्यासेन प्रतियोगितावच्छेदकावच्छिन्नेन समन्वयात् तादृशप्रतियोगितावच्छेदकावच्छिन्नभिन्नत्वं साध्ये बोध्यते । तेन=साध्येन, तस्य=हेतोः, निष्ठत्वं षष्ठ्यर्थः, अन्वयश्चास्य सामानाधिकरण्यमित्यनेन । तथाच हेत्वधिकरणवृत्तिः प्रतियोग्यधिकरणावृत्तिर्योऽत्यन्ताभावस्तत्प्रतियोगितावच्छेदकावच्छिन्नभिन्नं यत्साध्यं तदधिकरणवृत्तित्वं हेतुनिष्ठं व्याप्तिरित्यर्थः । वह्निमान्धूमादित्यत्र हेतोर्धूमस्याधिकरणे पर्वते वर्त्तमानस्य घटाभावस्य—घटाधिकरणावर्त्तमानतया प्रतियोगिव्यधिकरणस्य—प्रतियोगितावच्छेदकीभूतं यद्घटत्वं, तदवच्छिन्न-घट-भिन्नं यद्वह्निरूपं साध्यं, तदधिकरणे पर्वते हेतोर्धूमस्य वर्त्तमानत्वाद्धूमे सद्धेतौ लक्षणसमन्वयः ।

धूमवान्वह्नेरित्यत्र—वह्निरूपहेत्वधिकरणेऽयोगोलके वर्त्तमानस्य धूमाभावस्य—धूमाधिकरणावर्त्तमानतया प्रतियोगिव्यधिकरणस्य—यत्प्रतियोगितावच्छेदकं धूमत्वं, तदवच्छिन्नत्वस्यैव धूमरूपसाध्ये सत्वेन तद्भिन्नत्वाभावान्न वह्निरूपे व्यभिचारिणि हेतौ निरुक्तलक्षणसमन्वयः ।

अत्र यत्सामानाधिकरण्यस्याभावविशेषणत्वानुपादानेऽयमात्माज्ञानादित्यत्राव्याप्तिः, आत्मत्वाभावस्य—प्रतियोगिन आत्मत्वस्याधिकरण आत्मन्यवर्त्तमानतया प्रतियोगिव्यधिकरणस्य—प्रतियोगितावच्छेदकं यदात्मत्वत्वं, तदवच्छिन्नत्वस्यैवात्मत्वरूपे साध्ये सत्त्वेन तद्भिन्नत्वस्याभावात्, तदुपादाने तु—आत्मत्वाभावस्य ज्ञानरूपहेत्वधिकरणीभूत आत्मन्यवर्त्तमानतया लक्षणाघटकत्वेन घटाद्यभावमादाय लक्षणसमन्वयसम्भवान्न दोषः । प्रतियोग्यसामानाधिकरण्यपदव्यावृत्तिस्तु दीधितिकृता स्वयमेव प्रदर्शयिष्यते ।

प्रतियोगितावच्छेदकावच्छिन्नभिन्नत्वमुपेक्ष्य प्रतियोगिभिन्नत्वस्य साध्यविशेषणत्वे समवायेन प्रमेयसाध्यकभावत्वहेतुकस्थले प्रमेयस्य भावत्वव्यापकत्वापत्तिः, "तत्सम्बन्धावच्छिन्नप्रतियोगितायास्तेन सम्बन्धेन वृत्तिमद्वृत्तित्वम्" इति नियमवादिनये समवायेन प्रमेयं नास्तीत्यभावीयप्रतियोगितायाः समवायसम्बन्धेन वृत्तिमत्प्रमेयमात्रवृत्तितया तादृशसमवेतप्रमेयरूपप्रतियोगिभिन्नत्वस्यासमवेतप्रमेयरूपसाध्येऽक्षतत्वात्, तथानिवेशे तु प्रतियोगितावच्छेदकप्रमेयत्वावच्छिन्नत्वस्य समवेतप्रमेयवदसमवेतप्रमेयेऽपि सत्वेन तद्भिन्नत्वस्य तादृशप्रमेयरूपे साध्येऽसत्वान्नातिव्याप्तिः ।

नञो व्यत्यासमनादृत्य साध्यभिन्नत्वस्य तादृशप्रतियोगितावच्छेदकाव-

भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः ।

इति चिन्तामणौ

सिद्धान्तलक्षणम् ।

—:※:—

दीधितिः

प्रतियोग्यसमानाधिकरणेति—प्रतियोग्यसमानाधिकर-

जागदीशी

वह्नित्वावच्छिन्नस्य सर्वस्यैव धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकी-

विवृतिः

च्छिन्ने निवेशे प्रमेयवान् वाच्यत्वादित्यत्र प्रमेयरूपसाध्यभिन्नत्वस्याप्रसिद्धेरव्याप्त्या-पत्तिः, नञ्व्यत्यस्य प्रतियोगितावच्छेदकावच्छिन्नभिन्नत्वस्य साध्ये विवक्षणे तु घटाभावीयप्रतियोगितावच्छेदकघटत्वावच्छिन्नभिन्नत्वस्य प्रमेयरूपसाध्ये सुलभत्वा-न्नोक्ताव्याप्तिशङ्कापीति ध्येयम् ।

'भवति' पदं भेदस्य व्याप्यवृत्तित्वसूचनाय, अन्यथा तादात्म्येन कपिसंयोगिसाध्यके सत्त्वहेतौ हेत्वधिकरणे गुणे वर्त्तमानस्य कपिसंयोगिभेदस्य प्रतियोगितावच्छेदकीभूतं यत् कपिसंयोगित्वं तदवच्छिन्न-कपिसंयोगि-भिन्नत्व-स्याऽपि साध्ये कपिसंयोगिनि सत्त्वादतिव्याप्त्यापत्तिः स्यात् । वस्तुतो **'भवति'** पदेन तावदन्तं व्यापकत्वलक्षणमिति सूचितमिति ध्येयम् ।

साध्यतावच्छेदके तादृशाभावप्रतियोगितानवच्छेदकत्वानुसरणप्रयोजनमाह—**वह्नित्वावच्छिन्नस्यैवेति** ॥ तथाच वह्निमान् धूमादित्यत्र धूमाधिकरणे पर्वते

दीपिका

**पोतदार**कुलाम्भोधिचन्द्राच् श्रेष्ठिशिरोमणेः ।
**राधाकृष्णा**भिधाल्लब्धजीवनस्तर्कभूषणः ॥ ३ ॥
गुरुप्रसादमासाद्य नव्यन्यायार्थ**दीपिकाम्** ।
**गुरुप्रसाद**स्तनुते धीरो धीरमनोहराम् ॥ ४ ॥

**वह्नित्वावच्छिन्नस्य सर्व्वस्यैवेति**—ननु वह्निमान् धूमादित्यत्र तत्त-द्व्यक्तित्वावच्छिन्नाभावः कथं लक्षणघटकः, तदीयप्रतियोगितावच्छेदकतायास्तद्व्यक्तित्व-निष्ठायाः स्वरूपसम्बन्धावच्छिन्नतया साध्यतावच्छेदकताघटकीभूतसमवायसम्बन्धान-वच्छिन्नत्वात्, नच प्रतियोगितावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकाव-च्छिन्नभिन्नत्वमेव साध्ये विवक्षणीयं, तावतैव रूपवान् पृथिवीत्वादित्यत्र विषयितया

विवृतिः

प्रतियोगिव्यधिकरणस्य—महानसीयव्यक्तिर्नास्ति, तादृशे च महानसे तादृशपर्वतीय-व्यक्तिर्नास्तीत्याद्यभावस्य—प्रतियोगितावच्छेदकीभूतं यन्महानसीयव्यक्तित्वादिकं, तदवच्छिन्नत्वस्य सर्वास्वेव साध्यरूपासु वह्निव्यक्तिषु सत्त्वात्, कस्यामपि वह्नि-व्यक्तौ तदवच्छिन्नभिन्नत्वासत्त्वेनाव्याप्तिः स्यादतः प्रतियोगितानवच्छेदकत्वानुस-रणम्, एवञ्च तादृशतत्तद्व्यक्त्यभावीयप्रतियोगितावच्छेदकं यत्तत्तद्व्यक्तित्वं, तद्भि-न्नत्वस्य वह्नित्वरूपे साध्यतावच्छेदके सत्त्वान्नाव्याप्तिः ।

नच प्रतियोगितावच्छेदकावच्छिन्नभिन्नत्वोक्तावपि तत्तद्व्यक्तित्वावच्छिन्न-भिन्नत्वस्य व्यक्त्यन्तरीभूते वह्निरूपे साध्ये सत्त्वात्कुतोऽव्याप्तिरिति वाच्यम् । धूमवान् वह्नेरित्यादौ वह्निसमानाधिकरण-घटाद्यभाव-प्रतियोगितावच्छेदकीभूतघट-त्वाद्यवच्छिन्नभिन्नत्वस्य साध्ये धूमे सत्त्वादतिव्याप्तिरतस्तद्वारणाय तादृशाभाव-प्रतियोगितावच्छेदकावच्छिन्नत्वावच्छिन्नभिन्नत्वस्यैव निवेशनीयतया वह्निमान् धूमादित्यत्र तादृशतत्तद्व्यक्त्यभावमादायाऽव्याप्तेरुपपादयितुं शक्यत्वात् ।

केचित्तु—वह्नित्वावच्छिन्नस्येत्यादिना वह्निमान् धूमादित्यत्राव्याप्तिर्नाभि-[illegible]ा, तत्र तत्तद्व्यक्तित्वनिष्ठस्वरूपसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभा-[illegible]साध्यतावच्छेदकताघटकीभूतसमवायसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगि-[illegible]ाभावेन लक्षणाघटकत्वात्, अपि तु वह्नित्वावच्छिन्नवान् धूमादित्यत्रैवा-[illegible]ग्रन्थकाराभिप्रेता, तत्र तत्तद्व्यक्त्यभावस्य स्वरूपसम्बन्धावच्छिन्नतत्त-[illegible]त्वनिष्ठावच्छेदकताकप्रतियोगिताकतया लक्षणघटकत्वादिति वदन्ति ॥

वह्नि—द्रव्यत्वान्यतरवान् धूमादित्यत्र सर्वास्वेव वह्निव्यक्तिषु निरुक्त-क्रमेण तत्तद्व्यक्त्यभावप्रतियोगितावच्छेदकावच्छिन्नत्वसत्त्वेऽपि तादृशप्रतियोगिताव-च्छेदकावच्छिन्नभिन्न-द्रव्यत्वरूपसाध्य-सामानाधिकरण्यस्य धूमे सत्त्वादव्याप्त्यसम्भ-वाद्धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्व्यक्तित्वावच्छिन्नत्वं नाव्याप्ति-प्रयोजकमतः सर्वस्यैव वह्नेरित्यनुक्त्वा **वह्नित्वावच्छिन्नस्ये**त्युक्तम् । तथा च वह्नि-त्वावच्छिन्नस्येत्यादिग्रन्थेन वह्नित्वमात्रधर्मेण साध्यतास्थल एवाव्याप्तेरभिहितत्वात् तादृशान्यतरसाध्यकस्थलेऽव्याप्तिविरहेऽपि न क्षतिः ।

एवं वह्निमान् महानसीयधूमादित्यत्र महानसीयधूमाधिकरणे वर्त्तमानस्य पर्वतीयव्यक्त्यभावादेः प्रतियोगितावच्छेदकीभूतपर्वतीयव्यक्तित्वाद्यवच्छिन्नभिन्न-त्वस्य महानसीयवह्निव्यक्तिरूपे साध्ये सत्त्वाद्वह्नित्वावच्छिन्नस्य धूमादिमन्निष्ठाभाव-प्रतियोगितावच्छेदकीभूततत्तद्व्यक्तित्वावच्छिन्नत्वं नाव्याप्तिप्रयोजकमतः **सर्वस्यै**वेत्यु-क्तं, तथाच वह्निमान् महानसीयधूमादित्यत्र सकलवह्न्यन्तर्गतमहानसीयवह्नौ तादृशपर्वतीयव्यक्तिर्नास्तीत्यभावप्रतियोगितावच्छेदकावच्छिन्नत्वविरहेण निखिल-

दीधितिः

णयद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको

जागदीशी

भूततत्तद्व्यक्तित्वावच्छिन्नत्वादव्याप्तिरित्यन्यथा व्याचष्टे,—*प्रतियोगिता-

विवृतिः

वह्नौ तादृशप्रतियोगितावच्छेदकावच्छिन्नत्वरूपाऽव्याप्तिप्रयोजकाभावादव्याप्तिविरहः समाधेयः ।

इति = अस्माद्धेतोः, अन्यथा = प्रकारान्तरेण, यथाश्रुतमूलार्थं परित्यज्येत्यर्थः, व्याचष्टे = लक्षणमिति शेषः ।

प्रतियोगितानवच्छेदकत्वानुसरणे वह्निमान् धूमादित्यत्र तत्तद्वह्न्यभावमादाय प्रसक्ताया अव्याप्तेर्वारणेऽपि, महानसीयवह्न्यभावमादायाऽव्याप्ते-

दीपिका

रूपत्ववान्नास्तीत्यभावमादायप्रसक्ताया अव्याप्तेर्वारणसम्भवात्, तदीयप्रतियोगितावच्छेदकताघटकविषयितासम्बन्धेन रूपत्वावच्छिन्नज्ञानभिन्नत्वस्य साध्ये रूपे सत्त्वादिति वाच्यम् । विषयित्व-समवायान्यतरसम्बन्धेन रूपत्ववतः समवायेन साध्यतायामात्म-घटान्यतरत्वहेतावव्याप्त्यापत्तेः, तादृशान्यतरत्वरूपहेतोरधिकरणे घटे विषयितया रूपत्ववदभावस्य, तादृश आत्मनि च समवायेन रूपत्ववदभावस्य सत्त्वेन तदीयप्रतियोगितावच्छेदकताघटकविषयितया रूपत्ववज्ज्ञानभिन्नत्वस्य तादृशप्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन रूपत्ववद्रूपभिन्नत्वस्य च साध्ये ज्ञाने रूपे चासत्त्वात्, अतः साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वेन प्रतियोगितावच्छेदकताऽवश्यं निवेशनीया, तथानिवेशेतु तादृशान्यतरसम्बन्धेन रूपत्ववदभावस्य हेत्वधिकरणे घटे आत्मनि वाऽसत्त्वान्नोक्ताव्याप्तिः, नच अन्यतरत्ववत् विषयित्वस्य समवायस्यापि च साध्यतावच्छेदकताघटकसंसर्गतया तेन तेन सम्बन्धेन रूपत्ववदभावस्यापि लक्षणघटकत्वसम्भवेनाव्याप्तितादवस्थ्यमिति-वाच्यम् । यद्रूपेण (अन्यतरत्वेन) साध्यतावच्छेदकताघटकसंसर्गता तद्रूपावच्छिन्नसंसर्गावच्छिन्नप्रतियोगिताऽवच्छेदकताया विवक्षितत्वादितिचेन्न । साध्यतावच्छेदकताघटकसंसर्गावच्छिन्नावच्छेदकतापदेन साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावृत्तित्व, साध्यतावच्छेदकताव्यापकत्त्वोभयाभाववदवच्छेदकताया एव विवक्षितत्वात्, अवृत्तिघटकवृत्तित्वञ्च—स्वावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, स्वं = प्रतियोगितावच्छेदकतात्वेनाभिमतमवच्छेदकत्वम्, अन्यथा वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य संयोगेन साध्यतायां धूमहेतौ

जागदीशी

नवच्छेदको यो धर्म इति॥ । न च "पर्वते महानसीयो वह्निर्नास्ति" इत्यादिप्रतीतिसिद्धस्य हेतुमन्निष्ठाभावस्य प्रतियोगितावच्छेदकमेव वह्नित्वमित्यव्याप्तितादवस्थ्यम्, साध्यतावच्छेदक–तदितरोभयावच्छे-

विवृतिः

वारणासम्भवादाशङ्कते–न चेति। पर्वते = धूमाधिकरणे, प्रतीतिसिद्धस्य = प्रमात्मकप्रतीतिविषयस्य, एतेन तादृशाभावस्य पर्वते सर्ववादिसिद्धत्वं सूचितं, तथाच वह्निमान्धूमादित्यत्र हेत्वधिकरणे पर्वते वर्त्तमानस्य प्रतियोगिव्यधिकरणस्य महानसीयवह्न्यभावस्य प्रतियोगितावच्छेदकं यद्वह्नित्वं तद्भिन्नत्वस्य साध्यतावच्छेदके वह्नित्वे विरहात्प्रतियोगितानवच्छेदकत्वानुसरणेऽपि भवत्येवाव्याप्तिरिति भावः ।

न चोभयाभावमादायासम्भवसम्भवेऽव्याप्त्यभिधानमसङ्गतमिति वाच्यम् । साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य तादृशप्रतियोगिताविशेषणत्वोपगमात् ।

केचित्तु यदभावप्रयुक्तोभयाभावस्तन्मात्रवृत्तिधर्मस्यैव प्रतियोगितावच्छेदकतया वह्निघटोभयाभावादिप्रतियोगितावच्छेदकत्वं घटत्वादेरेव नतु वह्नित्वादेरिति नासम्भव इत्याहुः ।

**तादवस्थ्यमिति** ॥ यथा मूलोक्ततादृशाभावप्रतियोगितावच्छेदकावच्छिन्नभिन्नत्वस्य साध्यविशेषणत्वे वह्निमान्धूमादित्यत्र तत्तद्व्यक्त्यभावमादायाव्याप्तिः,

दीपिका

तादृशसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकस्य हेतुसमानाधिकरणाभावस्याप्रसिद्ध्याऽव्याप्त्यापत्तेः, एवञ्च तद्व्यक्तित्वनिष्ठाया हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायाः समवायत्वगतैकत्वावृत्तित्वेऽपि वह्नित्वनिष्ठसाध्यतावच्छेदकताव्यापकत्वविरहात् उभयाभावस्याक्षततया तादृशतद्व्यक्तित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य लक्षणघटकत्वसम्भवेन अव्याप्तिप्रसङ्गात्, तद्वारणाय प्रतियोगितानवच्छेदकत्वानुसरणस्यावश्यकत्वादिति ध्येयम् ।

**अव्याप्तिरिति**—ननु द्रव्यं पृथिवीत्वादित्यत्र द्रव्यत्वस्यैक्यात् तत्तद्व्यक्तित्वावच्छिन्नाभावस्य लक्षणाघटकत्वेऽपि द्रव्यत्वजलत्वोभयाभावं जलत्वविशिष्टद्रव्यत्वाभावं चादाय लक्षणसमन्वयासम्भवाद्सम्भवसम्भवेऽव्याप्त्यभिधानमसङ्गतमिति-चेन्न, साध्यतावच्छेदकातिरिक्तवैशिष्ट्य-व्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य हेतुमन्निष्ठाभावप्रतियोगितायां विशेषणत्वमित्यभिप्रेत्याव्याप्तेरभिहितत्वादिति ध्येयम् ।

जागदीशी

द्यभिन्नाया प्रतियोगिताया एवानवच्छेदकत्वस्य विवक्षितत्वात् । न च

विवृतिः

तथा प्रतियोगितानवच्छेदकत्वानुसरणेऽपि तत्रैव महानसीयवह्न्यभावमादायाव्याप्तिर-स्त्येवेत्यर्थः । निरुक्तामव्याप्तिमपाकर्तुमाह–साध्यतावच्छेदकेति । उभयावच्छे-द्यभिन्नायाः=उभयानवच्छिन्नायाः, प्रतियोगितायाः=प्रतियोगिव्यधिकरणहेतुसमाना-धिकरणाभावीयप्रतियोगितायाः, विवक्षितत्वात्=साध्यतावच्छेदके विवक्षणीयत्वात्, एवञ्च साध्यतावच्छेदक–तदितरोभयानवच्छिन्ना या हेतुसमानाधिकरणप्रतियोगि-व्यधिकरणाभावीया प्रतियोगिता तदनवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नाधि-करणनिरूपितवृत्तित्वं हेतुनिष्ठं व्याप्तिरित्यर्थपर्यवसानाद्वह्निमान्धूमादित्यादौ महा-नसीयवह्न्यभावादेर्वह्नित्वादिरूपसाध्यतावच्छेदक–तदितरमहानसीयत्वैतदुभयधर्मा-वच्छिन्नप्रतियोगिताकतया लक्षणाघटकत्वाद्वह्नित्व–तदितरोभयानवच्छिन्नप्रतियोगि-ताकं घटाभावमादाय लक्षणसमन्वयान्नाव्याप्तिरिति भावः ।

अत्रोभयधर्मानवच्छिन्नत्वमात्रस्य तादृशप्रतियोगिताविशेषणत्वे महानसीय वह्निमान्धूमादित्यत्रातिव्याप्तिः, महानसीयवह्निनिष्ठप्रतियोगिताया महानसीयत्व–वह्नित्वोभयधर्मावच्छिन्नतया महानसीयवह्न्यभावस्य लक्षणाघटकतया घटाभावस्यैव लक्षणघटकत्वसम्भवात् । एवं साध्यतावच्छेदकेतरानवच्छिन्नत्वमात्रस्य तादृशप्रति-योगिताविशेषणत्वे वह्निमान्धूमादित्यादौ सर्वत्रासम्भवः, घटत्वपटत्वादेः सर्वस्यैव साध्यतावच्छेदकेतरधर्मत्वेन धर्तुं शक्यतया सद्धेतौ कस्याप्यभावस्य लक्षणघटक-त्वासम्भवात् , साध्यतावच्छेदकानवच्छिन्नत्वमात्रस्य च तादृशप्रतियोगिताविशेषणत्वे धूमवान्वह्नेरित्यादावतिव्याप्तिः, धूमाभावीयधूमनिष्ठप्रतियोगिताया धूमत्वरूपसा-ध्यतावच्छेदकावच्छिन्नतया धूमाभावस्य लक्षणाऽघटकत्वादिति वदन्ति ।

निरुक्तनिवेशे प्रमेयवत्त्वान्धूमादित्यत्र साध्यतावच्छेदकप्रमेयेतराप्रसिध्या-ऽव्याप्तिमाशङ्कते—नचेति । प्रमेयवत्त्वान्धूमादित्यत्र धूमाधिकरणे पर्वते प्रमेयवतो

दीपिका

**विवक्षितत्वादिति ।** ननु स्वाश्रयप्रतियोगिकत्व, स्वाश्रयसामानाधिकरण्यो-भयसम्बन्धेन साध्यतावच्छेदकविशिष्टान्याभावाप्रतियोगिसाध्यसामानाधिकरण्यस्यैव व्याप्तित्वसम्भवे साध्यतावच्छेदक-तादितरोभयधर्मानवच्छिन्नत्वादिनिवेशनं, अन-वच्छेदकत्वानुसरणं, अवच्छेदकतायां निरवच्छिन्नत्वादिविशेषणं च व्यर्थमिति, नच प्रमेयवान् वाच्यत्वादित्यत्राव्याप्तिः, घटपटादेः कस्याप्यभावस्यलक्षणाघट-कत्वात् तत्र प्रमेयत्वाश्रयघटादिप्रतियोगिकत्वस्य, प्रमेयत्वाश्रयपटादिसामाना-

## दीपिका

धिकरण्यस्य च सत्त्वेन साध्यतावच्छेदकविशिष्टत्वात् तदन्याभावाप्रसिद्धेरिति वाच्यम् । स्वरूपेण स्वाश्रयसामाधिकरण्यस्य विवक्षणीयतया घटाभावाभावमा-दायैव लक्षणसमन्वयसम्भवात् , घटाभावाभावस्य घटस्य संयोगेनैव सत्त्वेन स्वरूपेण प्रमेयत्वाश्रयसामानाधिकरण्याभावात् प्रमेयत्वविशिष्टान्यत्वस्य तत्राक्षतत्वात् , नच कपिसंयोगी सत्त्वादित्यत्रातिव्याप्तिः, साध्याभावस्य कपिसंयोगाभावस्य कपि-संयोगत्वाश्रयप्रतियोगिकत्व, कपिसंयोगत्वाश्रयसामानाधिकरण्योभयसम्बन्धेन कपि-संयोगत्वविशिष्टतया लक्षणाघटकत्वादिति वाच्यम् । हेत्वधिकरणवृत्त्यभावे साध्य-तावच्छेदकविशिष्टान्यत्वस्य विवक्षणीयत्वात् , गुणवृत्तिकपिसंयोगाभावे कपिसंयोगसामा-नाधिकरण्यविरहेण तादृशोभयसम्बन्धेन कपिसंयोगत्वविशिष्टान्यत्वस्याक्षतत्वात् , अधि-करणभेदेनाभावस्य भिन्नत्वादिति चेदत्र वदन्ति—घटत्वाभावपटत्वाभावान्यतरवान् घट-पटान्यतरत्वात् इत्यत्र घटे घटत्वाभावाभावं पटे पटत्वाभावाभावं चादाया-व्याप्त्यापत्तेः, घटत्वाभावाभावादेः स्वरूपेणावर्तमानतया तादृशान्यतरत्वरूपसाध्य-तावच्छेदकविशिष्टान्यत्वात् । नच तथापि तादृशप्रतियोगितानवच्छेकत्वस्यैव साध्य-तावच्छेदके विवक्षणीयत्वान्नदोष इति वाच्यम् , तथा सति कपिसंयोगाभाववान् मेय-त्वादित्यत्राव्याप्त्यापत्तेः । कपिसंयोगाभावाभावस्य कपिसंयोगात्मकस्य स्वरूपेणावृत्त्या कपिसंयोगाभावत्वरूपसाध्यतावच्छेदकविशिष्टान्यत्वेन लक्षणघटकत्वात् इति सुधीभि-र्विभावनीयम् ।

ननु तथापि हेतुसामानाधिकरणप्रतियोगव्यधिकरणाभावीयप्रतियोगिता-भिन्नप्रतियोगित्वाश्रयसाध्यसामानाधिकरण्यमेव व्याप्तिरस्तु, तावतैव तत्तद्व्यक्तित्वा-वच्छिन्नाभावं महानसीयवह्न्यभावादिकं चादाय वह्निमान्धूमादित्यादावव्याप्तेर्वारणस-म्भवात् । नच प्रमेयवान् वाच्यत्वादित्यत्राव्याप्तिः, हेतुसमानाधिकरणप्रतियोगिव्य-धिकरणाभावीयप्रतियोगिताभिन्नसाध्यनिष्ठप्रतियोगित्वाप्रसिद्धेरिति वाच्यम् । गगन-घटाद्युभयाभावीयप्रतियोगिताया एव तादृशप्रतियोगिताभिन्नायाः प्रसिद्धिसम्भवात्, नच कालिकेन धूमाभावीयप्रातियोगितायाः तादृशप्रतियोगिताभिन्नतयाऽतिव्याप्तिरिति वाच्यम् । तादृशप्रतियोगिताभिन्नप्रतियोगितायां साध्यतावच्छेदकभिन्नत्वस्य विवक्षणीय-त्वात् । नचैवं वाच्यं ज्ञेयत्वादित्यत्र तादृशप्रतियोगिताभिन्नसाध्यतावच्छेदकीभूतस्व-रूपसम्बन्धावच्छिन्नवाच्यत्वनिष्ठप्रतियोगित्वाप्रसिद्धिरिति वाच्यम् । स्वरूपेण वाच्यत्व-गगनोभयाभावीयप्रतियोगितायास्तादृशप्रतियोगिताभिन्नायाः साध्यतावच्छेदकस्वरूप-सम्बन्धावच्छिन्नत्वेन प्रसिद्धिसम्भवात् इति चेन्न, निरुक्तरीत्या धूमगगनोभयाभावीय प्रतियोगितामादाय धूमवान् वह्नेरित्यत्रातिव्याप्त्यापत्तेः, प्रकारान्तरानुसरणे तु वाच्यं ज्ञेयत्वादित्यत्राव्याप्तेर्दुरुद्धरत्वापत्तेरिति तु विभावनीयमिति संक्षेपः ।

जागदीशी

प्रमेयवत्त्वान् धूमादित्यादावव्याप्तिः, साध्यतावच्छेदकेतरस्याप्रसिद्धे-रिति वाच्यम्; तदितरपदेन तद्विषयित्वाव्यापकविषयिताकस्य विवक्षि-तत्वात्, येन रूपेण साध्यतावच्छेदकत्वं तेन रूपेण तदनवच्छिन्न-

विवृतिः

वह्न्यादेः संयोगेन सत्त्वात्सद्धेतुतया तत्र साध्यतावच्छेदकेतराप्रसिद्धिनिबन्धनाऽव्या-प्तिरित्यर्थः। साध्यतावच्छेदकेतरत्वस्य साध्यतावच्छेदकभिन्नत्वार्थकत्व एव प्रमेय-वतः साध्यत्वे प्रमेयभिन्नत्वाप्रसिध्याऽव्याप्तिः सम्भवति, नान्यथेत्याशयेन समाधत्ते— तदितरपदेनेति। तद्विषयित्वाव्यापकविषयिताकस्येति। साध्यतावच्छे-दकविषयित्वाव्यापकीभूता या विषयिता तन्निरूपकस्य धर्मस्येत्यर्थः। तदितरपदेन= साध्यतावच्छेदकेतरपदेन, तथाच प्रमेयवत्त्वान्धूमादित्यत्र साध्यतावच्छेदकीभूत— प्रमेय-विषयितायाः सर्वत्र घटपटादिज्ञाने वर्त्तमानतया तत्र च यथायथ घटत्व-पटत्वादिविषयिताया असत्त्वात् प्रमेयविषयित्वाव्यापकत्वस्य घटत्वादिविषयिताया-मक्षतत्वाद्घटत्वादेरेव निरुक्तपारिभाषिकसाध्यतावच्छेदकेतरत्वेन धर्त्तुं शक्यतया नाऽप्रसिद्धिनिबन्धनाऽव्याप्तिरिति भावः।

अव्यापकत्वस्य व्यापकताघटिततया निरुक्तकल्पस्य गुरुत्वाल्लाघवात्कल्पा-न्तरमाह—येनरूपेणेति। यद्रूपावच्छिन्ना साध्यतावच्छेदकता तद्रूपावच्छिन्नेन साध्यतावच्छेदकेनानवच्छिन्ना या प्रकारता तदवच्छेदकत्वं साध्यतावच्छेदकेतरत्वं, साध्यतावच्छेदकतावच्छेदकधर्मावच्छिन्ना या साध्यतावच्छेदकनिष्ठावच्छेदकता तद्-निरूपिता या प्रकारता तदवच्छेदकधर्मस्यैव साध्यतावच्छेदकेतरपदेन विवक्षितत्व-मिति तु फलितार्थः। प्रमेयवत्त्वान्धूमादित्यत्र साध्यतावच्छेदकतावच्छेदकं प्रमेयत्वं तदवच्छिन्ना या प्रमेयरूपसाध्यतावच्छेदकनिष्ठाऽवच्छेदकता तदनिरूपिता या घट-वानित्यादिज्ञानीया घटादिनिष्ठा प्रकारता तदवच्छेदकघटत्वादेरेव पारिभाषिकप्रमेये-तरत्वसम्भवान्न साध्यतावच्छेदकेतराप्रसिध्याऽव्याप्तिः। घटवानितिज्ञानीयघटनिष्ठ-प्रकारताया घटत्वरूपप्रमेयनिष्ठावच्छेदकतानिरूपितत्वेऽपि प्रमेयत्वावच्छिन्नप्रमेयनि-

दीपिका

एवं हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावभिन्नाभावीयसाध्यतावच्छेदक -सम्बन्धावच्छिन्नप्रतियोगित्वाश्रयसाध्यसामानाधिकरण्यं व्याप्तिरित्यादिपूर्वपक्षोऽपि सुधीभिर्विभावनीयः।

**येन रूपेणेति।** ननु साध्यतावच्छेदकतावच्छेदकरूपावच्छिन्नावच्छेदकत्वानिरू-पितप्रकारताश्रयस्यैव पारिभाषिकसाध्यतावच्छेदकेतरत्वमुच्यतां, किं तादृशप्रकार-

विवृतिः

ष्ठावच्छेदकत्वानिरूपितत्वात्, घटत्वनिष्ठप्रकारतावच्छेदकताया निरवच्छिन्नत्वेन प्रमेयत्वरूपसाध्यतावच्छेदकतावच्छेदकानवच्छिन्नत्वात्। यद्यपि घटत्वपटत्वादेः सर्वस्यैव प्रमेयस्य साध्यतावच्छेदकस्य धूमादिमन्निष्ठघटाद्यभावप्रतियोगितावच्छेदकत्वं, तथापि वह्नित्वरूपप्रमेये घटत्वपटत्वादिरूपप्रतियोगितावच्छेदकभिन्नत्वस्य सत्त्वात्प्रमेयवत्त्वान्धूमादित्यत्र लक्षणसमन्वयः सम्भवत्येव। नचैवं निरुक्तक्रमेण घटत्वादेः पारिभाषिकसाध्यतावच्छेदकेतरतया, प्रमेयमात्रस्य साध्यतावच्छेदकत्वेन साध्यतावच्छेदकस्वरूपतया च, साध्यतावच्छेदक–तदितरोभयपदेन घटत्व–पटत्वादेः सर्वस्यैव धर्तुं शक्यतत्वात्तादृशोभयानवच्छिन्नप्रतियोगिताकाभावाप्रसिध्याऽव्याप्तितादवस्थ्यमिति वाच्यम्, साध्यतावच्छेदकतावच्छेदकरूपावच्छिन्नावच्छेदकतानिरूपितत्व, साध्यतावच्छेदकतावच्छेदकरूपावच्छिन्नावच्छेदकत्वानिरूपितप्रकारतावच्छेदकधर्मनिष्ठावच्छेदकतानिरूपितत्वैतदुभयाभाववत्प्रतियोगिताया एव विशिष्टसाध्यतावच्छेद-

दीपिका

तावच्छेदकत्वपर्यन्तानुसरणेन, नच वह्नित्ववत्त्वान् द्रव्यत्वादित्यत्र वह्निरित्याकारकज्ञानीयवह्नित्वनिष्ठप्रकारताया वह्नित्वत्वेन वह्नित्वानवच्छिन्नतया तादृशप्रकारताश्रयस्य वह्नित्वस्य साध्यतावच्छेदकेतरत्वात्साध्यतावच्छेदकस्वरूपत्वाच्च वह्नित्ववान्नास्तीत्यभावस्य तादृशोभयावच्छिन्नप्रतियोगिताकतया लक्षणाघटकत्वादतिव्याप्तिरिति वाच्यम्, भवन्मतेऽपि तादृशातिव्याप्तिवारणाय साध्यतावच्छेदकतावच्छेदकरूपावच्छिन्नावच्छेदकत्वानिरूपितप्रकारतायां किञ्चिदवच्छिन्नावच्छेदकताकत्वस्यावश्यं निवेशनीयतया मन्मतेऽपि तथा निवेशेनैव सामञ्जस्यात् इति चेन्न, तादृशप्रकारतायां किञ्चिदवच्छिन्नाच्छेदकताकत्वनिवेशादेव प्रकारतावच्छेदकस्य तात्पर्येणानुसरणसम्भवात् तदनिवेशोक्तेः शशविषाणायमानत्वादिति ध्येयम्।

नच जातिमत्त्वान्भावत्वादित्यत्रातिव्याप्तिः, साध्याभावस्य जातिमदभावस्य—जातित्वेन जात्यनवच्छिन्नघटवानितिज्ञानीयप्रकारतावच्छेदकं यद्घटत्वं, यच्च साध्यतावच्छेदकजातिमत्त्वं तदुभयावच्छिन्नप्रतियोगिताकतया लक्षणाघटकत्वात—तादृशोभयानवच्छिन्नप्रतियोगिताकतत्तद्व्यक्तित्वावच्छिन्नाभावीयप्रतियोगितानवच्छेदक — त्वस्य साध्यतावच्छेदके सत्त्वादिति वाच्यम्, तादृशप्रकारतावच्छेदकताया हेत्वधिकरणवृत्तितावच्छेदकसाध्यतावच्छेदकावृत्तित्वेन विवक्षणीयत्वात्, घटत्वादिनिष्ठतादृशप्रकारतावच्छेदकत्वानां हेत्वधिकरणवृत्तितावच्छेदकसाध्यतावच्छेदकवृत्तित्वेन घटत्वादेः साध्यतावच्छेदकेतरपदेन धर्तुमशक्यत्वात्, तत्तद्व्यक्तित्वनिष्ठावच्छेदकतायास्तथात्वेपि तादृशावच्छेदकताश्रयतद्व्यक्तित्व-जातिमत्त्वोभयानवच्छिन्नप्रतियोगिताकस्य जातिमदभावस्य प्रतियोगितावच्छेदकतायाः साध्यतावच्छेदके सत्त्वादिति वदन्ति।

जागदीशी

प्रकारतावच्छेदकस्य वा तदितरपदेन विवक्षितत्वात् । साध्यताव-च्छेदकभिन्नो यः साध्यनिष्ठो धर्मस्तदनवच्छेद्या तु प्रतियोगिता न

विवृतिः

कस्थले साध्यतावच्छेदकतदितरोभयधर्मानवच्छिन्नप्रतियोगितापदेन विवक्षणीयतया प्रमेयवत्त्वात् धूमादित्यत्र घटाभावीयघटनिष्ठप्रतियोगितायां साध्यतावच्छेदकताव-च्छेदकरूपावच्छिन्नप्रमेयनिष्ठावच्छेदकत्वानिरूपितप्रकारतावच्छेदकघटत्वनिष्ठावच्छेद-कतानिरूपितत्वस्य सत्त्वेऽपि, प्रमेयत्वावच्छिन्नप्रमेयरूपसाध्यतावच्छेदकनिष्ठावच्छेदक-तानिरूपितत्वाभावाद्घटाभावस्यैव लक्षणघटकत्वसम्भवात्, घटत्वनिष्ठावच्छेदकताया निरवच्छिन्नत्वात् । नचैवं वह्निमान्धूमादित्यत्र वह्नित्वत्वेन वह्नित्वस्याभानात्साध्य-तावच्छेदकतावच्छेदकाप्रसिध्याऽव्याप्तिरिति वाच्यम् । यत्र साध्यतावच्छेदकतावच्छे-करूपेण साध्यतावच्छेदकस्य भानं तत्रैवास्य निवेशस्यादरणीयत्वात्, लक्ष्यभेदेन लक्षणस्य भिन्नत्वात् । नच धूमत्ववत्त्वान्वह्नेरित्यत्र धूमत्त्ववान्नास्तीत्यभावीयधूमनि-ष्ठप्रतियोगितायां धूमत्वरूपसाध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वस्य, धूमवा-निति ज्ञानीयधूमनिष्ठप्रकारतावच्छेदकस्य धूमत्वस्यापि धूमत्वत्वेन धूमत्वानवच्छिन्न-प्रकारतावच्छेदकतया निरुक्तपारिभाषिकसाध्यतावच्छेदकेतरत्त्वेन तन्निष्ठावच्छेदकता-निरूपितत्वस्य च; द्वयोः सत्त्वेन, धूमत्ववदभावस्य लक्षणाघटकतया घटाद्यभावमादा-यातिव्याप्तिरिति वाच्यम् । किञ्चिदवच्छिन्नावच्छेदकताकप्रकारतावच्छेदकस्य निरुक्त-क्रमेण साध्यतावच्छेदकेतरपदेन विवक्षितत्त्वात् , धूमवानिति ज्ञानीयधूमनिष्ठप्रकार-तायाः किञ्चिदवच्छिन्नावच्छेदकताकत्वाभावात् , धूमत्वनिष्ठावच्छेदकताया निरवच्छि-न्नत्वात् , धूमत्वस्य पारिभाषिकसाध्यतावच्छेदकेतरपदेन धर्त्तुमशक्यत्त्वात् ।

महानसीयवह्न्यभावमादायाव्याप्तिं प्रकारान्तरेण वारयतां मतन्दूषयितुमुपन्य-स्यति—**साध्यतावच्छेदकभिन्नो य इति ।** साध्यनिष्ठः = साध्यनिरूपितवृत्ति-तावान्, तदनवच्छेद्या = तदनवच्छिन्ना, प्रतियोगिता = हेतुसमानाधिकरणप्रतियो-गिव्यधिकरणाभावीयप्रतियोगिता, तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामाना-धिकरण्यं व्याप्तिरितिपर्यवसितोऽर्थः । तथाच महानसीयवह्न्यभावीयमहानसीयव-ह्निनिष्ठप्रतियोगितायाः वह्नित्वरूपसाध्यतावच्छेदकभिन्नवह्निवृत्ति—महानसीयत्व-रूप—धर्मावच्छिन्नतया वह्निमान्धूमादित्यत्र न महानसीयवह्न्यभावो लक्षणघटकः, अपि तु तादृशमहानसीयत्वाद्यनवच्छिन्नघटादिनिष्ठप्रतियोगिताको घटाद्यभाव एव लक्षणघटक इति तत्प्रतियोगितानवच्छेकत्वस्य वह्नित्वरूपे साध्यतावच्छेदके सत्त्वान्न महानसीयवह्न्यभावमादाय तत्राव्याप्तिरिति भावः ।

जागदीशी

निवेश्या, तथा सति तादृशप्रतियोगिताशून्यसाध्यसामानाधिकरण्यस्यैव व्याप्तित्वसम्भवे साध्यतावच्छेदकस्य तदनवच्छेदकत्वानुसरणवैयर्थ्यापत्तेः, अपि च प्रमेयवान् वाच्यत्वादित्यादावव्याप्तिः, तथा हि साध्यतावच्छेदका-

विवृतिः

अथात्र साध्यनिरूपितवृत्तित्वं यदि साध्यतावच्छेदकताघटकसम्बन्धेन, तदा महानसवृत्तित्वविशिष्टवह्न्यभावमादाय वह्निमान्धूमादित्यत्राव्याप्तिः, महानसवृत्तित्वस्य वह्नौ स्वरूपसम्बन्धेन वर्त्तमानतया तस्य साध्यतावच्छेदकभिन्नधर्मपदेन धर्तुमशक्यत्वात्, यदि स्वरूपसम्बन्धेन तथात्वमुच्यते, तदा महानसानुयोगिकसंयोगेन वह्न्यभावमादाय तथैव वह्निमान्धूमादित्यत्राव्याप्तिः, तादृशसंयोगस्य समवायेनैव वह्नौ वर्त्तमानतया स्वरूपेण वह्नाववर्त्तमानत्वात्तस्य साध्यतावच्छेदकभिन्नधर्मत्वाभावात् ।

नच स्वरूप-साध्यतावच्छेदकताघटकसम्बन्धान्यतरसम्बन्धेन तथात्वं विवक्षणीयमिति न कोऽपि दोष इति वाच्यम्, तथासति प्रमेयवान् वाच्यत्वादित्यत्र कालिकेन घटत्ववान्नास्तीत्यभावमादाय लक्षणसमन्वयसम्भवेऽग्रे तादृशाभावाप्रसिध्याऽव्याप्त्यभिधानस्यासङ्गतत्वापत्तेरिति चेन्न । प्रतियोगितावच्छेदकताघटकसम्बन्धेन साध्यनिरूपितवृत्तित्वस्य विवक्षितत्वादिति ध्येयम् ।

**तादृशप्रतियोगिताशून्येति ।** साध्यतावच्छेदकभिन्नसाध्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताशून्येत्यर्थः । **वैयर्थ्यापत्तेरिति ।** तथाच वह्निमान्धूमादित्यत्र तत्तद्व्यक्त्यभावो न लक्षणघटकः, तत्तद्व्यक्तित्वादेः साध्यतावच्छेदकभिन्नसाध्यवृत्तिधर्मत्वादिति घटाभावस्यैव लक्षणघटकतया तत्प्रतियोगिताशून्यत्वस्य वह्निरूपसाध्ये सत्त्वाल्लक्षणसमन्वयसम्भवेन तत्तद्व्यक्त्यभावमादाय प्रसक्ताया अव्याप्तेर्वारणाय प्रतियोगितानवच्छेदकत्वानुधावनं न कर्त्तव्यमिति भावः ।

नन्वस्तु तादृशप्रतियोगिताशून्यसाध्यसामानाधिकरण्यमेवव्याप्तिर्लाघवात्, तादृशानवच्छेदकत्वानुसरणन्तु परित्याज्यमेवेत्यतो दोषान्तरमाह—**अपि चेति ।** केचित्तु जातिमतस्तादात्म्येन साध्यतायां समवायेन सत्त्वहेतौ चालनीन्यायेन द्रव्यं न, गुणो न, कर्म नेत्यादिभेदमादायाव्याप्तिवारणार्थं प्रतियोगितानवच्छेदकत्वानुसरणं कर्त्तव्यं, तथाच तादृशभेदप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदकीभूतायां सत्तारूपजातौ सत्त्वान्नाव्याप्तिरतो दोषान्तरमाह—अपिचेतीत्याहुः, तन्न, प्रमेयवतः साध्यतास्थले साध्यतावच्छेदकप्रमेयभिन्नत्वाप्रसिध्याऽव्याप्तिवारणार्थमवश्यं पूर्वोक्तक्रमेण पारिभाषिकं साध्यतावच्छेदकभिन्नत्वं वक्तव्यं, एवञ्च

जागदीशी

तिरिक्तं यत् साध्यवृत्ति घटत्वादिकं तदनवच्छेद्यप्रतियोगिताकस्य हेतुसमानाधिकरणाभावस्याप्रसिद्धेरिति नव्याः। हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतायाः पर्य्याप्त्यधिकरणभिन्नत्वं साध्यतावच्छेदकस्य वाच्यमिति कश्चित्, तन्न, प्रत्येकमुभयत्र पर्य्याप्तिसम्बन्धेनासतोऽवच्छेद-

विवृतिः

द्रव्यं नेत्यादिभेदीयप्रतियोगितावच्छेदकीभूतद्रव्यत्वादेरपि जातित्वेन जात्यनवच्छिन्नद्रव्यवानित्याकारकज्ञानीयप्रकारतावच्छेदकतया पारिभाषिकसाध्यतावच्छेदकेतरत्वेन द्रव्यादिरूपसाध्यवृत्तित्वेन च द्रव्यत्वाद्यवच्छिन्नप्रतियोगिताकाभावस्य लक्षणाघटकत्वात्। अपिचेति। तथाच घटत्वपटत्वादेः सर्वस्यैव प्रमेयत्वातिरिक्तप्रमेयवृत्तिधर्मतया तदनवच्छिन्नप्रतियोगिताकाभावाप्रसिध्या प्रमेयवान् वाच्यत्वादित्यत्राव्याप्तिरितिभावः।

अथ पूर्वोपस्थितप्रमेयवत्साध्यकधूमहेतौ घटाद्यभावाऽप्रसिध्याऽव्याप्तिः सम्भवति, तत्रापि घटत्वपटत्वादेः सर्वस्यैव पूर्वोक्तपारिभाषिकप्रमेयभिन्नप्रमेयवद्वृत्तिधर्मतया तदवच्छिन्नाभावस्य लक्षणाघटकत्वादिति प्रमेयसाध्यकवाच्यत्वहेतावव्याप्त्यभिधानमसङ्गतमिति चेदत्र केचित्—प्रमेयवत्साध्यकधूमहेतावव्याप्तिसम्भवेऽपि कैमुतिकन्यायेनैव प्रमेयवत्साध्यकवाच्यत्वहेतावव्याप्त्यभिधानमित्याहुः।

नव्यास्तु साध्यवृत्तिधर्मघटके साध्ये हेत्वधिकरणवृत्तित्वस्य निवेशात् प्रमेयवत्साध्यकधूमहेतुकस्थले घटत्वपटत्वादेः साध्यतावच्छेदकभिन्नधूमाधिकरणवृत्तिप्रमेयवति वह्न्यादौ वर्त्तमानत्वाभावात्तत्र वर्त्तमानस्य महानसीयत्वादेरेव साध्यवृत्तिधर्मतया तदनवच्छिन्नप्रतियोगिताकस्य धूमसमानाधिकरणस्य घटाभावादेर्लक्षणघटकत्वान्न प्रमेयवत्साध्यकधूमहेतावव्याप्तिरतः स्थलान्तरानुसरणमिति वदन्ति। तच्चिन्त्यम्।

ननु हेत्वधिकरणवृत्तिर्योऽभावस्तत्प्रतियोगितावच्छेदकतायाः पर्याप्तिसम्बन्धेन यदधिकरणं तद्भिन्नत्वमेव साध्यतावच्छेदके निवेश्यतां, तत एव वह्निमान्धूमादित्यत्र महानसीयवह्न्यभावमादायाव्याप्तिवारणं सम्भवति, महानसीयवह्न्यभावप्रतियोगितावच्छेदकतायाः पर्याप्तिसम्बन्धेन वह्नित्व-महानसीयत्वैतदुभयत्र सत्त्वात्तादृशावच्छेदकतापर्याप्त्यधिकरणमहानसीयत्व—वह्नित्वैतदुभयभिन्नत्वस्य वह्नित्वरूपे साध्यतावच्छेदके सत्त्वादत आह—**हेतुसमानाधिकरणाभावेति।** कश्चिदित्यस्वरससूचनाय, अस्वरसं स्वयमेव दर्शयति—**तन्नेति।** उभयत्र = उभयोर्महानसीयत्व-वह्नित्वयोः, प्रत्येकं = केवले महानसीयत्वे वह्नित्वे च,

दीधितिः

**यो धर्म्मस्तद्धर्म्मावच्छिन्नेन येन केनापि समं समानाधिकरण्यं, तद्रूपविशिष्टस्य तद्धर्म्मावच्छिन्नयावन्निरूपिता व्याप्तिरित्यर्थः॥१॥**

जागदीशी

कत्वस्योभयत्र पर्य्याप्तिसम्बन्धेन सत्त्वायोगात्। (वह्निमान् धूमादित्यादौ धूमादिनिष्ठतत्तद्व्यक्तित्वावच्छिन्नसामानाधिकरण्यस्य वह्नित्वावच्छिन्नानिरूपितत्वादाह—*तद्धर्मावच्छिन्नेनेति * ) द्रव्यत्वादिरूपेण धूमे वह्निव्याप्यत्वस्य धूमसामान्ये वा तत्तद्वह्नि (त्वावच्छिन्ननिरूपित) व्याप्यत्वस्य च वारणार्थं विशिष्य लक्ष्यं निर्दिशति—*तद्रूपविशिष्टस्ये-

विवृतिः

असतः = अवर्त्तमानस्य, अवच्छेदकत्वस्य = प्रतियोगितावच्छेदकत्वस्य, उभयत्र = महानसीयत्ववह्नित्वयोः, **सत्त्वायोगादिति**। तथाच महानसीयत्ववह्नित्वोभयस्मिन् यदि तादृशप्रतियोगितावच्छेदकता पर्याप्तिसम्बन्धेन वर्त्तते तदा प्रत्येकं वह्नित्वे महानसीयत्वे चावश्यं प्रतियोगितावच्छेदकतायाः पर्याप्तिसम्बन्धेन सत्त्वमङ्गीकर्त्तव्यं, प्रत्येकावृत्तिधर्मस्य समुदायावृत्तित्वनियमात्, एवञ्च महानसीयवह्न्यभावप्रतियोगितावच्छेदकतायाः पर्याप्त्यधिकरणं वह्नित्वमपीति तद्भिन्नत्वं वह्नित्वे नास्तीत्यव्याप्तिरस्त्येवेति भावः।

दीधितौ—**यद्रूपविशिष्टेति**। हेतुतावच्छेदकावच्छिन्नेत्यर्थः। यो धर्मः = साध्यतावच्छेदको धर्मः, तद्धर्मावच्छिन्नेन=साध्यतावच्छेदकावच्छिन्नेन, येन केनापि समं= साध्येन समं, सामानाधिकरण्यं=साध्याधिकरणवृत्तित्वं, तद्रूपविशिष्टस्य = हेतुतावच्छेदकावच्छिन्नस्य, निष्ठत्वं षष्ठ्यर्थः, अन्वयश्चास्य सामानाधिकरण्यमित्यनेन। **यावन्निरूपितेति**। साध्यतावच्छेदकावच्छिन्नयावत्साध्यनिरूपितसाधनसामान्ये व्याप्तिर्लक्ष्यीभूतेत्यर्थः।

ननु लक्षणमेव हेतुतावच्छेदकावच्छिन्ने तादृशसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यरूपं विवक्ष्यतां, लक्ष्यस्य तादृशहेतुतावच्छेदकावच्छिन्नसामानाधिकरण्यरूपत्वेन विवक्षणं किमर्थं? इत्याशङ्कायामाह–**द्रव्यत्वादिरूपेणेति**। व्याप्यत्वस्येत्यस्य—वारणार्थमित्यनेनान्वयः। वारणार्थम् = इतरभेदानुमाने पक्षान्तर्गतत्ववारणार्थं, तथाच धूमव्यापकवह्निसामानाधिकरण्यमात्रस्य पक्षत्वे तस्य धूमव्यापकद्रव्यत्वावच्छिन्नद्रव्यनिष्ठसामानाधिकरण्येऽपि सत्त्वात्तद्वति च धूमत्वावच्छिन्ननिष्ठधूमव्यापकवह्निसामानाधिकरण्यात्मकेतरभेदानुमापकहेतोरसत्त्वाद्भागासि-

जागदीशी

त्वादिना ❀ । तद्धर्मावच्छिन्नहेतुकतादृशधर्मावच्छिन्नविधेयकानुमिते-र्जनकताया विषयविधयाऽवच्छेदिकेति तदर्थः, तेन व्याप्तिपदेनापि तादृशसामानाधिकरण्योक्त्या न पौनरुक्तम् । ( महानसीयवह्निसामानाधिकरण्यस्यैव निखिलवह्न्यादिव्याप्तित्वमिति व्याप्तेः सामान्यरूपतालाभाय ❀यावदिति❀ पूर्वत्र ❀येन केनापीति ❀च ) ॥ १ ॥

ननु दण्डिमान् दण्डिसंयोगादित्यत्राव्याप्तिः, चालनीन्यायेन दण्डमात्र-

विवृतिः

द्धिः स्यात, अतो लक्ष्यीभूतपक्षोऽपि हेतुतावच्छेदकावच्छिन्नहेतुव्यापकसाध्यसामानाधिकरण्यरूपो वक्तव्य इति न द्रव्यत्वावच्छिन्ननिष्ठवह्निसामानाधिकरण्यं लक्ष्यान्तर्गतम्, एवं साध्यतावच्छेदकावच्छिन्नतादृशहेतुव्यापकसाध्यसामानाधिकरण्यस्य हेतुतावच्छेदकावच्छिन्ननिष्ठस्य लक्ष्यत्वाभावे, केवलसाध्यसामानाधिकरण्यमात्रस्य तादृशहेतुनिष्ठस्य लक्ष्यत्वे, धूमव्यापकतावच्छेदकवह्नित्ववत्तत्तद्वह्निसामानाधिकरण्यमपि लक्ष्यतया पक्षान्तर्गतं, तत्र च धूमव्यापकतावच्छेदकवह्नित्वावच्छिन्ननिरूपितधूमत्वावच्छिन्ननिष्ठसामानाधिकरण्यात्मकेतरभेदानुमापकलक्षणस्य हेतोरसत्त्वाद्भागासिद्धिः स्यादतः साध्यतावच्छेदकावच्छिन्ननिरूपितसामानाधिकरण्यस्यैव तादृशस्य लक्ष्यत्वमनुसृतम्, तादृशञ्च सामानाधिकरण्यं धूमव्यापकतावच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यं हेतुतावच्छेदकधूमत्वावच्छिन्ननिष्ठं बोध्यं, तत्र च तदात्मकलक्षणस्य सत्त्वेन न भागासिद्धिरिति सङ्क्षेपः ।

ननु तादृशसामानाधिकरण्यं व्याप्तिरित्युक्तौ व्याप्तेरपि तादृशसामानाधिकरण्यात्मकतया पौनरुक्त्यमत आह—**तद्धर्मावच्छिन्नेति**। हेतुतावच्छेदकावच्छिन्नहेतुकेत्यर्थः। तादृशधर्मावच्छिन्नविधेयकानुमितेः = साध्यतावच्छेदकावच्छिन्न विधेयताकानुमितेः, **जनकताया इति**। तथाविधव्याप्तिज्ञाननिष्ठाया इत्यर्थः। **विषयविधयेति**। व्याप्तिज्ञानांशे व्याप्तेर्विशेषणत्वेनावच्छेदकत्वादिति भावः। तथाच **व्याप्तिरित्यस्य** निरुक्तव्याप्तिज्ञाननिष्ठानुमितिकारणतायां विषयितासम्बन्धेन विशेषणीभूयावच्छेदिकेत्यर्थं इति न पौनरुक्त्यमित्याशयः।

'दण्ड्यादौ साध्य' इत्यादिदीधितिग्रन्थोत्थितिबीजप्रदर्शनाय शङ्कते—**नन्विति**। नच दण्डिसंयोगस्य द्विष्ठतया दण्डिन्यपि सत्त्वात्, तत्र च साध्यतावच्छेदकसंयोगसम्बन्धेन साध्यस्य दण्डिनो विरहान्निरुक्तहेतोर्व्यभिचारित्वमिति वाच्यम्। अनुयोगितासम्बन्धेन दण्डिसंयोगस्य हेतुत्वोपगमात्तेन सम्बन्धेन तस्य दण्ड्यधिकरण एव वर्त्तमानतया तत्र च दण्डिरूपसाध्यस्य संयोगेन सत्वाद्व्यभिचाराभावात्। **चालनी-**

जागदीशी

स्यैव हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वात्, न च प्रतियोगितानवच्छेदकमित्यत्रावच्छेदकत्वं शुद्धसाध्यतावच्छेदकस्थले निरवच्छिन्नमिव,—विशिष्टसाध्यतावच्छेदकस्थलेऽपि साध्यतावच्छेदकतावच्छेदक-तदितरोभयानवच्छिन्नं ग्राह्यम्

विवृतिः

**न्यायेनेति** । तथाच तत्तद्दण्ड्यधिकरणेऽपरतत्तद्दण्ड्यभावमादायाव्याप्तिरिति भावः, तत्त्वं दण्डविशेषणं नतु दण्डिविशेषणं, दण्डिविशेषणत्वे तत्तद्दण्ड्यभावीयप्रतियोगिताया दण्डरूपसाध्यतावच्छेदक—तदितर—तत्त्वैतदुभयावच्छिन्नतया तत्तद्दण्ड्यभावस्य लक्षणाघटकत्वेनाव्याप्तिदानासङ्गत्यापत्तेः । **नचेति** । **वाच्यमिति** परेणान्वयः । शुद्धसाध्यतावच्छेदकस्थले=किञ्चिद्धर्माविशेषितसाध्यतावच्छेदकस्थले, यत्र साध्यतावच्छेदकमनुल्लिख्यमानजातिस्वरूपमखण्डधर्मस्वरूपं वा तत्रेति यावत् । **निरवच्छिन्नमिति** । तथा च शुद्धसाध्यतावच्छेदकस्थले किञ्चिद्धर्मानवच्छिन्ना या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकता तच्छून्यत्वं साध्यतावच्छेदके वक्तव्यं, अथवा किञ्चिद्धर्मानवच्छिन्ना याऽवच्छेदकता तन्निरूपिता या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिता तदनवच्छेदकत्वं साध्यतावच्छेदके वक्तव्यमित्याशयः । विशिष्टसाध्यतावच्छेदकस्थले=यत्किञ्चिद्धर्मविशेषितसाध्यतावच्छेदकस्थले, यत्र साध्यतावच्छेदकं नानुल्लिख्यमानजातिस्वरूपं नवाऽखण्डधर्मस्वरूपं तादृशसाध्यतावच्छेदकस्थल इति यावत् । अत्रापि साध्यतावच्छेदकतावच्छेदक—तदितरोभयधर्मानवच्छिन्ना या हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावीयप्रतियोगितावच्छेदकता तच्छून्यत्वं, तादृशोभयधर्मानवच्छिन्ना याऽवच्छेदकता तन्निरूपिता या हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावीया प्रतियोगिता तदनवच्छेदकत्वं वा साध्यतावच्छेदके निवेश्यमिति भावः ।

दीपिका

**तदितरोभयानवच्छिन्नमिति** । ननु शुद्धसाध्यतावच्छेदकस्थलवद्विशिष्टसाध्यतावच्छेदकस्थलेऽपि निरवच्छिन्नत्वमेव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायां निवेश्यतां, तावतैव तत्तद्दण्ड्यभावादेः पटसमवेतत्वविशिष्टजातिमतश्चाभावादेर्लक्षणाघटकत्वसम्भवेनाव्याप्त्यभावसम्भवादिति चेन्न । दण्डिमान्द्रव्यत्वादित्यत्रातिव्याप्त्यापत्तेः, दण्डानिष्ठप्रातियोगितावच्छेदकताया दण्डत्वावच्छिन्नतया दण्डिसामान्याभावस्य लक्षणाघटकत्वादिति ध्येयम् ।

अथ शुद्धसाध्यतावच्छेदकस्थलीयलक्षणस्य दण्डिमान् द्रव्यत्वादित्यत्रातिव्याप्तिः, दण्डिसामान्याभावस्य लक्षणाघटकत्वात्, तदीयप्रतियोगिताया दण्डत्वावच्छिन्नावच्छे-

जागदीशी

अन्यथा 'पर्वते महानसीयवह्निवृत्तित्वविशिष्टजातिमान् नास्ति' इत्यादि-प्रतीत्या विशिष्टवह्नित्वस्य ताद्दशाभावप्रतियोगितावच्छेदकतया वह्निमान् धूमादित्यादाविव,—जातिमत्त्वान् घटत्वादित्यादावव्याप्तिप्रसङ्गात्, 'घटे पटसमवेतत्वविशिष्टजातिमान्नास्ति' इति प्रतीत्या विशिष्टजातेस्ताद्दशा-भावप्रतियोगितावच्छेदकत्वात् ।

विवृतिः

निरवच्छिन्नमित्येत्यन्तदृष्टान्तफलमाह-**अन्यथेति**। तथाच निरवच्छिन्नत्वस्य ताद्दशप्रतियोगितावच्छेदकतायामविशेषणत्वे वह्निमान्धूमादित्यत्र धूमाधिकरणे पर्वते वर्त्तमानो यः प्रतियोगिव्यधिकरणः महानसीयवह्निवृत्तित्वविशिष्टजातिमान्नास्तीत्या-कारकोऽभावस्तत्प्रतियोगितावच्छेदकीभूता या महानसीयवह्निवृत्तित्वविशिष्टवह्नित्वा-त्मिका जातिस्तदन्यत्वस्य वह्नित्वरूपसाध्यतावच्छेदकेऽसत्वादव्याप्तिः,निरवच्छिन्नत्व-स्य ताद्दशाभावप्रतियोगितावच्छेदकतायां विशेषणत्वे तु निरुक्तमहानसीयवह्निवृत्तित्ववि-शिष्टजातिमदभावस्य लक्षणघटकत्वमेव न सम्भवति,ताद्दशविशिष्टजातिनिष्ठायाः प्रति-योगितावच्छेदकताया वैशिष्ट्य-जातित्व-धर्मद्वयावच्छिन्नतया किञ्चिद्धर्मानवच्छिन्न-त्वाभावात्। **इत्यादाविवेति**। वह्निमान् धूमादित्यत्र यथाऽव्याप्तिस्तथेत्यर्थः। 'सा-ध्यतावच्छेदकतावच्छेदक—तदितरोभयानवच्छिन्ने'त्याद्यभिधानस्य फलं प्रदर्शयति—**जातिमत्त्वानित्यादि। अव्याप्तिप्रसङ्गादिति**। हेतुमति घटे जातिमतो रूपादेः साध्यस्य साध्यतावच्छेदकीभूतसमवायसम्बन्धेन सत्त्वात्सद्धेतुतयाऽव्याप्तिप्रसङ्गा-दित्यर्थः। अव्याप्तिमुपपादयति—**घट इति। प्रतीत्येत्यनेन** पटसमवेतत्वविशिष्ट-जात्यवच्छिन्नाभावे घटवृत्तितायाः सर्ववादिसिद्धत्वं सूचितम्। विशिष्टजातेः= पटसमवेतत्वविशिष्टाया रूपत्व-कर्मत्वादिजातेः,**प्रतियोगितावच्छेदकत्वादिति**।

दीपिका

दकताकत्वेन निरवच्छिन्नावच्छेदकताकत्वाभावादिति चेन्न। शुद्धसाध्यतावच्छेदक-स्थलीयलक्षणघटकीभूतहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकताया नि-रवच्छिन्नत्वेन विशेषणीयत्वात्, निरुक्तस्थले दण्डनिष्ठसाध्यतावच्छेदकताया निर-वच्छिन्नत्वविरहेणातिव्याप्त्यनवकाशादिति ध्येयम्।

**महानसीयेति**—न च द्रव्यत्वादेरपि महानसीयवह्निवृत्तित्वविशिष्टजातिपदेन धर्तुं शक्यतया निरुक्ताभावस्य साध्यतावच्छेदकवह्नित्व-तदितरद्रव्यत्वोभयावच्छिन्नप्रतियो-गिताकत्वेन लक्षणाघटकत्वात् कथं तमादायाव्याप्तिदानं सङ्गच्छत इति वाच्यम्। महानसी-यवह्निवृत्तित्वस्य वह्नित्वप्रतियोगिकसमवायसम्बन्धेन विवक्षणीयत्वात्, द्रव्यत्वादौ

विवृतिः

तथाच हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावीयप्रतियोगितावच्छेदकतायां,—साध्यतावच्छेदकतावच्छेदक—तदितरोभयानवच्छिन्नत्वानिवेशे हेत्वधिकरणीभूते घटे वर्त्तमानस्य पटसमवेतत्वविशिष्टया जात्याऽवच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगितावच्छेदकीभूता याः पटसमवेतत्वविशिष्टरूपत्वादिजातयस्तदन्यत्वस्य साध्यतावच्छेदकीभूतायां कस्यामपि जातिव्यक्तावसत्त्वाज्जातिमतः समवायेन साध्यतायां घटत्वादिहेतावव्याप्तिः, तन्निवेशे च तादृशाभावप्रतियोगितावच्छेदकतायाः पटसमवेतत्वविशिष्टजातिनिष्ठायाः साध्यतावच्छेदकतावच्छेदक- जातित्व—तदितर-पटसमवेतत्ववैशिष्ट्योभयावच्छिन्नतया तदनवच्छिन्नाया घटत्वसमानाधिकरणघटाभावीयप्रतियोगितावच्छेदकताया घटत्वनिष्ठाया अभावस्य साध्यतावच्छेदकरूपत्वादिजातौ सत्त्वान्नाव्याप्तिरिति भावः ।

अत्र पटसमवेतत्ववैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन ग्राह्यं, स्वरूपसम्बन्धेन तादृशवैशिष्ट्याभिधाने रूपत्व—रसत्वादिरूपसाध्यतावच्छेदकीभूतानां जातीनां स्वरूपसम्बन्धेन पटसमवेतत्ववैशिष्ट्याऽप्रसिद्ध्या तासां तादृशाभावप्रतियोगितानवच्छेदकत्वेनाव्याप्तिदानस्याऽसङ्गतत्वापत्तेः ।

दीपिका

तादृशसम्बन्धेन वह्निवृत्तित्वविरहेण तस्य महानसीयवह्निवृत्तित्वविशिष्टजातिपदेन धर्त्तुमशक्यत्वात् ।

केचित्तु—'महानसीयवह्निवृत्तित्वविशिष्टजातिमान्नास्तीत्यभावपदेन महानसीयवह्निवृत्तित्वविशिष्टवह्नित्ववान्नास्तीत्यभावस्यैव विवक्षणीयतया न काप्यनुपपत्तिरित्यपि वदन्ति ।

यद्यपि निरवच्छिन्नावच्छेदकताकत्वस्य प्रतियोगिताविशेषणत्वेऽपि वह्नित्वनिष्ठ-निरवच्छिन्नावच्छेदकताकप्रतियोगिताकं पर्वतादिवृत्तित्वविशिष्टजातिमद्वन्ह्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तितादवस्थ्यं, तथापि निरवच्छिन्नावच्छेदकताकप्रतियोगितापदेन किञ्चिद्धर्मावच्छिन्नावच्छेदकत्वानिरूपितप्रतियोगिताया विवक्षणीयतया निरुक्ताभावीयप्रतियोगिताया जातित्वावच्छिन्नावच्छेदकतानिरूपितत्वेन किञ्चिद्धर्मावच्छिन्नावच्छेदकत्वानिरूपितत्वविरहान्नाव्याप्तिः,

नन्वेवं महानसीयवह्निवृत्तित्वविशिष्टजातिमद्वह्निमान् धूमादित्यत्रातिव्याप्तिः, साध्याभावस्य जातित्वरूपयत्किञ्चिद्धर्मावच्छिन्नजातिनिष्ठावच्छेदकताकप्रतियोगिताकतया लक्षणाघटकत्वादिति वाच्यम् । अत्रापि पूर्ववच्छुद्धसाध्यतावच्छेदकस्थलीय लक्षणघटकहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकताघटकसाध्यतायां—किञ्चिद्धर्मावच्छिन्नावच्छेदकत्वानिरूपितत्वस्य—विवक्षणीयत्वात्, महानसीयवह्निवृत्ति-

विवृतिः

न च तथापि द्रव्यत्व–घटत्वादिजातीनां साध्यतावच्छेदकीभूतानां सामानाधिकरण्यसम्बन्धेन पटसमवेतत्वाप्रसिद्ध्या तासामपि न तथाविधाभावप्रतियोगितावच्छेदकत्वमिति कुतोऽव्याप्तिरिति वाच्यम् । समवायेन द्रव्यादेरभावस्य हेत्वधिकरणे घटे सत्त्वेन द्रव्यत्वादिजातीनां हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वानपायात् ।

न च साध्यतावच्छेदकीभूतायाः पाकजस्पर्शत्वजातेर्निरुक्तसम्बन्धेन पटसमवेतत्ववैशिष्ट्याप्रसिध्या तस्या अपि तादृशाभावप्रतियोगितानवच्छेदकत्वेन कुतोऽव्याप्तिरिति वाच्यम् । अवयविनि घटे पाकजस्पर्शानभ्युपगमेन तादृशघटत्वसमानाधिकरणपाकजस्पर्शाभावप्रतियोगितावच्छेदकतायाः पाकजस्पर्शत्वे सत्त्वात् । वस्तुतस्तादृशाभावप्रतियोगितावच्छेदकस्पर्शत्वाभिन्नपाकजस्पर्शत्वस्य तथाविधाभावप्रतियोगितावच्छेदकत्वानपायात् ।

ननु प्रथमोपस्थितमहानसीयवह्निवृत्तित्वविशिष्टजातिमान्नास्तीत्यभावमादायापि जातिमत्त्वान् घटत्वादित्यत्राव्याप्तिसम्भवे पटसमवेतत्वविशिष्टजात्यवच्छिन्नाभावानुधावनमनुचितमिति चेदत्र केचित्–घटत्वस्य जातित्वे प्रमाणाभावेन पार्थिवघटत्वस्यैव हेतुत्वविवक्षयाऽव्याप्तेरभिधानाद् गन्धत्वरूपसाध्यतावच्छेदकजातेस्तादृशवह्निवृत्तित्वाप्रसिद्ध्या तस्यास्तादृशाभावप्रतियोगितानवच्छेदकत्वेनाव्याप्त्यनवकाशापत्तेरतः

दीपिका

स्वविशिष्टजातिमद्वह्निनिष्ठसाध्यतायां जातित्वरूपकिञ्चिद्धर्मावच्छिन्नावच्छेदकतानिरूपितत्वेन तादृशवह्नित्वस्य तादृशसाध्यतावच्छेदकपदेन धर्तुमशक्यत्वात्, विशिष्टसाध्यतावच्छेदकस्थलीयलक्षणे तु निरुक्तनिवेशो न कर्त्तव्य इत्यतः पर्वतीयवह्निवृत्तित्वविशिष्टजातिमद्वह्निमान् तद्धूमादित्यादौ तादृशसाध्यत्वाप्रसिद्धावपि नाव्याप्तिरिति विभावनीयम् ।

वस्तुतस्तु—'साध्यतावच्छेदक—तदितरोभयानवच्छिन्नप्रतियोगिता' पदेन साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्व–साध्यतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वोभयाभाववत्प्रतियोगिताया एव विवक्षितत्वान्न काप्यनुपपत्तिः, वैशिष्ट्यञ्च–स्वसामानाधिकरण्य, स्वावच्छेदकसम्बन्धावच्छिन्नत्व. स्वसाजात्यैतत्त्रितयसम्बन्धेन, साजात्यञ्च—किञ्चिदवच्छिन्नत्व–निरवच्छिन्नत्वान्यतररूपेण, एवञ्च पर्वतादिवृत्तित्वविशिष्टजातिमद्वन्ह्यभावप्रतियोगितायां साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकतानिरूपितत्वस्य, तादृशावच्छेदकताविशिष्टान्यजातिनिष्ठावच्छेदकतानिरूपितत्वस्य च द्वयोः सत्त्वान्नोक्ताभावमादायाव्याप्तिः ।

विवृतिः

पटसमवेतत्वविशिष्टजात्यवच्छिन्नाभावानुधावनं, पार्थिवघटे गन्धत्वावच्छिन्नाभावासत्त्वेऽपि गन्धत्वस्य निरुक्तसम्बन्धेन पटसमवेतत्वविशिष्टतया तादृशविशिष्टजात्यवच्छिन्नाभावस्य पार्थिवघटे सत्त्वेन भवत्येवाव्याप्तिरिति वदन्ति ।

वस्तुतो महानसीयवह्निवृत्तित्वस्यावश्यं वह्नित्वनिरूपितसमवायसम्बन्धेन वक्तव्यतया निरुक्ताभावप्रतियोगितावच्छेदकं वह्नित्वमेव, तदन्यत्वस्य साध्यतावच्छेदकीभूतायां रूपत्वादिजातौ सत्वादव्याप्तिविरहेणाभावान्तरमादायाव्याप्तिरभिहिता, न च साध्यतावच्छेदकत्वावच्छेदेन प्रतियोगितावच्छेदकत्वाभावो विवक्षणीयः, प्रमेयवत्त्वान्धूमादित्यत्र, वह्नि-घटान्यतरवान्धूमादित्यत्र चाव्याप्तिप्रसङ्गात्, घटत्वरूपसाध्यतावच्छेदके हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावासत्त्वात् । न चैवं वह्नि–धूमोभयवान् वह्नेरित्यत्रातिव्याप्तिर्वह्नित्वे तादृशप्रतियोगितावच्छेदकत्वस्यासत्त्वादिति वाच्यम्, वह्निमति वन्ह्यभावासत्त्वेऽपि वह्नि-धूमोभयाभावस्य वर्त्तमानतया तत्प्रतियोगितायास्तत्राक्षतत्वादिति युक्तमुत्पश्यामः ।

यद्यपि अवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकत्वाभाववद्धर्मानवच्छिन्नप्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकताशून्यसाध्यतावच्छेदकावच्छिन्नसमानाधिकरण्यस्य विशिष्टसाध्यतावच्छेदकस्थले, शुद्धसाध्यतावच्छेदकस्थलेऽपि च व्याप्तित्वं सम्भवति, वह्निमान्धूमादित्यत्रावच्छेदकत्वसम्बन्धस्य वह्नित्वनिष्ठसाध्यतावच्छेदकताया व्यधिकरणतया तत्सम्बन्धावच्छिन्नवह्नि-

दीपिका

एतेन 'साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकताया विवक्षणेऽपि कालिकेन महानसीयत्वविशिष्टं सत् समवायेन वन्हित्वविशिष्टं यत् तस्य संयोगेन साध्यतायां धूमहेतौ समवायेन महानसीयत्वविशिष्टं सत् कालिकेन वह्नित्वविशिष्टं यत् तस्य संयोगेनाभावमादायाव्याप्तिरित्यपि' परास्तम्, निरुक्ताभावीयप्रतियोगितायां पूर्वोक्तत्रितयसम्बन्धेन वह्नित्वादिनिष्ठावच्छेदकताविशिष्टान्य--समवायाद्यवच्छिन्नमहानसीयत्वादिनिष्ठावच्छेदकतानिरूपितत्वस्य, साध्यतावच्छेदकीभूतवह्नित्वादिनिष्ठावच्छेदकतानिरूपितत्वस्य च द्वयोः सत्त्वात्तादृशाभावमादायाव्याप्त्यनवकाशात् ।

न च तथापि विषयितया महानसीयवह्निसाध्यकतज्ज्ञानत्वहेतौ विषयितया महानसीयो नास्ति, विषयितया वह्निर्नास्ती'त्यादिप्रतीतिसिद्धस्य तज्ज्ञानत्वसमानाधिकरणाभावस्य प्रतियोगितावच्छेदकताया महानसीयत्वे–वह्नित्वे च सत्त्वादव्याप्तिरिति-वाच्यम् । हेतुमन्निष्ठाभावीयतादृशप्रतियोगितायां साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिताव—

विवृतिः

त्वनिष्ठावच्छेदकत्वाभावस्य जातित्वादौ सत्त्वेन तादृशमहानसीयवह्निवृत्तित्वविशिष्ट-जातित्वाद्यनवच्छिन्ना या घटो नास्तीत्यभावीयघटत्वनिष्ठा किञ्चिद्धर्मानवच्छिन्नाऽवच्छेदकता तच्छून्यत्वस्य वह्नित्वे सत्त्वाल्लक्षणसमन्वयः। एवं जातिमत्त्वान्घटत्वादित्यत्र जातित्वे जातिनिष्ठसाध्यतावच्छेदकताया अवच्छेदकत्वसम्बन्धेन सत्त्वेऽपि पटसमवेतत्ववैशिष्ट्ये तादृशसम्बन्धेन जातिनिष्ठसाध्यतावच्छेदकताया असत्त्वात्तादृशवैशिष्ट्यानवच्छिन्ना या घटो नास्तीत्यभावीया घटत्वनिष्ठा निरवच्छिन्ना प्रतियोगितावच्छेदकता तच्छून्यत्वस्य साध्यतावच्छेदके रूपत्वादिजातौ सत्त्वाल्लक्षणसमन्वय इत्युच्यते, तथापि–वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावमनभ्युपगत्यैव विभिन्नसाध्यतावच्छेदकस्थलीयलक्षणे विभिन्नरूपेण निवेशनम्, वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाभ्युपगमेऽपि–प्रमेयवत् प्रमेयाश्रयस्य तादात्म्येन साध्यतायां तद्व्यक्तित्वहेतावव्याप्तिप्रसङ्गात्, साध्यतावच्छेदक–प्रमेय–निष्ठावच्छेदकताया अवच्छेदकत्वसम्बन्धेन प्रमेयमात्रे सत्त्वात्तादृशसम्बन्धेन साध्यतावच्छेदकत्वाभावाप्रसिद्धेरिति ध्येयम् ।

दीपिका

च्छेदकीभूतावच्छेदकतात्ववत्साध्यतावच्छेदकनिष्ठावच्छेदकत्वानिरूपकत्वस्य विवक्षणीयत्वात्,

एतेन–'वह्नित्वत्वेन वह्नित्वविशिष्टस्य विषयितया साध्यत्वे तज्ज्ञानत्वहेतौ विषयितया शुद्धवह्नित्वविशिष्टस्याभावमादायाव्याप्तिरित्यपि'—समाहितम् । शुद्धवह्नित्वगतैकत्वस्य वह्नित्वत्वावच्छिन्नसाध्यतावच्छेदकताप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकतया शुद्धवह्नित्वविशिष्टाभावस्य लक्षणाघटकत्वादिति वदन्ति ।

यद्यपि हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकभिन्नं यत्साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपं तद्विशिष्टावच्छिन्नसामानाधिकरण्यस्यैव व्याप्तित्वोक्तौ न कोऽपि दोष इत्युच्यते, तथापि प्रतियोगितानवच्छेदकत्वगर्भलक्षणमादृत्यैव तादृशस्य व्याप्तित्वं नाभिहितमिति ध्येयम् ।

ननु साध्यतावच्छेदकतावच्छेदक–तदितरोभयधर्मानवच्छिन्नत्वस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वविशेषणत्वेऽपि पटसमवेतत्वविशिष्टप्रमेयवदभावमादाय जातिमत्त्वान् घटत्वादित्यत्राव्याप्तितादवस्थ्यं, प्रमेयत्वस्य साध्यतावच्छेदकतावच्छेदकानात्मकत्वादिति चेन्न। 'साध्यतावच्छेदकतावच्छेदक–तदितरोभयधर्मानवच्छिन्नावच्छेदकता' पदेन साध्यतावच्छेदकतावच्छेदकेतरधर्मानवच्छिन्नावच्छेदकताया एव विवक्षि-

जागदीशी

तथा च तद्दण्डवान् नास्तीत्यादिप्रतीत्या तत्ताविशिष्टदण्ड-व्यक्तेरेवावच्छेदकत्वावगाहनात् शुद्धदण्डव्यक्तीनां—दण्डत्व—तदितरोभयानवच्छिन्नं यद्धेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वं—तदभावसत्त्वान्नाव्याप्तिरिति वाच्यम्; प्रमेयदण्डवान् नास्तीत्यादौ प्रमेयत्वोपलक्षितस्येव, तद्दण्डवान्नास्तीत्यादावपि तत्त्वोपलक्षितदण्डव्यक्तिमात्रस्यैवावच्छेदकत्वकल्पनात्, यत्र केवलस्यावच्छेदकत्वासम्भवस्तत्रैव विशिष्टस्य तथात्वस्वीकारात्, अन्यथा प्रमेयत्वविशिष्टदण्डादेरपि तथा-

विवृतिः

निरुक्तनिवेशे दण्डिमान् दण्डिसंयोगादित्यत्राव्याप्तिं वारयति— तथाचेति । शुद्धदण्डव्यक्तीनां = साध्यतावच्छेदकीभूतानां, षष्ठ्यर्थो निष्ठत्वमन्वयश्चास्य तदभावसत्त्वादित्यनेन, एवञ्च साध्यतावच्छेदकतावच्छेदक-दण्डत्व-तदितर-तत्त्वोभयानवच्छिन्ना या हेतुमन्निष्ठ'घटो नास्ती'त्यभावप्रतियोगितावच्छेदकता घटत्वनिष्ठा, तच्छून्यत्वस्य सर्वेष्वेव साध्यतावच्छेदकेषु दण्डेषु सत्त्वान्न दण्डिमान् दण्डिसंयोगादित्यत्राव्याप्तिः सम्भवतीति भावः । **प्रमेयदण्डवानिति** । प्रमेयदण्डवान्नास्तीत्यभावप्रतियोगितावच्छेदकताया दण्डमात्रनिष्ठत्वेऽविवादात्तस्य दृष्टान्ततयोल्लेखः । **तद्दण्डवान्नास्तीति** । तथा च यथा प्रमेयदण्डवान्नास्तीत्यभावप्रतियोगितावच्छेदकत्वं दण्डमात्रस्यैव न तु प्रमेयत्वविशिष्टदण्डस्य, प्रमेयत्वस्योपलक्षणतयाऽभावप्रतियोगितावच्छेदककोटौ तद्भानानियमात्, तथा तद्दण्डवान्नास्तीत्यभावप्रतियोगितावच्छेदकत्वं दण्डमात्रस्यैव, तत्त्वन्तु दण्डांशे उपलक्षणमिति भावः । केवलस्य = तत्सामान्यमात्रवृत्तिधर्मातिरिक्तधर्मानवच्छिन्नस्य, **तथात्वस्वीकारादिति** । नच तद्दण्डी नास्तीत्यभावप्रतियोगितावच्छेदकताया दण्डमात्रनिष्ठत्वे हेतुमति दण्ड्यधिकरणे कथं तादृशाभावः सम्भवति, प्रतियोगितावच्छेदकीभूतदण्डावच्छिन्नाधिकरणताया दण्ड्यधिकरणे सत्त्वात्, प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया सार्धमत्यन्ताभावस्य विरोधादिति वाच्यम् । अनायत्या तद्दण्ड्यभावस्य तत्त्वविशिष्टदण्डाव-

दीपिका

तत्वात्, प्रमेयनिष्ठनिरुक्तप्रतियोगितावच्छेदकताया साध्यतावच्छेदकतावच्छेदकजातित्वेतरप्रमेयत्वावच्छिन्नतया तादृशप्रमेयवदभावस्य लक्षणाघटकत्वेनाव्याप्त्यसम्भवात्, अत एव तद्व्यक्तिमान्नास्तीत्याद्यभावमादाय दण्डिमान् दण्डिसंयोगादित्यत्रापि नाव्याप्तिः, तद्व्यक्तिनिष्ठप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकतावच्छेदकदण्डत्वेतर-तद्व्यक्तित्वावच्छिन्नतया तादृशतद्व्यक्तिमदभावस्य लक्षणाघटकत्वादिति ध्येयम् ।

दीधितिः

दण्ड्यादौ साध्ये परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकमतो नाव्याप्तिः ॥२॥

जागदीशी

त्वापत्तेरत आह—ॐदण्ड्यादाविति ॐ। हेतुमति दण्डसामान्याभावसत्त्वात् दण्डत्वमपि तादृशावच्छेदकमेवेत्यत उक्तं,—ॐपरम्परासम्बद्धमिति ॐ।—तथा च स्वाश्रयाश्रयत्वलक्षणपरम्परासम्बन्धेन दण्डत्ववतो दण्डिनः साधनवत्यभावविरहान्नाऽव्याप्तिः, साध्यतावच्छेदकताघटक-

विवृतिः

च्छिन्नाधिकरणतया सार्धमेवेदानीं विरोधितायाः कल्पनीयत्वात्तादृशाधिकरणताया-श्चापरदण्ड्यधिकरणेऽसत्वाद्धेतुमति तादृशाभावसत्त्वे बाधकाभावात् । अन्यथा=तत्त्वविशिष्टदण्डस्य प्रतियोगितावच्छेदकत्वे, एवञ्च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदक–तदितरोभयानवच्छिन्नत्वनिवेशेऽपि दण्डिमान् दण्डिसंयोगादित्यत्र विशिष्टसाध्यतावच्छेदकस्थलेऽव्याप्तिवारणं न सम्भवति, तद्दण्ड्यभावीयप्रतियोगितावच्छेदकताया दण्डत्वमात्रावच्छिन्नतया साध्यतावच्छेदकतावच्छेदक-दण्डत्व-तदितरोभयानवच्छिन्नत्वात्, तद्दण्डी नास्त्येतद्दण्डीनास्तीत्यादेरभावस्य लक्षणघटकत्वेन सर्वेषु दण्डेषु साध्यतावच्छेदकेषु हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वस्य सत्त्वादित्याशयवान् दीधितिकृदाह— **दण्ड्यादाविति** । तथाच तत्तद्दण्ड्यभावप्रतियोगितावच्छेदकताया दण्डमात्रे सत्त्वेऽपि तादृशावच्छेदकताशून्यत्वस्य साध्यतावच्छेदके दण्डत्वे सत्त्वान्न दण्डिमान् दण्डिसंयोगादित्यत्राव्याप्तिरित्याशयः । **हेतुमतीति** । तथाच दण्ड्यधिकरणे भूतलादौ समवायेन दण्डत्वविशिष्टस्य दण्डसामान्यस्याभावसत्त्वात्तादृशाभावप्रतियोगितावच्छेदकत्वं साध्यतावच्छेदकीभूते दण्डत्वेऽक्षतमिति भावः । **इत्युक्तमिति** । दीधितिकृतेति शेषः । परम्परासम्बन्धस्वरूपं दर्शयति- **स्वाश्रयाश्रयत्वेत्यादिना** । स्वं=दण्डत्वम्, **नाव्याप्तिरिति** । समवायसम्बन्धेन दण्डत्वविशिष्टदण्डाभावस्य दण्डिसंयोगवन्निष्ठत्वेऽपि स्वाश्रयाश्रयत्वसम्बन्धेन दण्डत्वविशिष्टस्य दण्डिनो दण्डिसंयोगरूपहेतुमत्यभावविरहान्नाव्याप्तिरिति भावः । ननु तादृशपरम्परासम्बन्धेन दण्डत्वस्य साध्यतावच्छेदकत्वेऽपि समवायेन दण्डत्ववतो दण्डस्य हेतुमति दण्ड्यधिकरणे कथं नाभावः, तथाच तादृशाभावमादायाव्याप्तिरस्त्येवेत्यत आह— **साध्यतावच्छेदकतेति** । तथाच साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्ना

जागदीशी

सम्बन्धावच्छिन्नाया एव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायाः प्रविष्टत्वात्, अन्यथा विषयितया रूपत्वादिविशिष्टज्ञानादेः[1] समवायेनाभावस्य हेतुमति सत्त्वाद्रूपवान् पृथिवीत्वादित्यादावव्याप्तिप्रसङ्गादिति भावः ।

विवृतिः

या हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावीयप्रतियोगितावच्छेदकता तच्छून्यत्वस्य साध्यतावच्छेदके निवेशनीयत्वात्समवायेन दण्डत्वविशिष्टस्य दण्डस्याभावप्रतियोगितावच्छेदकतायाः समवायसम्बन्धावच्छिन्नतया साध्यतावच्छेदकताघटकीभूतस्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नत्वाभावेन न दण्डसामान्याभावस्य लक्षणघटकतयाऽव्याप्तिः सम्भवतीति भावः ।

न च स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नहेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकताया अप्रसिद्धत्वादव्याप्तितादवस्थ्यं, घटपटाद्यभावीयप्रतियोगितावच्छेदकतायाः समवायसम्बन्धावच्छिन्नतया तेषां लक्षणाघटकत्वादिति वाच्यम् । 'साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्ने'त्यनेन साध्यतावच्छेदकताघटकसंसर्गातिरिक्तसम्बन्धावच्छिन्नत्व-साध्यतावच्छेदकनिष्ठत्वोभयाभाववत्प्रतियोगितावच्छेदकताया विवक्षितत्वात्, समवायेन घटत्वनिष्ठावच्छेदकताया एव तादृशत्वेन घटाभावस्यैव लक्षणघटकत्वसम्भवादिति ध्येयम् । तादृशप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशप्रयोजनमाह — अन्यथेति । साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य हेतुमन्निष्ठाभावप्रतियोगिताविशेषणत्वमते वह्निमान्धूमादित्यादिप्रसिद्धस्थलेऽव्याप्तिमनुक्त्वा रूपवान् पृथिवीत्वादित्यत्राव्याप्तिमाह— **विषयितयेति**। तथा च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकतायामनिवेशे; रूपवान् पृथिवीत्वादित्यत्र पृथिवीत्वाधिकरणीभूतायां पृथिव्यां 'विषयितासम्बन्धेन यद्रूपत्ववज्ज्ञानादि तन्नास्ती' त्यभावीयप्रतियोगितावच्छेदकताया रूपत्वे सत्त्वात्तच्छून्यत्वस्य साध्यतावच्छेदके रूपत्वे विरहादव्याप्तिः, तन्निवेशे च विषयितया रूपत्ववान्नास्तीत्यभावीयप्रतियोगितावच्छेदकताया विषयित्वसम्बन्धावच्छिन्नतया साध्यता-

दीपिका

**अन्यथा विषयितया रूपत्वादीति**। नच रूपत्ववदभावीयप्रतियोगितावच्छेदकताया रूपत्वत्वावच्छिन्नत्वेन निरवच्छिन्नत्वाभावात्कथमुक्ताभावस्य लक्षणघटकत्वमिति वाच्यम् । विषयितासम्बन्धेन रूपत्वस्य स्वरूपतो भानाभ्युपगमात्,

१. रूपत्वादिमतो ज्ञानस्येति प्रामाणिकपुस्तके पाठः ।

जागदीशी

यदि च (तत्ताविनिर्मुक्त) शुद्धदण्डव्यक्तेरवच्छेदकत्वावगाहिप्रत्ययान्तरासत्त्वात् तद्दण्डी नास्तीत्यादिप्रतीत्या तत्ताविशिष्टदण्डव्यक्तेरेवावच्छेदकत्वं युक्तं, दण्डी नास्तीत्यादिप्रतीत्यन्यथानुपपत्त्या दण्डस्यावच्छेदकत्वसिद्धौ प्रमेयदण्डवान् नास्तीत्यादावपि तन्मात्रावच्छेदकत्वेनैव सामञ्जस्ये विशिष्टस्य तत्रावच्छेदकत्वाकल्पनात्, तथा च कथमुक्ताव्याप्तिरित्युच्यते,

विवृतिः

वच्छेदकताघटकीभूतसमवायसम्बन्धावच्छिन्नत्वाभावेन तादृशाभावस्य लक्षणाघटकत्वात्तादृशसमवायसम्बन्धावच्छिन्नाया हेतुमन्निष्ठप्रतियोगिव्यधिकरणघटाभावप्रतियोगितावच्छेदकताया घटत्वनिष्ठाया अभावस्य साध्यतावच्छेदके रूपत्वे सत्त्वान्नाव्याप्तिरिति भावः।

दण्ड्यादावित्यत्रादिपदप्रयोजनं प्रदर्शयितुमाशङ्कते-**यदि चेति**। तत्ताविनिर्मुक्तः=तत्ताऽविशेषितः, **प्रत्ययान्तरासत्त्वादिति**। दण्ड्यधिकरणे तद्दण्डी नास्तीत्यादिप्रत्ययातिरिक्तस्य शुद्धदण्डनिष्ठावच्छेदकत्वावगाहिनो 'दण्डी नास्ती'तिप्रत्ययस्यानुदयादित्यर्थः। **प्रतीत्येति**। दण्ड्यधिकरण इत्यादिः। **युक्तमिति**। अयं भावः, हेतुमति दण्ड्यधिकरणे तद्दण्डी नास्तीतिप्रत्ययस्योदयाद्दण्डी नास्तीतिप्रत्ययस्यानुदयात्तद्दण्डी नास्तीतिप्रत्ययस्य दण्डी नास्तीतिप्रत्ययतः किञ्चिद्वैलक्षण्यमङ्गीकर्त्तव्यं, तच्च वैलक्षण्यं तत्त्वविशिष्टदण्डनिष्ठावच्छेदकतावगाहित्वमेव, उभयप्रत्यययोरवैलक्षण्ये दण्ड्यधिकरणे तद्दण्डी नास्तीतिप्रत्ययवद्दण्डी नास्तीतिप्रत्ययस्याप्युदयप्रसङ्गः स्यादतस्तत्तद्दण्ड्यभावीयप्रतियोगितावच्छेदकत्वं तत्त्वविशिष्टदण्डव्यक्तेरेव स्वीकर्त्तव्यमिति।

ननु प्रमेयदण्डवान्नास्तीत्यभावीयप्रतियोगितावच्छेदकत्वमपि प्रमेयत्वविशिष्टदण्डे स्वीक्रियतामित्यत आह-**दण्डी नास्तीति**। अन्यथाऽनुपपत्त्या = शुद्धदण्डनिष्ठावच्छेदकत्वावगाहित्वं विनोपपत्तिविरहेण, दण्डस्य=शुद्धदण्डस्य, तथाच 'प्रमेयदण्डवान्नास्ति'-'दण्डवान्नास्ती'त्यादिप्रतीत्योरेकस्मिन्नेवाधिकरण उदयसंभवेन 'प्रमेय दण्डवान्नास्ती'त्यभावीयप्रतियोगितावच्छेदकत्वं शुद्धदण्डमात्र एव कल्पनीयं बाधकाभावादिति भावः। **कथमुक्ताव्याप्तिरिति**। तथाच दण्डिमति तत्तद्दण्ड्यभाव-

दीपिका

न चायमपसिद्धान्तः, शब्दशक्तिप्रकाशिकायां जगदीशेन तथैव प्रतिपादितत्वात्। केचित्तु साध्यतावच्छेदकताघटकसंसर्गावच्छिन्नत्व-किञ्चिदवच्छिन्नत्वोभयाभाववदव-

जागदीशी

तदा रूपत्वन्यूनवृत्तिजातिमत्त्वान् रूपादित्यादावव्याप्तिः, सर्वासामेव नीलत्व-पीतत्वादिरूपत्वन्यूनवृत्तिजातीनां साधनवन्निष्ठाभावप्रतियोगिताया निरवच्छिन्नावच्छेदकत्वाद्रूपवति नीलो नास्ति पीतो नास्तीत्यादिप्रत्ययादित्या-

विवृतिः

सत्त्वेऽपि तस्य साध्यतावच्छेदकतावच्छेदक-दण्डत्व-तदितर-तत्त्वोभयात्रच्छिन्नावच्छेदकताकप्रतियोगिताकतया लक्षणघटकत्वेनाव्याप्त्यनवकाशाद्दण्डिमान् दण्डिसंयोगादित्यत्र दण्डस्यैव साध्यतावच्छेदकत्वानुसरणेनैवोपपत्तौ दण्डत्वस्य साध्यतावच्छेदकत्वानुसरणं दीधितिकृतां न सङ्गच्छत इति तत्त्वम्। रूपत्वन्यूनवृत्तित्वं = रूपत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति रूपत्वसामानाधिकरण्यम्, रूपत्ववति शुक्लादौ चालनीन्यायेन नीलादीनां भेदसत्त्वान्नीलत्वादिजातीनां तादृशभेदप्रतियोगितावच्छेदकत्वं रूपत्वसामानाधिकरण्यं चास्तीति तादृशनीलत्वादिजातिमतः समवायेन साध्यतास्थले रूपस्य सद्धेतुत्वेन तत्राव्याप्तिरित्यर्थः। अव्याप्तिमुपपादयति-**सर्वासामिति**। **निरवच्छिन्नावच्छेदकताकत्वादि**त्यनेन नीलत्वादिनिष्ठप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकतावच्छेदक-तदितरोभयधर्मानवच्छिन्नत्वं सूचितम्। तथाच हेत्वधिकरणे शुक्लघटे नीलो नास्ति, नीलघटे च शुक्लो नास्तीत्यादिरीत्याऽभावमादाय तदभावप्रतियोगितावच्छेदकतायाः सर्वासु साध्यतावच्छेदकीभूतासु नीलत्वादिजातिपु सत्त्वात्तादृशोभयानवच्छिन्नत्वस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायां निवेशेऽपि भवत्येवाव्याप्तिरिति भावः। अत्र 'जाति'-पदमव्याप्तिदानार्थं, रूपत्वन्यूनवृत्तिधर्मवतः साध्यत्वे तादृशधर्मस्य नीलस्पर्शान्यतरत्वस्य साध्यतावच्छेदकतया तस्य च निरुक्तनीलाद्यभावप्रतियोगितानवच्छेदकत्वेनाव्याप्त्यनवकाशः स्यान्नीलस्पर्शाद्यन्यतराभावस्य रूपादिमत्यसत्त्वात्, न च रूपत्वसमानाधिकरणजातिमत एव साध्यत्वमस्त्विति वाच्यम्। तथा सति गुणत्वस्यापि रूपत्वसामानाधिकरणजातित्वेन साध्यतावच्छेदकतया तस्य च निरुक्तनीलाद्यभावप्रतियोगितानवच्छेदकत्वादव्याप्त्यनवकाशतादवस्थ्यापत्तेर्गुणसामान्याभावस्य रूपादिमत्यसत्त्वात्। न च रूपत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकजातिमतः साध्यत्वमेवोच्यतां किं सामानाधिकरण्यनिवेशेनेति वाच्यम्, तादृशजातेः स्पर्शत्वादिरूपायाः साध्यतावच्छेदकत्वेन तादृशनीलाद्यभावप्रतियोगितानवच्छेदकतयाऽव्याप्त्य

दीपिका

च्छेदकताया एव निरवच्छिन्नावच्छेदकतासम्बन्धेन विवक्षणीयतया विषयितया रूपत्ववदभावस्य लक्षणघटकत्वे बाधकाभाव इति वदन्ति

जागदीशी

शयेन—॥दण्ड्यादा॥वित्यत्रादिपदमुपात्तं, तथा च तत्रापि स्वन्यूनवृत्ति-जात्याश्रयत्वसम्बन्धेन रूपत्वमेव साध्यतावच्छेदकमिति ( नाव्याप्तिरिति ) भावः । ॥साध्यतावच्छेदकमिति॥ । अनुमितिविधेयतावच्छेदकमित्यर्थः । तथा च उक्तव्याप्तिज्ञानाद्दण्ड्यंशे दण्डत्वप्रकारिका दण्डत्ववत्त्वानित्येवानु-

विवृतिः

भावापत्तेरिति संक्षेपः । **स्वन्यूनवृत्तीति** । स्वं = रूपत्वं, एवञ्च निरुक्तनीलाद्य-भावस्य लक्षणघटकत्वेऽपि तत्प्रतियोगितावच्छेदकनीलत्वादिभिन्नत्वस्य रूपत्वरूप-साध्यतावच्छेदके सत्त्वान्न रूपत्वन्यूनवृत्तिजातिमत्त्वान् रूपादित्यत्राव्याप्तिरित्यर्थः पर्यवसितः । दण्डत्वादिकमित्यादिपदप्रयोजनं प्रदर्शयितुं भूमिकामारचयति-**साध्यतावच्छेदकमितीति** । **अनुमितिविधेयतावच्छेदकमित्यनेन** दण्ड-त्वावच्छिन्नविधेयताकानुमितेरेवाङ्गीकरणीयत्वं सूचितम् । कथमित्याकाङ्क्षायामाह-**तथा चेति** । उक्तव्याप्तिज्ञानात् = दण्डिमन्निष्ठप्रतियोगिव्यधिकरणाभावीयतादृश-प्रतियोगितावच्छेदकताशून्यदण्डत्वावच्छिन्नदण्डिसंयोगनिष्ठसामानाधिकरण्यज्ञाना-दित्यर्थः, दण्ड्यंशे=साध्ये, दण्डत्वप्रकारिका=स्वाश्रयाश्रयत्वरूपपरम्परासम्बन्धेन दण्डत्वप्रकारिका, **अनुमिति**रित्यनेनास्यान्वयः, दण्डिमानित्यनुमितौ बाधकमाह—

दीपिका

**स्वन्यूनवृत्तीति** । न चैवं समवायसम्बन्धेन रूपत्वस्य साध्यतावच्छेदकत्व-स्वीकारेणैवोपपत्तौ स्वन्यूनवृत्तिजात्याश्रयत्वस्य सम्बन्धत्वानुसरणं विफलमिति वाच्यम् । परामर्शस्यैव साध्यतावच्छेदकताघटकसम्बन्धेन साध्यतावच्छेदकावच्छिन्न-साध्यनिश्चयस्वरूपतया तेन सम्बन्धेन रूपत्वविशिष्टस्यानुमित्यनुदयप्रसङ्गात्, अनु-मितिं प्रति साध्यतावच्छेदकताघटकसम्बन्धेन साध्यतावच्छेदकविशिष्टसाध्यनिश्चयस्य-प्रतिबन्धकत्वादतो हेतुतावच्छेदकताघटक-साध्यतावच्छेदकताघटक-सम्बन्धयोर्भेद-प्रदर्शनार्थं स्वन्यूनवृत्तिजात्याश्रयत्वस्य सम्बन्धत्वानुसरणमिति वदन्ति ।

हेतुतावच्छेदकताया इतरवारकपर्याप्त्यनिवेशे प्रतियोगितासम्बन्धेन वह्निहेतुक-महानसीयवन्ह्यभावभेदसाध्यकस्थलेऽव्याप्तिः । प्रतियोगितया महानसीयवन्ह्यधिकरणे महानसीयवन्ह्यभावे साध्याभावस्य महानसीयवन्ह्यभावभेदाभावस्य सत्त्वात्, एवञ्च धूमत्वावच्छिन्न-धूमत्वेतरधर्मानवच्छिन्नाधिकरणत्वाप्रसिध्या वह्निमान्धूमादित्यत्रा-व्याप्तिर्जगदीशेनाशङ्कितेत्यवधेयम् ।

जागदीशी

मितिर्न तु 'दण्डिमानि'ति दण्डप्रकारिकापि, दण्डस्य व्यापकतावच्छेदकत्वेनाग्रहात्, कारणबाधेन तदवच्छिन्नविधेयकानुमित्यसम्भवादिति ।

वस्तुतो दण्डत्वस्य साध्यतावच्छेदकत्वे 'दण्डिमान्' इत्यनुमितिर्न स्यात्, दण्डानां व्यापकतानवच्छेदकत्वादित्यस्वरसादेव ❀दण्डत्वादिक❀ मित्यत्राप्यादिपदमुपात्तं, तेन तत्तद्दण्डव्यक्तीनामेव स्ववृत्तिदण्डत्वजात्याश्रयाधिकरणत्वलक्षणपरम्परासम्बन्धेन साध्यतावच्छेदकत्वलाभात् 'दण्डिमान्' इत्यनुमितेर्नानुपपत्तिरिति तत्त्वम् ।

केचित्तु 'साध्य-साधनभेदेन व्याप्तिग्रहानुमित्योः कार्य्य-कारणभाव-

विवृतिः

दण्डस्येति । अवच्छेदकत्वेनाग्रहादिति । निरुक्तव्यापकतावच्छेदकत्वस्य दण्डत्वेऽसत्त्वादिति भावः । कारणबाधेनेति । तथा च यस्मिन्धर्मे हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वज्ञानं तद्धर्मावच्छिन्नस्यैवानुमितिर्भवति, दण्डे तादृशप्रतियोगितानवच्छेदकत्वज्ञानविरहान्न दण्डावच्छिन्नस्यानुमितिर्भवितुमर्हतीति दण्डिमानित्याकारकानुमितिविलोपापत्तिरिति भावः ।

निरुक्तार्थं स्वयमेव दर्शयति—वस्तुत इति । एवञ्च तद्धर्मावच्छिन्नविधेयताकानुमितौ तद्धर्मे हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वज्ञानं कारणमिति फलितम् । स्ववृत्तीति । तद्दण्डवृत्तीत्यर्थः । परस्परासम्बन्धेनेति । एवञ्च न संयोगसम्बन्धेन दण्डस्य साध्यतावच्छेदकत्वं, तथा सति पूर्वोक्तरीत्या तत्तद्दण्डाभावमादायाव्याप्तिप्रसङ्गः स्यात्, इत्थञ्च तद्दण्डवृत्तिदण्डत्वजात्याश्रयाधिकरणत्वसम्बन्धेन दण्डविशिष्टस्य दण्डिनः साधनवति दण्डिसंयोगाधिकरणे गृहादावभावविरहाद्दण्डस्य साध्यतावच्छेदकत्वेऽपि न पूर्वोक्तरीत्या दण्डिमान् दण्डिसंयोगादित्यत्राव्याप्तिः सम्भवतीति तात्पर्यम् ।

कारणभेदेन 'दण्डिमान्,' 'दण्डत्ववत्त्वान्' इत्यनुमित्योर्नानुपपत्तिरिति केषांचिन्मतमुपन्यस्यति—केचित्त्विति । यथा वह्निसाध्यकानुमितौ धूमव्यापकवह्निसामानाधिकरण्यज्ञानं कारणम्, एवमालोकसाध्यकानुमितौ धूमव्यापकालोकसामानाधिकरण्यज्ञानं विभिन्नमेव कारणं, तथा हेतुभेदेऽपि तत्तद्धेतुनिष्ठसाध्यसामानाधिकरण्यज्ञानं विभिन्नमेव कारणमित्याशयेनाह—साध्य-साधन-भेदेनेति । कार्यकारणभावभेदात्=कार्यत्वकारणत्वयोर्भेदात्, यत्र दण्डत्वादिविशिष्टं साध्यतावच्छेदकं = दण्डस्य यत्र साध्यतावच्छेदकत्वं, तथा च दण्डिमानित्यनुमितौ हेतुमन्निष्ठप्रतियोगिव्यधि-

### जागदीशी

भेदात् यत्र दण्डत्वादिविशिष्टं विधेयतावच्छेदकं, तत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतानवच्छेदको यो धर्मस्तद्विशिष्टावच्छिन्नसामानाधिकरण्यरूपैव व्याप्तिः तद्विशिष्टावच्छिन्नविधेयकानुमितिप्रयोजिका, यत्र तु परम्परया दण्डत्वादिकमेवानुमितौ विधेयतावच्छेदकं तत्र हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदको यो धर्मः परम्परया तदवच्छिन्नसामानाधिकरण्यरूपैव व्याप्तिरनुमितिप्रयोजिकेति,—सामानाधिकरण्यांशे दण्डादेः प्रवेशाप्रवेशकृतो 'दण्डिमान्' 'दण्डत्ववत्त्वान्' इत्यनुमित्योर्दण्डादिविधेयकत्वनियम' इत्याहुः ।

### विवृतिः

करणाभावप्रतियोगितावच्छेदकतावच्छेदकभिन्नं यत्साध्यतावच्छेदकतावच्छेदकं, तद्विशिष्टावच्छिन्नसामानाधिकरण्यं प्रयोजकम् , यद्यपि तत्तद्दण्डवान्नास्तीत्यभावीयप्रतियोगितावच्छेदकतावच्छेदकं—तत्त्वं, दण्डत्वञ्च, तद्भिन्नत्वं साध्यतावच्छेदकतावच्छेदके दण्डत्वे नास्ति, तथापि निरुक्तहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदक-तदितरोभयधर्मानवच्छिन्नत्वं निवेश्य तद्दण्डवान्नास्तीत्यभावस्य वारणसम्भवान्नानुपपत्तिः । **यत्र तु परम्परयेति ।** स्वाश्रयाश्रयत्वरूपपरम्परासम्बन्धेनेत्यर्थः, विधेयतावच्छेदकं = साध्यतावच्छेदकं, तथा च दण्डत्ववत्त्वानित्यनुमितौ हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकं यद्दण्डत्वरूपं साध्यतावच्छेदकं, स्वाश्रयाश्रयत्वसम्बन्धेन तद्विशिष्टस्य दण्डिनः सामानाधिकरण्यं प्रयोजकं वक्तव्यम् । **प्रवेशाप्रवेशकृत इति ।** दण्डिमानित्यनुमितिप्रयोजकव्याप्तिघटकसामानाधिकरण्यघटकतया दण्डत्वविशिष्टस्य दण्डस्य प्रवेशः, दण्डत्ववत्त्वानित्यनुमितिप्रयोजकतादृशसामानाधिकरण्यघटकतया दण्डादेर्न प्रवेशस्तत्र परम्परासम्बन्धेन दण्डत्वस्य दण्डिनि साध्ये भानात्कारणभेदेन कदाचिद्दण्डिमानिति, कदाचिच्च दण्डत्ववत्त्वानित्युभयाकारानुमितिः सम्भवतीति भावः । सामानाधिकरण्यांशे साध्यतावच्छेदकादेर्येन रूपेण भानं तेन रूपेण साध्यतावच्छेदकविशिष्टस्यैवानुमितिरित्यभिप्रायेण 'सामानाधिकरण्यांशे प्रवेशाप्रवेशकृत' इत्यभिहितम् , अन्यथा 'तादृशप्रतियोगितावच्छेदकतावच्छेदकत्व—प्रतियोगितावच्छेदकत्वयोः प्रवेशाप्रवेशकृत' इत्यनुक्तौ न्यूनता स्यादिति ध्येयम् ।

जागदीशी

यत्तु 'दण्डत्वधर्मिकनिरुक्तानवच्छेदकत्वज्ञानस्यैव कार्य्यतावच्छेदकं दण्डा[1]वच्छिन्नविधेयकानुमितित्वमित्यनुमितेर्दण्डप्रकारकत्वं नानुपपन्नम्' इति, तत्तुच्छं, परम्परया दण्डत्वावच्छिन्नविधेयकानुमितित्वस्यापि तादृशज्ञानकार्य्यतावच्छेदकतया सर्वदैव 'दण्डिमान्' 'दण्डत्ववत्त्वान्' इत्युभयाकारानुमित्यापत्तेः, उभयधर्मावच्छिन्नस्यैव सामग्रीसम्भवादिति दिक् ।

अपरे तु 'नोक्तव्याप्तिज्ञानं 'दण्डिमान्' वह्निसंयोगवान्' इत्याद्यनुमितौ हेतुः, किन्तु वक्ष्यमाणमन्योऽन्याभावघटितव्याप्तिज्ञानम्, अत एव 'यथायथमि'त्यादिग्रन्थोऽपि सङ्गच्छत' इत्याहुः ।

विवृतिः

**यत्त्विति । दण्डत्वधर्मिकेति ।** दण्डत्वविशेष्यकेत्यर्थः । **निरुक्तानवच्छेदकत्वज्ञानस्य** = प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वज्ञानस्य, **कार्यतावच्छेदकमिति ।** तथा च दण्डिमानित्यनुमितित्वावच्छिन्नं प्रति "दण्डत्वं हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदक" मित्याकारकज्ञानं कारणमतो दण्डिमानित्यनुमितेर्नानुपपत्तिरिति भावः । **तत्तुच्छमिति ।** अयं भावः- 'दण्डत्वं हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदक' मिति ज्ञानस्य दण्डिमानित्याकारकानुमितिहेतुत्वे दण्डत्ववत्त्वानित्यनुमितावपि तस्यैव ज्ञानस्य हेतुत्वं वाच्यं, तथाच दण्डिमानित्यनुमितित्वावच्छिन्नस्य दण्डत्ववत्त्वानित्यनुमितित्वावच्छिन्नस्य च कारणं,–यत्तादृशं ज्ञानं, तत्सत्त्वे 'दण्डिमान्' 'दण्डत्ववत्त्वानि'त्येवानुमितिः सर्वदा स्यात्, उभयानुमित्योः कारणस्यैक्यादिति ।

**अपरे त्विति । नोक्तव्याप्तिज्ञानमिति ।** प्रतियोगिव्यधिकरणहेतुसन्निष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यज्ञानमित्यर्थः । **वक्ष्यमाणमिति ।** हेतुमन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकसाध्यसामानाधिकरण्यरूपमित्यादिः । **यथायथेति ।** यादृशानुमितौ यादृशं व्याप्तिज्ञानं सम्भवति तादृशमेव व्याप्तिज्ञानं तत्र हेतुरिति तद्ग्रन्थाशयः । **आहुरि**त्यस्वरससूचनाय, तद्बीजन्तु निरुक्तान्योन्याभावगर्भव्याप्तिज्ञानस्यानुमितिहेतुत्वेपि तद्दण्डवान्नैतद्दण्डवान्नेत्यादिभेदमादाय निखिलस्यैव दण्डिनः साध्यस्य प्रतियोगितावच्छेदकतया साध्ये तादृशाभावप्रतियोगितानवच्छेदकत्वस्य दुर्लभतया दण्डिमान् दण्डिसंयोगादित्यत्रान्योन्याभावगर्भव्याप्तेरेवासम्भवः, न च यद्रूपविशिष्टसाध्यतावच्छेदकवि-

१. दण्डित्वावच्छिन्नेति कलिकातामुद्रितपाठः ।

जागदीशी

नव्यास्तु—'दण्डिमान्' इत्यनुमितौ संयोगेन न दण्ड्यादेः प्रकारकत्वं, किन्तु स्ववृत्तिपुरुषत्वावच्छिन्नाधिकरणतासम्बन्धेन, न चैवमनुभवापलापापत्तिरिति वाच्यम्; दीधितिकृन्मतेऽपि दण्डस्य साध्यतावच्छेदकधर्मविधया, संयोगस्य च साध्यतावच्छेदकताघटकसंसर्गविधयाऽवगाहित्वद्वयापलापापत्तेः (एवञ्च दण्डत्वमित्यत्र भावार्थो न विवक्षितः। *परम्परासम्बद्धं* तादृशसम्बन्धावच्छिन्नमित्यर्थः। तथाच दण्ड एव साध्यतावच्छेदको हेतुमन्निष्ठाभावीयतादृशसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदक इति प्रति-

विवृतिः

शिष्टं साध्यं हेतुमन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकं, तद्रूपविशिष्टसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यमेव व्याप्तिर्वाच्या, दण्डत्वविशिष्टदण्डावच्छिन्नस्य दण्डिनोऽन्योन्याभावस्य दण्डिमति हेत्वधिकरणेऽसत्त्वादिति वाच्यम्। तथा सति निरुक्तान्योन्याभावगर्भव्याप्तिज्ञाने लाघवानवकाशेन स्वमतस्यैव सम्यक्त्वादिति ।

**संयोगेन न दण्ड्यादेः प्रकारकत्वमिति**। संयोगस्य न साध्यतावच्छेदकसंसर्गत्वमिति भावः। **स्ववृत्तीति**। स्वं = दण्डी, तद्वृत्ति यत्पुरुषत्वं तदवच्छिन्नस्याधिकरणत्वसम्बन्धेनेत्यर्थः। **अनुभवेति**। तथा च दण्डिमानित्यनुमितौ संयोगेन दण्डिनः साध्यत्वमिति सर्वानुभवस्यापलापः स्ववृत्तिपुरुषत्वावच्छिन्नाधिकरणत्वसम्बन्धेन दण्डिनः साध्यत्वे स्पष्ट एवेत्यर्थः। धर्मविधया=धर्मत्वेन, संसर्गविधया=संसर्गत्वेन ।

नव्यानामयमाशयः—दण्डिमानित्यनुमितौ मन्मते संयोगस्य साध्यतावच्छेदकसंसर्गावगाहित्वस्यैकस्यैवापलापः, परं दीधितिकृन्मते तु दण्डस्य साध्यतावच्छेदकत्वावगाहित्वस्य, संयोगस्य साध्यतावच्छेदकताघटकसंसर्गतावगाहित्वस्य च, द्वयोरपलाप इति दीधितिकृन्मतापेक्षया मन्मतस्य सम्यक्त्वमिति ।

न चैतन्मते दण्डस्य साध्यतावच्छेदकत्वे तद्दण्डी नास्त्येतद्दण्डी नास्तीत्याद्यभावमादाय निखिलस्यैव दण्डस्य हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकतयाऽव्याप्तिरिति वाच्यम्। समवायेन वह्न्यभावमादायाव्याप्तिवारणार्थं हेतुमन्निष्ठाभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशनीयतया दण्डिवृत्तिपुरुषत्वावच्छिन्नाधिकरणत्वसम्बन्धेन तद्दण्डिनः कुत्राप्यसत्त्वेन तत्तद्दण्ड्यभावस्य तेन सम्बन्धेन प्रतियोगिव्यधिकरणत्वासम्भवात्, न च स्ववृत्तिपुरुषत्वाव-

दीधितिः

इत्थञ्च इदं द्रव्यं गुणकर्म्मान्यत्वे सति सत्त्वादित्यादौ सत्त्वा-

जागदीशी

योगिताया वक्ष्यमाणसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणादेव नाव्याप्ति'रिति प्राहुः ॥२॥

यद्रूपविशिष्टस्य फलमाह, ❀इत्थञ्चेति❀ चोऽवधारणे । इत्यादौ = इत्यादिन्यायस्थलीयहेतौ, तथा च न्यायः पक्षनिर्देशं विना न सम्भवतीत्यत इदम्पदेन तन्निर्देशः, एवमग्रेऽपि ।

यत्तु 'द्रव्ये धर्मिणि तादात्म्येन गुणकर्मणोः साध्यताभ्रमं निरसितुमिदमिति पक्षनिर्देश' इति, तन्मन्दम्, एवमपि इदन्त्वविशिष्ट-

विवृतिः

च्छिन्नाधिकरणत्वसम्बन्धेन दण्डव्यतिरिक्तस्यावर्त्तमानतया तेन सम्बन्धेन कस्याप्यभावस्याप्रसिध्याऽव्याप्तितादवस्थ्यमिति वाच्यम् । साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितापदेन साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्व—साध्यनिष्ठत्वोभयाभाववत्प्रतियोगिताया विवक्षितत्वात्संयोगेन घटाभावीयप्रतियोगिताया एव तथात्वेन लक्षणघटकत्वसम्भवादिति दिक् ॥२॥

यद्रूपविशिष्टस्येति । हेतुतावच्छेदकावच्छिन्नार्थकस्येत्यर्थः । अवधारण इति । तथा चेत्थमेवेत्यर्थो बोध्यः । अभावविशेषणीभूतहेतुसामानाधिकरण्यस्य हेतुतावच्छेदकावच्छिन्ननिरूपकतानिरूपिताधिकरणतावद्वृत्तित्वरूपार्थकरणादेवेति यावत् । तथा चेति । परार्थानुमानस्य पक्षघटितप्रतिज्ञादिघटितन्यायजन्यशाब्दबोधप्रयोज्यतया पक्षनिर्देशस्यावश्यकत्वमिति भावः । साध्यताभ्रमं = द्रव्यं,—गुणकर्मेति पक्षे साध्यभ्रमं, तथाचेदम्पदानुपादाने द्रव्यं,—गुणकर्म,—अन्यत्वे सति सत्त्वादित्यादिसाध्यत्व—हेतुत्वभ्रमः शिष्यस्य मा भवत्विति पक्षनिर्देश 'इद'मित्यनेन दीधितिकृता कृत इति भावः । इदम्पदोपादानेऽपि 'इदं द्रव्यं'—गुणकर्म—अन्यत्वे सति सत्त्वादिति साध्यहेतुत्वयोर्भ्रमः पुनरपि सम्भवत्येवेति "इदम्पदोपादानं तादृशभ्रमनिवारक" मित्ययुक्तमित्याशयेन दूषयति—तन्मन्दमिति ।

दीधितौ—द्रव्यपदं द्रव्यत्ववदित्यर्थकमन्यथा द्रव्यमित्युक्तौ द्रव्यत्वस्यैवोपस्थिततया साध्यतावच्छेदकद्रव्यत्वत्वस्यानुपस्थिततया तस्य गुणनिष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि अव्याप्त्यभावापत्तेः ।

दीधितिः

द्यधिकरणगुणादिनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि द्रव्यत्वादेर्नाव्याप्तिः, साधनस्य विशिष्टसत्त्वादेर्गुणादावधृत्तेः ॥३॥

जागदीशी

द्रव्ये गुणकर्मणोः साध्यताभ्रमस्यानिरासादिति । (❀प्रतियोगित्वेऽपीति❀—प्रतियोगितावच्छेदकावच्छिन्नत्वेऽपीत्यर्थः । ) ❀गुणादावधृत्तेरिति❀ । गुणादावभावादित्यर्थः; तथा च हेतुतावच्छेदकावच्छिन्नाधिकरणत्वं न गुणस्येति भावः । यद्यप्यवश्यक्लृप्ताभिपर्वतत्व-चत्वरत्वादि-तत्तद्धर्म्मविशिष्टतत्तद्धूमत्वाद्यवच्छिन्नाधिकरणताव्यक्तिभिरेव 'धूमवानि'तिप्रत्ययोपपत्तौ धूमत्वाद्यवच्छिन्नाधिकरणतायां

विवृतिः

प्रतियोगितावच्छेदकावच्छिन्नत्वेपि =प्रतियोगितावच्छेदकसाध्यतावच्छेदकवत्त्वेपीत्यर्थः। यथाश्रुतार्थे द्रव्यत्वनिष्ठस्य तस्य दीधितिकृन्मतेऽव्याप्त्यप्रयोजकत्वात्, तन्मते साध्यतावच्छेदके हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्यैवाव्याप्तिप्रयोजकतायाः पूर्वमभिहितत्वात् । **तथा चेति।** हेतुतावच्छेदकावच्छिन्नाधिकरणत्वं=हेतुतावच्छेदकीभूत–वैशिष्ट्य –सत्तात्व–पर्याप्तावच्छेदकताकनिरूपकताकाधिकरणत्वं न गुणस्येत्यर्थः ।

हेतुतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नाधिकरणत्वनिवेशे तादृशाधिकरणाप्रसिद्ध्या वह्निमान्धूमादित्यत्राव्याप्तिरित्याशङ्कते–**यद्यप्यवश्यक्लृप्ताभिरिति।** अस्याधिकरणताभिरित्यनेनान्वयः। पर्वतत्वादिवैशिष्ट्यं=पर्वतत्वादिसामानाधिकरण्यं, तच्च धूमविशेषणं, न तु धूमत्वविशेषणं, गौरवान्निष्प्रयोजनकत्वाच्चेति ध्येयम्। धूमत्वावच्छिन्नाधिकरणताया अस्वीकारेऽपि पर्वतत्वादिविशिष्टधूमत्वाद्यवच्छिन्नाधिकरणतानामवश्यं स्वीकरणीयतया तासामवश्यक्लृप्तत्वं बोध्यम्। **प्रत्ययोपपत्ताविति ।** धूमत्वपर्याप्तावच्छेदकताकाधिकरणताया अस्वीकारेऽपि तत्तद्धूमत्वावच्छिन्नाधिकरणता यत्र तत्रैव 'धूमवानि'तिप्रतीतेः सम्भवादिति भावः।

इदमत्र तत्त्वम्–धूमत्वपर्याप्तावच्छेदकताकाधिकरणतामात्रस्य 'धूमवानि'तिप्रतीत्यर्थं स्वीकारे तत्तद्धूमत्वावच्छिन्नाधिकरणतायाश्चास्वीकारे, 'पर्वतत्वविशिष्टधूमवन्महानसं' 'महानसत्वविशिष्टधूमवान्पर्वत'इत्यादिप्रतीत्यापत्तिः,–धूमत्वावच्छिन्नाधिकरणतायाः पर्वते, महानसेऽपि च सत्त्वादित्यवश्यन्तत्तद्धूमत्वावच्छिन्नाधिकरणत्वं तत्तत्प्रतीत्यभावानुरोधेन स्वीकर्त्तव्यं, एवञ्च हेतुतावच्छेदकतापर्याप्त्यधिकरणीभूतधूमत्वाव-

जागदीशी

**मानाभावात्, वह्निमान् धूमादित्यादावव्याप्तिः, (हेतुतावच्छेदकीभूत) धूमत्वाद्यवच्छिन्नाधिकरणत्वाप्रसिद्धेः, तथाऽपि हेतुतावच्छेदकधर्मे,—स्वाश्रया-**

विवृतिः

च्छिन्नाधिकरणताया अप्रसिद्धत्वाद्वह्निमान्धूमादित्यत्राव्याप्तिरस्त्येवेति । **मानाभावादिति ।** धूमत्वगतैकत्वस्य किञ्चिन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वे मानाभावादित्यर्थः । तेन न सिद्ध्यसिद्धिभ्यां व्याघातः शङ्कनीयः ।

इदमत्रावधेयम्—यथा धूमत्वावच्छिन्नाधिकरणत्वं पूर्वोक्तयुक्त्या नाङ्गीकर्त्तव्यन्तथा विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वमपि न स्वीकर्त्तव्यं, घटत्वादिविशिष्टसत्तात्वाद्यवच्छिन्नाधिकरणताव्यक्तिभिरेव 'विशिष्टसत्तावानि'तिप्रतीतिनिर्वाहसम्भवात्, 'घटत्वविशिष्टसत्तावान् पटः', 'पटत्वविशिष्टसत्तावान्घट' इत्यादिप्रतीतिवारणाय तादृशघटत्वादिविशिष्टसत्तात्वाद्यवच्छिन्नाधिकरणताव्यक्तीनामप्यवश्यक्लृप्तत्वसम्भवात् । न च 'गुणो गुणकर्मान्यत्वविशिष्टसत्तावानि'तिप्रतीतिवारणायावश्यं वैशिष्ट्य-सत्तात्वावच्छिन्नाधिकरणत्वमभ्युपेयमिति वाच्यम् । घटत्वादिविशिष्टसत्तात्वावच्छिन्नाधिकरणताव्यक्तीनामेव 'गुणकर्मान्यत्वविशिष्टसत्तावानि'तिप्रतीतिनियामकतया गुणे तादृशाधिकरणतानामसत्त्वेन तादृशप्रतीत्यसम्भवादिति ।

हेतुतावच्छेदकावच्छिन्नाधिकरणत्वं न हेतुतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नाधिकरणत्वं, किन्तु पारिभाषिकमेवेत्याशयेन समाधत्ते-**तथापीति । हेतुतावच्छेदकधर्मे** इत्यत्र सप्तम्यर्थो वृत्तित्वमन्वयश्चास्य 'व्यतिरेक' इत्यनेन । द्वयो-

दीपिका

**धूमत्वावच्छिन्नाधिकरणतायां मानाभावादिति ।** अत्र धूमत्वनिष्ठैकत्वमधिकरणताविशिष्टान्यत्, 'धूमवानि'तिप्रतीतिमत्त्वात् इत्येवमर्थः, वैशिष्ट्यञ्च—स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, प्रतीतिमत्त्वञ्च,—स्वविषयाधिकरणतानिरूपितनिरूपकतावत्त्वसम्बन्धेन, निरूपकतावत्त्वञ्च—स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व,—स्वावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन ।

**हेतुतावच्छेदक धर्मे इति ।** अधिकरणविशिष्टाधिकरणमेव हेत्वधिकरणं बोध्यं, वैशिष्ट्यञ्च—स्वतादात्म्य, स्वनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्व—स्वसामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वैतदुभयाभाववद्धेतुतावच्छेदकाश्र-

## दीपिका

याधिकरणत्वोभयसम्बन्धेन। एतेन—तत्त्वमेव हेत्वधिकरणत्वमित्यनुक्त्वा तथाविधहेतुतावच्छेदकाश्रयस्याधिकरणमेवेत्याद्यभिधानमसङ्गतमित्यादिपूर्वपक्षोऽपि निरस्तः।

ननु हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतेत्याद्युक्तावपि द्रव्यं घटत्वपटत्वोभयस्मादित्यत्रातिव्याप्तिः, उभयत्वाश्रयीभूतघटत्वाधिकरण—घट—निष्ठाधिकरणतानिरूपकतानवच्छेदकत्वस्य तादृशोभयत्वे सत्त्वेऽपि, सामान्यतोऽधिकरणतानिरूपितानिरूपकतानवच्छेदकत्वस्य तत्रासत्त्वाद्घटस्य,—पटस्यापि,—हेत्वधिकरणत्वेन धर्तुं शक्यत्वादिति चेन्न। स्वाश्रयाधिकरणीभूतं यदित्यनेन स्वावच्छिन्नप्रमीयप्रकारतानिरूपितविशेष्यतावद् यदित्यस्य विवक्षितत्वात्। तथा च,—उभयत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताया घटपटादावसत्त्वेन नातिव्याप्तिरिति भावः। न चैवं लाघवाद्धेतुतावच्छेदकं यन्निष्ठविशेष्यतानिरूपितप्रमीयप्रकारतावच्छेदकतापर्याप्त्यधिकरणं तदेव हेतुतावच्छेदकावच्छिन्नाधिकरणमित्येवोच्यतां किं गुरुतरनिवेशेनेति वाच्यम्। द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्र 'गुणकर्मान्यत्वोपलक्षितसत्तावान् गुण' इत्याकारकप्रमामादाय गुणस्यापि हेत्वधिकरणत्वसम्भवादव्याप्त्यापत्तेः।

ननु हेतुतावच्छेदकधर्मः स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्व—सामान्यतोऽधिकरणतानिरूपकतानवच्छेदकत्वैतदन्यतरवान् स्यात्तदेव हेतुतावच्छेदकावच्छिन्नाधिकरणमित्येवोच्यतां, किं गुरुतरोभयाभावनिवेशेन, यदि चान्यतरत्वस्य भेदद्वयगर्भतयोभयाभावापेक्षया लाघवावकाशो न सम्भवतीति मन्यते, तदा हेतुतावच्छेदकधर्मः स्वरूपसम्बन्धेन निरुक्तद्वित्वाश्रयवान्भवतीत्येवं क्रमेणोभयाभावापेक्षया लाघवसम्भवात् कथं तन्नोक्तमिति चेन्न, वाच्यत्वसाध्यकविषयितासम्बन्धेन घटहेतुकेऽव्याप्त्यापत्तेः, घटत्वाश्रयाधिकरणतानिरूपिततादृशसम्बन्धावच्छिन्ननिरूपकतावच्छेदकत्व—सामान्यतोऽधिकरणतानिरूपकतानवच्छेदकत्वोभयवतोऽप्रसिद्धेः, मन्मते तु स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वस्य—स्वाश्रयाधिकरणं यत्तदन्यत्वविशिष्टघटत्वादौ प्रसिद्धतयाऽव्याप्त्यभाव इति ध्येयम्।

ननु हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानिरूपितानिरूपकतानवच्छेदकत्वविशिष्ट — सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वाभावः, तदेव हेतुतावच्छेदकावच्छिन्नाधिकरणमित्येवोच्यतां, किमुभयाभावनिवेशेनेति चेन्न, सर्वत्र निरूपकताया हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वेन विवक्षणीयतया वह्निसाध्यकतद्धूमप्रतियोगिकसंयोगेन धूमहेतावव्याप्त्यापत्तेः। तद्धूमप्रतियोगिकसंयोगसम्बन्धावच्छिन्ननिरूपकतानवच्छेदकत्वविशिष्टतादृशसम्बन्धावच्छिन्न—सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वाप्रसिद्धेः।

जागदीशी

धिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वस्य, (सामान्यतः) अधिकरण-तावच्छेदकत्वस्य च द्वयोर्व्यतिरेकः, तथाविधं हेतुतावच्छेदकाश्रयाधिकरण-मेव 'हेतुतावच्छेदकावच्छिन्नाधिकरणे' त्यनेन विवक्षितं, वह्निमान् धूमादि-त्यादौ च तादृशं हेत्वधिकरणं धूमस्याधिकरणमात्रं, द्रव्यं विशिष्टसत्त्वा-

विवृतिः

व्यतिरेकः = उभयाभावः, स्वं = हेतुतावच्छेदकं, यत्पदेन हेत्वधिकरणत्वेनाभिमतं ग्राह्यम्, अग्रेऽपि तथाविधेत्यत्र तत्पदेन हेत्वधिकरणत्वेनाभिमतमेव ग्राह्यम् । अधिकरणतानवच्छेदकत्वस्य=अधिकरणतानिरूपकतानवच्छेदकत्वस्य, (सामान्यत-इति । किञ्चिन्निष्ठेत्यर्थः ।) अधिकरणतावच्छेदकत्वस्य=अधिकरणतानिरूपकतावच्छेद-कत्वस्य, तथा च हेतुतावच्छेदके हेतुतावच्छेदकाश्रयाधिकरणीभूतं यत्तन्निष्ठाधिकरण-तानिरूपकतानवच्छेदकत्व — किञ्चिन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वैतदुभया-भावस्तथाविधहेतुतावच्छेदकाश्रयस्याधिकरणमेव हेत्वधिकरणमिति पर्यवसितम्, वह्निमान्धूमादित्यत्र हेतुतावच्छेदके धूमत्वे—धूमत्वाश्रयपर्वतीयधूमाधिकरणपर्वतनि-ष्ठाधिकरणतानिरूपकतानवच्छेदकत्वस्य सत्त्वेऽपि, किञ्चिन्निष्ठाधिकरणतानिरूपकता-च्छेदकत्वस्यासत्त्वादुभयाभावस्याक्षततया निरुक्तरीत्या पर्वतादेर्धूमाधिकरणत्वेन धर्त्तुं शक्यतया तत्र च वह्न्यभावासत्त्वान्नाव्याप्तिरित्याशयेनाह— तादृशहेत्वधि-करणं धूमस्याधिकरणमात्रमिति । द्रव्यमिति । तथा च द्रव्यं विशिष्टसत्त्वा-

दीपिका

ननु हेतुतावच्छेदकधर्मो यन्निष्ठभेदप्रतियोगितावच्छेदकतानवच्छेदकस्तदेव हेत्व-धिकरणमित्येवोच्यतां, किमुभयाभावनिवेशेनेति चेन्न, द्रव्यं घटपटोभयत्वादित्यत्राव्या-प्त्यापत्तेः, घटपटादिनिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकत्वस्य तादृशोभयत्वत्वे सत्त्वाद्धेत्वधिकरणत्वानुपपत्तेः ।

नच हेतुमत्त्वेन हेत्वधिकरणस्य प्रवेशः क्रियतां, न तु हेत्वधिकरणत्वेन, न हि हेतुमत्त्वमेव हेत्वधिकरणत्वमिति नियमः, तथा सति रूपत्वन्यूनवृत्तिजातिमतः साध्य-तायां नील-पीताद्यभावमादायाव्याप्तिदानासङ्गत्यापत्तेः, जात्यधिकरणत्वस्वरूपजात्यधि-करणत्वस्य तादृशाभावप्रतियोगितानवच्छेदकत्वादिति वाच्यम् । घटस्य तादात्म्येन साध्यतायां घटपटोभयत्वस्य पर्याप्तिसम्बन्धेन हेतुत्वेऽतिव्याप्त्यापत्तेः, पर्याप्तिसम्बन्धेन हेतुमत्त्वस्य व्यासज्यवृत्तितया तादृशहेतुमति घटपटोभयस्मिन् घटभेदाविरहात्, व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशभेदानभ्युपगमात्, मन्मते तु हेत्वधिकरण-त्वस्याव्यासज्यवृत्तितया तादृशोभयत्वाधिकरणतायाः पटेऽपि सत्त्वेन तत्र घटभेदस्य सत्त्वान्नाव्याप्तिः ।

जागदीशी

दित्यादौ तादृशहेत्वधिकरणं द्रव्यमेव न तु गुणादि, विशिष्टसत्त्वात्वे तन्निष्ठाधिकरणतानवच्छेदकत्वस्य, (सामान्यतः) अधिकरणतावच्छेदकत्वस्य च द्वयोः सत्त्वादिति ध्येयम्।

विवृतिः

दित्यत्र वैशिष्ट्य-सत्तात्वरूपहेतुतावच्छेदके हेतुतावच्छेदकीभूतसत्तात्वाश्रयीभूतायाः सत्ताया यदधिकरणं गुणस्तन्निष्ठाधिकरणतानिरूपकतानवच्छेदकत्वस्य सत्त्वेन, किञ्चित्पदेन द्रव्यमादाय तन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वस्य च सत्त्वेनोभयोः सत्वान्न गुणस्य पारिभाषिकं विशिष्टसत्तारूपहेतोरधिकरणत्वं सम्भवति, अपि तु द्रव्यस्यैव, वैशिष्ट्य-सत्तात्वरूपहेतुतावच्छेदके तादृशसत्तात्वाश्रयसत्ताधिकरणद्रव्यनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वस्यासत्त्वात्तादृशो-भयाभावस्याक्षतत्वात्, एवञ्च तादृशहेत्वधिकरणीभूते द्रव्ये साध्यीभूतस्य द्रव्यत्वस्याभावविरहान्नाव्याप्तिरिति भावः। स्वाश्रयाधिकरणत्वपर्यन्तानिवेशे—प्रमेयवान् गगनादित्यत्र विरुद्धेऽतिव्याप्तिः, वह्निमान्धूमादित्यत्र जलादेर्हेत्वधिकरणत्वापत्त्याऽव्याप्तिप्रसङ्गश्चातस्तन्निवेशनम्।

अत्र स्वाश्रयनिष्ठनिरूपकत्वमवश्यं हेतुतावच्छेदकसम्बन्धावच्छिन्नं वक्तव्यमन्यथा वह्निमान्धूमादित्यत्र जलादेरपि हेत्वधिकरणतापत्तिः, कालिकसम्बन्धावच्छिन्नधूमत्वाश्रयधूमनिष्ठनिरूपकतानिरूपितजलनिष्ठाधिकरणतानिरूपकतानवच्छेदकत्वस्य धूमत्वरूपहेतुतावच्छेदके सत्त्वेपि, सामान्यतोऽधिकरणतानिरूपकतावच्छेदकत्वस्य तत्रासत्त्वादुभयाभावस्याक्षततया जलस्यापि स्वाश्रयाधिकरणीभूतयत्पदेन धर्त्तुं शक्यत्वात्।

एवं यन्निष्ठाधिकरणतानिरूपितनिरूपकत्वमपि हेतुतावच्छेदकसम्बन्धेन विवक्षणीयमन्यथा द्रव्यं विशिष्टसत्त्वादित्यत्र ज्ञानात्मकगुणस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तिप्रसङ्गात्, वैशिष्ट्य-सत्तात्वरूपहेतुतावच्छेदके सामान्यतोऽधिकरणीभूतद्रव्यनिष्ठाधिकरणतानिरूपकतावच्छेदकत्वसत्त्वेपि स्वाश्रयाधिकरणीभूतयत्पदेन ज्ञानमुपादाय तन्निष्ठाधिकरणतानिरूपितविषयित्वसम्बन्धावच्छिन्ननिरूपकतानवच्छेदकत्वस्यासत्त्वेनोभयाभावस्याक्षतत्वात्।

एवं 'सामान्यतोऽधिकरणतानिरूपितनिरूपकते'त्यत्र निरूपकत्वमपि हेतुतावच्छेदकसम्बन्धावच्छिन्नं वाच्यमन्यथा वह्निमान्धूमादित्यत्र पर्वतादेर्हेत्वधिकरणत्वं न स्यात्, धूमत्वे पर्वतादिनिष्ठाधिकरणतानिरूपकतानवच्छेदकत्वस्य, ज्ञाननिष्ठविषयित्वसम्बन्धावच्छिन्ननिरूपकतावच्छेदकत्वस्य च द्वयोः सत्त्वेनोभयाभावविरहादिति सङ्क्षेपः।

दीधितिः

**सामानाधिकरण्यव्यक्तीनां भेदेऽपि निरूपकतावच्छेदकस्य अधिकरणतावच्छेदकस्य चैक्याद्व्याप्तेरैक्यम् ।**

जागदीशी

साध्य-साधनभेदेन व्याप्तेर्भेदात् यत्र साधनतावच्छेदकं नाधिकरणतावच्छेदकं तत्र तदाश्रयसमानाधिकरणत्वमेव निवेश्यमित्यपि वदन्ति ॥३॥

ननु सामानाधिकरण्यस्य व्याप्तित्वे तस्य प्रति धूमं भिन्नत्वेन 'धूमसामान्ये वह्निसामान्यस्यैका व्याप्ति'रिति व्यवहारोऽनुपपन्न इत्यत आह—॰सामानाधिकरण्येति॰—तथा च वह्नित्व-धूमत्वाद्यनुगमादेव तत्र व्याप्तेरैक्यव्यवहारो न तु वस्तुगत्या व्याप्तेरैक्यमिति भावः। नन्वेवं (सामान्य-

विवृतिः

"यत्र हेतुतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नाधिकरणत्वमप्रसिद्धं,—यथा वह्निमान्धूमादित्यत्र धूमत्वावच्छिन्नाधिकरणत्वमप्रसिद्धं—तत्र हेतुतावच्छेदकाश्रयाधिकरणवृत्तित्वमेवाभावविशेषणं, यत्र तु हेतुतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नाधिकरणत्वं प्रसिध्यति,—यथा द्रव्यं विशिष्टसत्त्वादित्यत्र वैशिष्ट्य—सत्तात्वावच्छिन्नाधिकरणता प्रसिद्धा,—तत्र हेतुतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नाधिकरणवृत्तित्वमेवाभावे निवेश्यमन्यथा केवलसत्ताधिकरणमादाय तत्राव्याप्तिप्रसङ्गः स्यादिति" केषांचिन्मतं प्रदर्शयति—**साध्य-साधनभेदेनेति**। **वदन्ती**त्यस्वरससूचनाय, तद्बीजन्तु—तादृशोभयत्रैव पूर्वोक्तरीत्या पारिभाषिकाधिकरणत्वमादाय लक्षणसमन्वयसम्भवे साध्यसाधनभेदेन पृथक्पृथङ्निवेशस्य निष्प्रयोजनत्वमेवेति ध्येयम् ॥३॥

'सामानाधिकरण्यव्यक्तीनामि'ति दीधितिग्रन्थमुत्थापयति-**नन्विति** ।

दीधितौ—**सामानाधिकरण्यव्यक्तीनामिति** । तत्तद्धूमनिष्ठतत्तद्वह्निसामानाधिकरण्यव्यक्तीनामित्यर्थः । निरूपकतावच्छेदकस्य = सामानाधिकरण्यनिरूपकतावच्छेदकस्य—वह्नित्वादेः, अधिकरणतावच्छेदकस्य=तादृशसामानाधिकरण्याधिकरणतावच्छेदकस्य—धूमत्वादेः ।

ननु तयोरैक्यात्कथं व्याप्तेरैक्यमित्यतो भावमाह—**तथा चेति** । एवञ्च पारमार्थिकं व्याप्तेरैक्यं नास्तीति भावः ।

**नन्विति** । महानसीयधूमनिष्ठमहानसीयवह्निसामानाधिकरण्यप्रत्यक्षानन्तर सामानाधिकरण्यत्वेन निखिलसामानाधिकरण्यप्रत्यक्षे पर्वतीयवह्निधूमसामानाधिक-

दीधितिः

वस्तुतस्तु धूमत्वादिविशिष्टव्यापकवह्निसामानाधिकरण्यस्य रासभादिसाधारणत्वाद्धूमत्वादिमति तादृशसामानाधिकरण्यं,

जागदीशी

लक्षणाऽस्वीकारे) "महानसीयवह्निसामानाधिकरण्यस्य स्मृतस्य पक्षवृत्ति-धूमादावसत्त्वात् पर्वतीयवह्निसामानाधिकरण्यस्य प्रागननुभवात् कुतः परामर्श" ? इत्याशङ्कायाम् "एकैव हि सा व्याप्तिरिति" परामर्शीयसिद्धा-न्तग्रन्थोऽसङ्गत इत्यत आह,—॥वस्तुतस्तु इति। रासभादीति॥।—तथा च "धूमव्यापकवह्निसमानाधिकरणरासभवान् पर्वत" इति ज्ञानाद-प्यनुमितिः स्यादिति भावः। न च धूमादिव्यापकवन्ह्यादिसमानाधिकरण-धूमादिमत्तानिश्चयत्वेनैव परामर्शस्य धूमादिलिङ्गकानुमितिहेतुत्वादुक्त-

विवृतिः

रण्यमपि स्मृतं भवत्यतः 'सामान्यलक्षणाऽस्वीकार'इत्युक्तम्। **प्रागननुभवादिति।** व्याप्तिस्मरणात्प्रागननुभवादित्यर्थः, तथा च 'प्रथमं महानसीयवह्निधूमसामाना-धिकरण्यस्य यदा प्रत्यक्षं तदा तस्यैव स्मृततया, तादृशसामानाधिकरण्यस्य च पर्वत-वृत्तिधूमेऽसत्त्वाद्धूमव्यापकवह्निसमानाधिकरणधूमवान्पर्वत इति परामर्शो न भवि-तुमर्हतीति पर्वते वह्न्यनुमित्यनापत्तिरिति' परामर्शपूर्वपक्षग्रन्थतात्पर्यम्। **असङ्गत इति।** तथा च तत्तद्वह्निसामानाधिकरण्यस्य तत्तद्धूमादिनिष्ठस्य व्याप्तिस्वरूपतया तस्य च भिन्नतया व्याप्तेरैक्यासम्भवात् 'एकैव हि सा व्याप्तिरिति' परामर्श-सिद्धान्तग्रन्थासङ्गतिः स्फुटैवेति भावः।

दीधितौ—**धूमत्वादिविशिष्टेति।** हेतुतावच्छेदकविशिष्टस्य हेतोर्व्यापकी-भूतवह्निसामानाधिकरण्यमात्रस्य व्याप्तित्वे तस्य रासभेऽपि सत्त्वाद्धूमत्वादिरूप-हेतुतावच्छेदकविशिष्टे हेतौ तादृशसामानाधिकरण्यं व्याप्तिपदेन निवेशनीयमित्यर्थः।

ननु धूमव्यापकवह्निसामानाधिकरण्यस्य रासभे सत्त्वेऽपि का हानिरित्यत आह—**रासभादीतीति।** अनुमितिः स्यात् = पर्वते वह्न्यनुमितिः स्यात्।

**न चेति।** वाच्यमित्यनेनान्वयः। **धूमादिव्यापकेति।** तथा चोक्तानुमितेर्यदि धूमलिङ्गकत्वमुच्यते तदा धूमलिङ्गकानुमितौ धूमव्यापकवह्निसमानाधिकरणधूमवत्ता-निश्चयस्यैव कारणतया निरुक्तनिश्चयरूपापादकविरहेणापत्तिरेव न सङ्गच्छते, रासभ-लिङ्गकत्वञ्चोक्तानुमितेर्न सम्भवदुक्तिकं, वह्न्यादौ रासभव्यापकत्वाभावेन रासभव्या-पकवह्निसामानाधिकरणरासभवत्तानिश्चयस्य तादृशानुमितिहेतुभूतस्यासम्भवादिति

जागदीशी

व्याप्ते रासभादिसाधारण्येऽपि न क्षतिरिति वाच्यम्। पक्षधर्म्मांशे विषयतया अनुमितिजनकतावच्छेदकस्यैव व्याप्तिपदार्थतया धूमत्वादेस्तत्र निवेशे तद्घटितस्यैव व्याप्तित्वादिति भावः। *धूमत्वादिमतीति*। तथा च 'तस्येति' मूलस्थं तत्पदं लक्ष्ये लक्षणे चोभयत्रैवान्वितमिति भावः। ननु साधननिष्ठसामानाधिकरण्यस्य व्याप्तित्वे ( 'एकैव हि'

विवृतिः

भावः। न क्षतिरिति। निरुक्तवह्निसामानाधिकरण्यस्य रासभे सत्त्वेपि आपत्तिविरहान्न क्षतिरित्यर्थः। पक्षधर्मांशे = पक्षस्य यो धर्मो हेत्वादिस्तत्र। विशेषणतया = विशेषणीभूय, अनुमितीति। तथा च यद्रूपावच्छिन्नप्रकृतहेतुप्रकारताकनिश्चयत्वमनुमितिजनकतावच्छेदकं तद्रूपस्यैव व्याप्तिपदार्थतया तादृशरूपस्य च धूमत्वावच्छिन्नधूमव्यापकवह्निसामानाधिकरण्यस्वरूपतया धूमत्वस्य व्याप्तिघटकत्वात्तद्घटितैव व्याप्तिः करणीयेति दीधितौ—'धूमत्वावच्छिन्ननिष्ठं तादृशवह्निसामानाधिकरण्यं व्याप्ति'रित्युक्तं, तस्य रासभसामानाधिकरण्येऽपि न कापि क्षतिरिति समुदितार्थः।

लक्ष्ये=लक्षणहेतुकेतरभेदानुमितिविशेष्ये-, पक्ष इति यावत्, लक्षणे = इतरभेदानुमापके हेतौ, तथा च 'हेतुनिष्ठहेतुव्यापकसाध्यसामानाधिकरण्यं, स्वेतरभिन्नं, हेतुनिष्ठहेतुव्यापकसाध्यसामानाधिकरण्यादि'त्यनुमितौ पक्षीभूतापि व्याप्तिर्हेतुनिष्ठा वक्तव्या, एवं लक्षणीभूतापीतरभेदानुमापकहेतुस्वरूपा व्याप्तिर्हेतुनिष्ठा वक्तव्येति भावः।

हेतुतावच्छेदकावच्छिन्ननिष्ठतादृशसाध्यसामानाधिकरण्यस्य व्याप्तित्वेपि 'एकैव ही'त्यादिग्रन्थासङ्गतिरस्त्येव, तादृशसामानाधिकरण्यस्य प्रतिव्यक्ति भिन्नत्वादिति 'तद्वती'त्यादिदीधितिग्रन्थोत्थितिप्रयोजनमाह—नन्विति। (हेतुनिष्ठसाध्य-

दीपिका

लक्ष्ये लक्षणे चेति। धूमनिष्ठधूमव्यापकवह्निसामानाधिकरण्यं स्वेतरभिन्नं, धूमनिष्ठधूमव्यापकवह्निसामानाधिकरण्यादित्यनुमाने पक्षे धूमनिष्ठत्वदलानुक्तौ—भागासिद्धिः, रासभनिष्ठधूमव्यापकवह्निसामानाधिकरण्यात्मकपक्षैकदेशे धूमनिष्ठधूमव्यापकवह्निसामानाधिकरण्यात्मकहेतोस्तादात्म्येनासत्त्वात्। हेतौ धूमनिष्ठत्वानुक्तौ व्यभिचारप्रसङ्गः, धूमव्यापकवह्निसामानाधिकरण्यात्मकहेतो रासभसामानाधिकरण्येऽपि सत्त्वात्तत्र च स्वेतरभेदात्मकसाध्यस्याभावात्।

दीधितिः

तद्वृति धूमत्वादिकं वा, व्याप्तिः, आद्या भिन्ना, द्वितीया त्वभिन्नैवेति ध्येयम् ॥४॥

जागदीशी

इत्यादिग्रन्थानुपपत्तिस्तदवस्थैव, तथा) विशिष्टसत्त्वव्यापकीभूतद्रव्यत्वसामानाधिकरण्यवतः सत्त्वस्य गुणादौ परामर्शाद्गुणेऽपि द्रव्यत्वानुमितेः प्रमात्वं स्यादत आह—॥तद्वृतीति॥।—तादृशसामानाधिकरण्यवतीत्यर्थः। तथा च तादृशसामानाधिकरण्यविशिष्टधूमत्वं व्याप्तिः, तत्प्रकारिकैव पक्षधर्म्मताधीरनुमितिहेतुः, तत्र च नीलघटत्वप्रकारकबुद्धौ घटत्वस्येव

विवृतिः

सामानाधिकरण्यस्य व्याप्तित्वे दोषान्तरमाह—**तथेति**।) **गुणेऽपीति**। तादृशपरामर्शस्य गुणविशेष्यकत्वादिति भावः। प्रमात्वं स्यात्=प्रमात्मकपरामर्शजन्यत्वं स्यात्, अन्यथा गुणे द्रव्यत्वानुमितेः प्रमात्वाभावेन यथाश्रुतार्थासङ्गतिः स्यात्। **तादृशसामानाधिकरण्येति**। धूमव्यापकवह्निसामानाधिकरण्यवतीत्यर्थः। **तादृशसामानाधिकरण्यविशिष्टेति**। धूमव्यापकवह्निसामानाधिकरण्यस्य सामानाधिकरण्यसम्बन्धेन विशिष्टं यद्धूमत्वं तदेव व्याप्तिरित्यर्थः। तत्प्रकारिका = धूमव्यापकवह्निसामानाधिकरण्यविशिष्टधूमत्वप्रकारिका, पक्षधर्मताधीः = पर्वतादिवृत्तिताधीः, परामर्श इति यावत्।

ननु धूमव्यापकवह्निसामानाधिकरण्यविशिष्टधूमत्वस्य व्याप्तित्वे धूमत्वत्वप्रवेशाद्गौरवं, धूमत्वत्वस्य धूमेतरावृत्तित्वे सति सकलधूमवृत्तित्वस्वरूपत्वादत आह—**तत्रेति**। नीलघटत्वप्रकारकबुद्धौ, 'नीलो घट' इति बुद्धाविति यावत्। **घटत्वस्येवेति**। यथा 'नीलो घट' इति बुद्धौ नीलत्वस्य पारतन्त्र्येण सामानाधिकरण्यसम्बन्धेन घटत्वे भानं, न तु घटत्वे घटत्वत्वस्येति सर्ववादिसिद्धं, तथा 'धूमव्यापकवह्निसामानाधिकरण्यविशिष्टधूमवान्पर्वत' इति परामर्शेऽपि पारतन्त्र्येण धूमव्यापकवह्निसामानाधिकरण्यस्य सामानाधिकरण्यसम्बन्धेन धूमत्वे भानं न तु धूमत्वे धूमत्वत्वस्यातो न धूमत्वत्वप्रवेशकृतं गौरवमिति तात्पर्यम्।

दीधितौ—**आद्येति**। हेतुतावच्छेदकनिष्ठहेतुव्यापकसाध्यसामानाधिकरण्यरूपा व्याप्तिरित्यर्थः। भिन्ना = प्रतिव्यक्तिभिन्ना, द्वितीया = हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतुतावच्छेदकरूपा व्याप्तिः, **अभिन्नेति**। तस्या ऐक्यादिति भावः।

जागदीशी

स्वरूपत एव धूमत्वस्य भानं, न तु धूमत्वत्वेन, नातो गौरवमिति भावः। ॐआद्येतिॐ। तथा च तामुपादायैव 'पर्वतीयवह्निधूमयोरसन्निकर्षात्तयोः कथं व्याप्तिग्रह' इति परामर्शीयः पूर्वपक्ष (ग्रन्थ) इति भावः। ॐद्वितीयेतिॐ। तथा च तामभिप्रेत्यैव 'एकैव हि सा व्याप्ति'रिति (परामर्शीयसिद्धान्त) ग्रन्थ इति भावः। यत्रैकमेव साध्याधिकरणं तत्रैतद्रूपवानेतद्रसादित्यादावाद्याऽप्यभिन्नैव, यत्र च द्रव्यत्वादौ साध्ये रूपत्वव्याप्यजातिमतो हेतुत्वं तत्र हेतुतावच्छेदकीभूतनीलत्वादिजातीनां नानात्वेन द्वितीयाऽपि क्वचिद्भिन्नैवेति मन्तव्यम् ॥४॥

विवृतिः

**तथा चेति**। तां = प्रथमां व्याप्तिं, धूमनिष्ठधूमव्यापकवह्निसामानाधिकरण्यरूपां व्याप्तिमिति यावत्। उपादाय = मनसि विभाव्य, तां = द्वितीयां, धूमव्यापकवह्निसामानाधिकरण्यविशिष्टे धूमत्वादिरूपां व्याप्तिम्, अभिप्रेत्य = आदृत्य।

प्रथमाया अपि व्याप्तेः कदाचिदभिन्नत्वं, द्वितीयाया अपि कदाचिद्भिन्नत्वं दर्शयति – **यत्रेति**। तद्रसनिष्ठतद्रूपसामानाधिकरण्यस्यैक्यात्प्रथमाया व्याप्तेरभिन्नत्वम्, एवं द्रव्यं रूपत्वव्याप्यजातिमत इत्यत्र तादृशनीलत्व-पीतत्वादिरूपजातीनां हेतुतावच्छेदकीभूतानां हेतुव्यापकद्रव्यत्वादिसामानाधिकरण्यविशिष्टानां नानात्वेन हेतुतावच्छेदकरूपाया अपि द्वितीयाया व्याप्तेभिन्नत्वमिति भावः। एतच्च दीधितौ 'ध्येय' मित्युक्त्या सूचितम्।

**मन्तव्य**मित्यस्वरससूचनाय, तद्बीजन्तु,—'आद्येति' ग्रन्थस्य वह्निधूमव्याप्तेरैक्यप्रदर्शनपरतया सर्वस्या व्याप्तेरैक्यासत्त्वेपि न क्षतिरिति वदन्ति ॥४॥

दीधितौ—अभावविशेषणीभूतस्य 'प्रतियोग्यसामानाधिकरण्यस्य' व्यावृत्तिं

दीपिका

**नातो गौरवमिति**। ननु धूमव्यापकवह्निसामानाधिकरण्यविशिष्टधूमत्वस्य व्याप्तित्वे कीदृशः परामर्शोऽभिप्रेतः? वह्निव्याप्यधूमत्ववत्त्वानिति परामर्शस्याभिप्रेतत्वे धूमत्वस्योल्लेखेन धूमत्वत्वादिभानाद्गौरवापत्तिरिति चेन्न, 'धूमव्यापकवह्निसमानाधिकरणवृत्तिमत्त्वान्पर्वत' इत्याकारकपरामर्शस्यैवाभ्युपेतत्वात्। पारतन्त्र्येण यत्रान्वयस्तादृशस्थलेऽन्वयितावच्छेदकस्य भानानङ्गीकारेण वृत्तित्वेनैव धूमत्वस्य भानाद्धूमत्वत्वेन भानाभावादिति ध्येयम्।

दीधितिः

**अयं कपिसंयोगी एतद्वृक्षत्वादित्यादिसङ्ग्रहायासमानाधिकरणान्तम् ।**

जागदीशी

कपिसंयोगिन्येतत्पदार्थस्य साध्यताभ्रमनिरासार्थ'मय'मिति पक्षनिर्देशः। साम्प्रदायिकमते संयोगसामान्याभावमात्रस्य द्रव्येऽभावात्—❀कपीति❀। वृक्षमात्रे कपिसंयोगाभावात्—❀एतदिति❀। न चाभावे हेतुसामानाधिकरण्यस्यैव हेत्वधिकरणे निरवच्छिन्नवृत्तित्वरूपस्य निवेशा-

विवृतिः

दर्शयति—**अयमिति** । सङ्ग्रहाय = अव्याप्तिनिरासाय, तथा च प्रतियोग्यसामानाधिकरण्यानुपादानेऽयं कपिसंयोग्येतद्वृक्षत्वादित्यत्र हेत्वधिकरणीभूतैतद्वृक्षे मूलावच्छेदेन कपिसंयोगाभावस्य विद्यमानतया तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके कपिसंयोगत्वे सत्त्वादव्याप्तिरतो हेतुसमानाधिकरणाभावे 'प्रतियोग्यसामानाधिकरण्यं' विशेषणीयं, तदुपादाने च,—कपिसंयोगाभावस्य हेतुसामानाधिकरणत्वेऽपि तत्प्रतियोगिनः कपिसंयोगस्याधिकरणे वर्त्तमानत्वान्न तदभावः प्रतियोग्यधिकरणावृत्तिरपि तु घटाभाव एव प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणः, तत्प्रतियोगितावच्छेदकत्वस्य कपिसंयोगत्वरूपे साध्यतावच्छेदकेऽसत्त्वान्नाव्याप्तिरिति भावः ।

इदम्पदप्रयोजनमाह—**कपिसंयोगिनीति** । भ्रमनिरासाय = कपिसंयोगि-एतत्-वृक्षत्वादित्याकारकसाध्यत्वादिभ्रमनिरासाय, न चेदंशब्देन पक्षनिर्देशेपीदन्त्वविशिष्टे कपिसंयोगिनि एतत्पदार्थस्य साध्यत्वभ्रमानिरासात्कथमिदं युक्तमिति वाच्यम् । इदन्त्वैतत्त्वयोस्तुल्यार्थकतयोद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्याच्छाब्दबोधानुदयेन तादृशभ्रमासम्भवात्, परार्थानुमाने प्रतिज्ञादीनामुपयोगितया तादृशशाब्दबोधस्यावश्यकत्वादिति ध्येयम् । **कपीतीति** । तथा च 'कपि'पदानुपादाने वृक्षे संयोगसामान्याभावस्य सर्वमतासिद्धतया घटाभावमादायैव संयोग्येतद्वृक्षत्वादित्यत्र लक्षणसमन्वयसम्भवाद्व्यर्थं प्रतियोग्यसामानाधिकरण्यदलमिति सर्वमतसाधारणाव्याप्त्यनुरोधेन 'कपि'पदोपादानमिति भावः। **एतदिति** । तथा च हेतावेतत्त्वस्याविशेषणत्वे,— कपिसंयोगसाध्यकवृक्षत्वहेतोर्व्यभिचारितया तत्र लक्षणागमनस्येष्टत्वात्प्रतियोग्यसामानाधिकरण्यव्यावृत्तिस्तत्र न सङ्गच्छत इति हेतुविशेषणतयैतत्त्वोपादानमिति भावः । **न चेति** । वाच्यमित्यग्रेतनेनान्वयः । हेत्वधिकरणे = यत्किञ्चिद्धेत्वधिकरणे, **निरवच्छिन्नेति** । यथाऽभावे हेतुसामाना-

दीधितिः

**यत्तु—इदं संयोगि द्रव्यत्वादित्यत्राव्याप्तिवारणाय तत्,**

जागदीशी

दुक्ताऽव्याप्तिव्युदाससम्भवात् प्रतियोगिवैयधिकरण्यविशेषणप्रवेशो मूलकृतोनुचित इति वाच्यम्; अग्रे तस्य समाधास्यमानत्वादिति भावः । तत् = असमानाधिकरणान्तम् । ननु शाखामूलादिसर्वावयवाव-च्छेदेन सर्वत्र द्रव्ये गगनादिसंयोगस्य सत्त्वात् कुतस्तत्सामान्याभावस्य द्रव्ये सम्भव इत्यत आह,–❀संयोगस्येति❀। ❀वृक्षत्वेति❀ ।–शाखाद्यव-

विवृतिः

धिकरण्यं विशेषणं, तथा यत्किञ्चिद्धेत्वधिकरणे निरवच्छिन्नवृत्तित्वमपि प्रक्षिप्य कपिसंयोग्येतद्वृक्षत्वादित्यत्र कपिसंयोगाभावस्य वृक्षे मूलावच्छिन्नवृत्तिकतया निर-वच्छिन्नवृत्तित्वविरहेणाव्याप्तिर्वारणीयेति भावः । अग्रे = अवच्छेदकत्वनिरुक्तौ, **समाधास्यमानत्वादिति** । प्रतियोग्यसामानाधिकरण्यं परित्यज्यैव सिद्धान्त-लक्षणस्य वक्ष्यमाणत्वादित्यर्थः ।

संयोगसामान्याभावस्य द्रव्यवृत्तित्वं स्वीकृत्य 'प्रतियोग्यसामानाधिकरण्य' दलव्यावृत्तिमभिदधतां प्राचां मतं साम्प्रदायिकमतानुसारेण दूषयितुमुपन्यस्यति–दीधितौ—**यत्त्विति** । तथा च प्रतियोग्यसामानाधिकरण्यानुपादान इदं संयोगि द्रव्यत्वादित्यत्र हेत्वधिकरणे द्रव्ये वर्त्तमानस्य संयोगसामान्याभावस्य प्रतियोगि-तावच्छेदकतायाः साध्यतावच्छेदकीभूते संयोगत्वे सत्त्वादव्याप्तिः, तदुपादाने च—संयोगाभावस्य प्रतियोगिनः संयोगस्याधिकरणे द्रव्य एव वर्त्तमानतया प्रतियोग्य-धिकरणावृत्तित्वरूपप्रतियोग्यसामानाधिकरण्याभावान्नाव्याप्तिरित्याशयः ।

**नन्विति । गगनसंयोगस्येति** । गगनस्य सर्वमूर्त्तसंयोगानुयोगित्वादिति भावः । तत्सामान्याभावस्य = संयोगसामान्याभावस्य, **द्रव्ये सम्भव इति** । तथा च संयोगस्य साध्यस्य हेत्वधिकरणे द्रव्येऽभावविरहेणाव्याप्त्यभावात्प्रति-

दीपिका

**अग्रे समाधास्यमानत्वादिति** । न च संयोगाभाववान् मेयत्वादित्यत्र संयोगाभावाभावस्य निरवच्छिन्नवृत्तिकत्वविरहेणातिव्याप्तिसम्भवे 'अग्रे समाधास्यमान-त्वात्' इत्याद्यभिधानमयुक्तमिति वाच्यम् । द्रव्ये संयोगाभावस्य स्वीकरणीयतया निरुक्तहेतोः सद्धेतुत्वेनातिव्याप्तिदानासङ्गतेः । तत्र तदस्वीकारमते तु संयोगाभावा-भावोऽतिरिक्तो निरवच्छिन्नवृत्तिकश्चेति न कोपि दोष इति ध्येयम् ।

जागदीशी

च्छेदेन तत्तत्संयोगसत्त्वेऽपि वृक्षत्वावच्छेदेन कस्याश्चिदपि संयागव्यक्ते-रसत्त्वात् तदवच्छेदेनैव संयोगसामान्याभावसम्भवोऽवच्छेदकभेदेनैकत्र भावाभावयोः समावेशादिति भावः। नन्वेवं वृक्षे संयोगसामान्याभावस्य (सत्त्वे) कुतो नाध्यक्षमित्यत आह–, ❀तत्र चेति❀ ।–तत्र = संयोगसा-मान्याभावे । ❀सत्त्वादिति❀। अस्य प्रतियोगितासम्बन्धेनेत्यादिः । तथा च संयोगसामान्याभावस्यातीन्द्रियप्रतियोगिकत्वान्नाध्यक्षमिति । ननु प्रतियोगितावच्छेदकविशिष्टस्यैव योग्यत्वमत्यन्ताभावप्रत्यक्षे तन्त्रं, (न तु योग्यमात्रप्रतियोगिकत्वम्,) अन्यथा गुणेऽपि संयोगसामान्याभाव-(स्य तादृश) प्रत्यक्षं न स्यादत आह, ❀परित इति❀। परितः =

विवृतिः

योग्यसामानाधिकरण्यदलं निरर्थकमिति भावः। तदवच्छेदेनैव = वृक्षत्वावच्छेदे-नैव, अवच्छेदकभेदेन = वृक्षत्व-तत्तच्छाखादिरूपावच्छेदकभेदेन, समावेशादिति। एकावच्छेदेनैवैकत्र भावाभावयोर्विरोधादिति भावः।

नन्विति। नाध्यक्षमिति। वृक्षे संयोगसामान्याभावस्याप्रामाणिकत्वे तस्य वृक्षवृत्तिताया असिद्धत्वादिति भावः। आहेति। वृक्षे संयोगसामान्यभाव-स्य प्रत्यक्षत्वे हेतुमाहेत्यर्थः। तथा चेति। अभावनिष्ठलौकिकविषयितासम्बन्धेन प्रत्यक्षं प्रति योग्यमात्रप्रतियोगिकत्वस्य, प्रतियोगितासम्बन्धेन योग्यमात्रप्रति-योगिनो वा हेतुत्वात्कार्याधिकरणे संयोगसामान्याभावे चातीन्द्रियपिशाचसंयोग-प्रतियोगिकत्वस्य प्रतियोगितासम्बन्धेन तादृशायोग्यपिशाचसंयोगरूपप्रतियोगिनः सत्त्वाद्योग्यमात्रप्रतियोगिकत्वादिरूपकारणविरहेण न संयोगसामान्याभावस्य प्रत्य-क्षत्वं सम्भवतीति हृदयम्। अतीन्द्रियप्रतियोगिकत्वात् = पिशाचादिसंयोगप्रति-योगिकत्वात्, नाध्यक्षमिति। न प्रत्यक्षमित्यर्थः, कारणाभावादिति शेषः।

'परित' इत्यादिदीधितिग्रन्थोत्थितिबीजमाह—नन्विति। प्रतियोगितावच्छे-दकविशिष्टस्य = कस्य चित्प्रतियोगिनः, योग्यत्वम् = उद्भूतरूपवत्त्वे सति महत्त्वं, तन्त्रं = कारणतावच्छेदकं, (न त्विति। योग्येतराप्रतियोगिकत्वे सति योग्यप्रति-योगिकत्वं न कारणतावच्छेदकमित्यर्थः)। (तादृश) प्रत्यक्षम् = अभावनिष्ठलौकिक-विषयतासम्बन्धेन गुणवृत्तितया प्रत्यक्षं, न स्यादिति। तथा चाभावनिष्ठलौकिक-विषयतासम्बधेन प्रत्यक्षं प्रति योग्यताविशिष्टस्य प्रतियोगितावच्छेदकविशिष्ट-यत्किञ्चित्प्रतियोगिनः प्रतियोगितासम्बन्धेन हेतुत्वमेव वक्तव्यम्। योग्यताविशिष्ट-प्रतियोगिसामान्यस्य तादृशसम्बन्धेन हेतुत्वे 'गुणे संयोगाभाव' इति प्रत्यक्षं न

जागदीशी

सर्वावयवावच्छेदेन, प्रतियोगिग्रहात्मकदोषाद्वेत्यर्थः। न चैवमपि प्रतियोगिग्रहोत्पत्तिदशायामेव तत्प्रत्यक्षं दुर्वारम्, प्रतियोग्युपलम्भकसामग्र्या अपि दोषत्वोपगमात्, 'प्रतियोगिन उपलब्धिर्यत इति' व्युत्पत्त्या तस्या एव वा प्रस्तुतत्वादिति भावः।

विवृतिः

स्यात्, संयोगाभावे प्रतियोगितासम्बन्धेन योग्यताविशिष्टप्रतियोगिसामान्यस्याप्रसिद्धत्वात्, अतीन्द्रियपिशाचसंयोगादेरपि प्रतियोगिसामान्यान्तर्गतत्वात्, योग्यस्य यत्किञ्चित्प्रतियोगिनो हेतुत्वे तु संयोगाभावप्रतियोगिनो योग्यस्य घटादिसंयोगस्य प्रतियोगितासम्बन्धेन संयोगाभावे सत्त्वात्कारणसत्त्वेन संयोगाभावप्रत्यक्षे न किमपि बाधकम्, एवञ्च निरुक्तस्य कारणस्य सत्त्वाद् वृक्षेपि संयोगाभावप्रत्यक्षं स्यादित्याशयः।

**सर्वावयवावच्छेदेनेति**। शाखादितत्तत्सकलावयवावच्छेदेनेत्यर्थः। दोषात् = संयोगरूपप्रतियोगिप्रत्यक्षात्मकप्रतिबन्धकात्, तथा च समवायेन संयोगसामान्याभावप्रत्यक्षं सर्वावयवावच्छेदेन संयोगात्मकप्रतियोगिज्ञानस्य प्रतिबन्धकमिति वृक्षस्य सर्वावयवावच्छेदेन संयोगात्मकप्रतियोगिज्ञानस्य प्रतिबन्धकस्य सत्त्वान्न वृक्षे संयोगाभावस्य प्रत्यक्षत्वं सम्भवतीति भावः।

ननु तादृशप्रतियोगिज्ञानस्य प्रतिबन्धकत्वे तस्य च कार्यपूर्वक्षणे सत्ताया एव कार्यानुत्पादप्रयोजकत्वं वक्तव्यं, एवञ्च यस्मिन् क्षणे सर्वावयवावच्छेदेन प्रतियोगिज्ञानमुत्पद्यते तत्क्षणे कथं न प्रत्यक्षं, तत्पूर्वक्षणे प्रतिबन्धकविरहादित्याशङ्क्ते—**न चेति। दुर्वारमि**त्यनेनान्वयः। प्रतिग्रहोत्पत्तिदशायां = संयोगसामान्याभावप्रतियोगिनः—संयोगस्य—प्रत्यक्षकाले, तत्प्रत्यक्षं = संयोगसामान्याभावप्रत्यक्षं, **दुर्वारमिति**। 'सर्वावयवावच्छेदेने'त्याद्युक्तावपि प्रत्यक्षापत्तिवारणासम्भवादितिभावः। प्रतियोग्युपलम्भकसामग्र्याः = प्रतियोगिज्ञानजनकसामग्र्याः, दोषत्वोपगमात् = प्रतिबन्धकत्वोपगमात्, प्रतिबन्धकत्वस्य विवक्षणीयत्वादिति यावत्। तथा च सर्वावयवावच्छेदेन प्रतियोगिग्रहजनकसामग्र्या एव संयोगाभावप्रत्यक्षे प्रतिबन्धकतया तस्याः सामग्र्याश्च प्रतियोगिग्रहोत्पत्तिपूर्वक्षणे विद्यमानत्वात्प्रतिबन्धकसत्त्वेन न प्रतियोगिग्रहोत्पत्तिकाले प्रत्यक्षमिति भावः। 'प्रतियोग्युपलब्धि' शब्देन प्रतियोगिज्ञानजनकसामग्रीपर्यन्तलाभाय व्युत्पत्तिं प्रदर्शयति—**व्युत्पत्त्येति**। बहुव्रीहिसमासादरेणेत्यर्थः तस्या एव = प्रतियोगिग्रहजनकसामग्र्या एव, प्रस्तुतत्वात् = प्रतिबन्धकत्वेन दीधितावुक्तत्वात्।

दीधितिः

**संयोगस्य शाखाद्यवच्छेदेन वृत्तेर्वृक्षत्वावच्छेदेन तत्सामान्याभाव-वृत्तावविरोधात्, तत्र चातीन्द्रियस्य संयोगस्य सत्त्वात्, परितः प्रतियोग्युपलब्धेर्दोषाद्वा 'वृक्षे न संयोग' इत्यादि नाध्यक्षमिति,— तन्न, द्रव्ये संयोगसामान्याभावे मानाभावात्।**

जागदीशी

प्रतियोग्युप[1]लम्भकदोषाभावस्य संयोगसामान्याभावप्रत्यक्षे कार्य्य-सहभावेन हेतुत्वोपगमान्नोक्तदोष इत्यपि वदन्ति।

❀न च इति❀।—मानमिति परेणान्वयः। ❀यो यदीयेति❀।—यो

विवृतिः

"सर्वावयवावच्छेदेन प्रतियोगिज्ञानस्य प्रतिबन्धकत्वे तादृशप्रतियोगिज्ञाना-भावस्य कार्यजनकत्वमावश्यकं, प्रतिबन्धकाभावस्य कार्यजनकत्वात्, एवञ्च तादृश-प्रतियोगिज्ञानाभावस्य कार्याधिकरणवृत्तित्त्वेन हेतुत्वोपगमादेव न सर्वावयवावच्छेदेन संयोगज्ञानोत्पत्तिक्षणे संयोगाभावस्य प्रत्यक्षं सम्भवति, कार्याधिकरणीभूततादृश-प्रतियोगिग्रहोत्पत्तिवृत्तित्वविशिष्टस्य संयोगात्मकप्रतियोगिज्ञानाभावस्य कारणस्या-सत्त्वात्, तदानीं संयोगात्मकप्रतियोगिनो ज्ञानस्य सत्त्वात्" इति केषांचिन्मत-मुत्थापयति—**प्रतियोग्युपलम्भरूपेति**। दोषाभावस्य = संयोगरूपप्रतियोगि-ग्रहात्मकप्रतिबन्धकाभावस्य, कार्यसहभावेन = कार्याधिकरणवृत्तित्वेन, **नोक्त-दोष इति**। संयोगग्रहोत्पत्तिकाले संयोगसामान्याभावस्य न प्रत्यक्षमित्यर्थः। प्रतिबन्धकाभावादेर्हेतुतास्थले प्रतिबन्धकाभावस्य कार्यकालपूर्ववृत्तित्वमात्रं कार्यो-त्पत्तावपेक्ष्यते. न तु तस्य कार्याधिकरणवृत्तित्वमित्यस्वरसो **वदन्ती**त्युक्त्या सूचितः

दीधितौ—**वृक्षे न संयोग इति**। वृक्षे संयोगाभाव इत्यर्थः। इत्यादि नाध्यक्षम् = इत्याकारकं न प्रत्यक्षम्। "द्रव्ये संयोगाभावस्य प्रामाणिकत्वे सत्येव संयोगी द्रव्यत्वादित्यत्र हेत्वधिकरणे संयोगाभावमादायाव्याप्तिवारणार्थं प्रतियोग्यसामानाधिकरण्यदलं सार्थकं सम्भवति, तदेव तु न" इत्याशयेन सम्प्रदायविदां मतमनुसृत्य दूषयति = **तन्नेति**। मानाभावात् = द्रव्ये संयोगा-भावस्याप्रामाणिकत्वात्।

---

[1] "प्रतियोग्युपलम्भरूपदोषाभावस्ये"ति क्वचित्पाठः।

दीधितिः

**न च 'यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाव-**

जागदीशी

**यज्जातिसमानाधिकरणोभयावृत्तिधर्म्मावच्छिन्न-यत्सम्बन्धावच्छिन्न-प्रति-योगिताकयावदभाववान् स तज्जात्यवच्छिन्न-तत्सम्बन्धावच्छिन्नप्रतियोगि-ताकाभाववान् इत्यर्थः। तेन न स्वरूपासिद्धिः,**

विवृतिः

नन्वनुमानादेव द्रव्ये संयोगाभावः सिध्यतीत्याशङ्कते—**यो यदीयेति।** यदीयाः = "यन्निष्ठप्रतियोगिताकाः, यावन्तो विशेषाभावास्तद्वान् यो भवति, स तत्सामान्यनिष्ठप्रतियोगिताकाभाववान् भवति", इति व्याप्तेः=इति सामान्यव्याप्तेः, मानम् = मितिकरणम्। **न चे**त्यादिशङ्कितुर्मते हेतोरेवानुमितिकरणत्वादिति भावः।

ननु यथाश्रुते घटपटोभयाभावस्यापि यावद्विशेषान्तर्गततया तस्य च घटव-त्यपि सत्त्वेन तत्र घटसामान्याभावासत्त्वाद्व्यभिचारः, एवं—तत्तत्संयोगाभाववत्यपि वृक्षे संयोगसामान्यनिष्ठप्रतियोगिताकस्य संयोग-घटोभयाभावस्योभयवादिसिद्धतया सिद्धसाधनमतो निरुक्तोभयाभावयोर्हेतुघटकत्व-साध्यघटकत्व-निरासायाह—**यज्जातीति।** जातिसामानाधिकरण्यं = जात्यधिकरणवृत्तित्वं, तच्चोभयावृत्तिधर्म-विशेषणम्। उभयावृत्तित्वञ्चैकमात्रवृत्तित्वं—स्वप्रतियोगिवृत्तित्व, स्वानुयोगिवृत्ति-त्वोभयसम्बन्धेन भेदविशिष्टान्यत्वमिति यावत्। स्वं = तत्तद्घटादिभेदः। तादृश-धर्माश्च तत्तद्घटत्व—तत्तत्संयोगत्वादयः। तथा च संयोगत्वजात्यधिकरणवृत्तिरुभया-वृत्तिधर्मस्तत्तत्संयोगत्वादिस्तदवच्छिन्नसमवायसम्बन्धावच्छिन्नप्रतियोगिताकानां या-वतां तत्तत्संयोगाभावानां वृक्षे सत्त्वात्तत्र संयोगत्वजात्यवच्छिन्नप्रतियोगिताकस्य संयोगसामान्याभावस्य सिद्धिः।

एवं निरुक्तव्याप्त्या घटत्वजात्यधिकरणे घटे वर्त्तमानस्योभयावृत्तिधर्मस्य तत्तद्घटत्वादेरवच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकानां तत्तद्घटाभावानां यस्मिन्देशे सत्त्वं तत्र घटत्वजात्यवच्छिन्नप्रतियोगिताकस्य घटसामान्याभावस्य सिद्धिः। एवं रीत्यान्यत्रापि बोध्यं, पूर्वोक्तोभयत्वादेरुभयावृत्तित्वविरहेण जातित्वा-भावेन च तयोर्हेतुघटकत्व-साध्यघटकत्वासम्भवान्न निरुक्तविवक्षणे सिद्धसाधना-दयो दोषाः सम्भवन्तीति ध्येयम्। तेन = धर्मे उभयावृत्तित्वविशेषणेन, प्रतियोगि-तायां यत्सम्बन्धावच्छिन्नत्वविशेषणेन च।

आद्यस्य फलमाह—**स्वरूपासिद्धिरिति।** तथा चोभयावृत्तित्वस्य धर्म-

दीधितिः

वानि'ति व्याप्तेः,—

जागदीशी

न वा[1] सिद्धसाधनं, जात्युपादानाद्गुरुधर्म्मस्य (कम्बुग्रीवादिमत्त्वस्य) प्रतियोगितानवच्छेदकत्वे,—तदवच्छिन्नाभावाप्रसिद्ध्यापि न व्यभि-

विवृतिः

विशेषणत्वानुपादाने 'संयोगत्वाधिकरणवृत्तिधर्म'पदेन गुणत्वादिकमादाय तदवच्छिन्नप्रतियोगिताकाभावस्यापि यावदभावान्तर्गततया हेतुस्वरूपत्वात्तस्य च वृक्षेऽसत्त्वाद्धेत्वभाववत्पक्षरूपा स्वरूपासिद्धिः स्यात्, तदुपादाने तु—गुणत्वादेः संयोगत्वसमानाधिकरणत्वेपि उभयावृत्तित्वविरहान्न गुणत्वादिकमादाय स्वरूपासिद्धिरिति भावः।

द्वितीयस्य फलमाह—न वेति। तथा च यत्सम्बन्धावच्छिन्नत्वस्योभयावृत्तिधर्मावच्छिन्नप्रतियोगितायामविशेषणत्वे संयोगावच्छिन्नसंयोगत्वजातिसामानाधिकरणतत्तत्संयोगत्वावच्छिन्नप्रतियोगिताकानां—संयोगेन तत्तत्संयोगाभावानां—वृक्षे सत्त्वात्तत्र च तादृशसंयोगसम्बन्धेन संयोगसामान्याभावस्योभयवादिसिद्धतया सिद्धसाधनं, तदुपादाने तु—समवायेन तत्तत्संयोगाभावानां वृक्षे सत्त्वेन तत्र च समवायेन संयोगाभावस्य सम्प्रदायानुमतत्वाभावेन न सिद्धसाधनमिति भावः।

ननु 'जाति'पदं विहाय यद्धर्मसमानाधिकरणोभयावृत्तित्वादिकमेवोच्यतां, किं 'जाति'पदेनेत्यत आह—जात्युपादानादिति। प्रतियोगितानवच्छेदकत्व

दीपिका

व्याप्तेरिति। ननु संयोगसामान्याभाव-संयोगयावद्विशेषाभावयोर्वृक्षे व्याप्तिग्रह एव न सम्भवतीति चेन्न, सामान्यव्याप्तौ साधनसजातीये साध्यसजातीयस्य व्याप्तिग्रहानन्तरं प्रकृतसाधने प्रकृतसाध्यस्यापि व्याप्तिग्रहस्याभ्युपगमेन,—घटीययावद्विशेषाभावे घटसामान्याभावव्याप्तिग्रहानन्तरं संयोगीययावद्विशेषाभावेऽपि संयोगसामान्याभावव्याप्तिग्रहे बाधकाभावात्।

नन्वत्र यावत्पदं व्यर्थम्, उभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकयत्किञ्चिदभावस्यैव सम्यक्त्वात्।

न च यत्किञ्चिद्घटाभाववति घटसामान्याभावासत्त्वाद्व्यभिचारोऽतस्तद्वारणाय यावत्पदं सार्थकं सम्भवतीति वाच्यं, यावत्पादोपादानेऽपि तद्दोषस्य दुर्वारत्वात्, घटत्रयशून्ये घटसामान्याभावस्यासत्त्वात्।

[1] सिद्धसाधनं वेति क्वचित्पाठः।

जागदीशी

चारः । न च सत्त्वगुणत्वाद्यवच्छिन्नाभावमादाय स्वरूपासिद्ध्यादिदोष-

विवृतिः

इति । 'कम्बुग्रीवादिमान्नास्ती'त्यभावप्रतियोगितावच्छेदकताया लघुधर्मे-घटत्व-एव स्वीकरणीयत्वादिति भावः । न व्यभिचारः = न साध्याप्रसिद्धिः, तथा च हेतुघटकतया जातिपदाप्रवेशे यद्धर्मपदेन कम्बुग्रीवादिमत्त्वमादाय तदधिकरणवृत्तयो ये उभयावृत्तिधर्मास्तत्तद्घटत्वादयस्तदवच्छिन्नप्रतियोगिताकानां निखिलतत्तद्घटाभावानां घटशून्ये देशे सत्त्वेऽपि,—तत्र कम्बुग्रीवादिमत्त्वरूपतद्धर्मावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या साध्याप्रसिद्धिः स्यात्, 'जाति'पदोपादाने तु,—कम्बुग्रीवादिमत्त्वस्य जातित्वाभावेन 'यज्जाति'पदेन तदुपादानासम्भवाद्घटत्वस्यैव 'यज्जाति'पदेनोपादानाद्घटविशेषाभाववति घटत्वजात्यवच्छिन्नाभावस्य प्रसिद्धया न साध्याप्रसिद्धिरिति भावः ।

ननु धर्मे 'उभयावृत्तित्वस्या'विशेषणत्वेपि संयोगत्वसमानाधिकरणीभूतगुणत्वसत्ताद्यवच्छिन्नप्रतियोगिताकस्य गुणसामान्याभावस्य, सत्तावदभावस्य च यावदन्तर्गतस्य,—गुणादावेव सत्त्वात्तत्र च संयोगसामान्याभावरूपसाध्यस्य सत्त्वेन निरुक्तहेतोर्व्यभिचाराप्रसक्तेरुभयावृत्तित्वदलं व्यर्थं, व्यभिचारवारकस्यैव विशेषणस्य सार्थकतायाः सर्वसम्मतत्वादित्याशङ्कते—**न चेति । सत्त्व-गुणत्वाद्येति** । तथा च सत्त्वगुणत्वाद्यवच्छिन्नप्रतियोगिताकाभावघटितानां यावतां संयोगत्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावानां वृक्षरूपे पक्षेऽसत्त्वात्स्वरूपासिद्धौ सत्यां तादृशधर्मे 'उभयावृत्तित्व'विशेषणस्य स्वरूपासिद्धिवारणमात्रप्रयोजनकत्वं भवितुमर्हति, न तु व्यभिचारवारणमपि प्रयोजनं तस्येति व्यर्थविशेषणघटिततया नीलधूमत्ववत्संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकयावदभावत्वस्यापि हेतुतावच्छेदकत्वमेव न सम्भवतीति हृदयम् ।

दीपिका

न च "तादृशोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वव्यापको य" इत्येवं क्रमेण यावत्पदार्थनिर्वचनेन न कोऽपि दोषः, व्यापकत्वञ्च—आधेयतासम्बन्धेनेति-वाच्यम् । संयोगीययावद्विशेषाभावस्य केवलान्वयितया तत्र चाधेयतासम्बन्धेन सर्वस्यैव वस्तुनः सत्त्वात्तत्सम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्य संयोगीयविशेषाभावत्वसमानाधिकरणस्याप्रसिद्ध्या व्यापकत्वानुपपत्तेरिति चेन्न ।

अखण्डाभावघटकतयैव यावत्पदस्य सार्थक्यसम्भवात् । एवञ्च यावत्पदघटिततादृशाभावस्य यावत्पदाघटिततादृशाभावतो भिन्नत्वात् स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितत्वरूपवैयर्थ्यं ( धर्मिभेदेन ) न सम्भवतीति हृदयम् ।

जागदीशी

वारकतया 'उभयावृत्ति'पदस्य वैयर्थ्यं,—व्यभिचारावारकत्वादिति वाच्यम्[1]; व्यभिचारवारकस्येवासिद्धिवारकस्यापि विशेषणस्य सार्थकतायाः पक्षधरमिश्रादिसम्मतत्वात् ।

अत एव शब्दोऽनित्यः सामान्यवत्त्वे सति विशेषगुणान्तरासमा-

विवृतिः

वैयर्थ्यमिति । संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावत्वे, तादृशाभावत्वसमानाधिकरणीभूतं तादृशाभावत्वानवच्छिन्नप्रकारतावच्छेदकञ्च यत्संयोगाभावव्याप्यतावच्छेदकं संयोगत्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वं,—तदवच्छिन्नप्रकारतावच्छेदकत्वस्य सत्त्वाद्व्यर्थविशेषणघटितस्य स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितधर्मवत एव व्यर्थत्वेन प्रकृताभिमतत्वम्, स्वपदं व्यर्थतावच्छेदकत्वेनाभिमतपरं, न चोभयावृत्तित्वघटितधर्मावच्छिन्नप्रतियोगिताकयावदभावतो भिन्न एव तदघटितधर्मावच्छिन्नप्रतियोगिताकाभाव इति न वैयर्थ्यमिति वाच्यम् । संयोगत्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वेनोभयावृत्तित्वघटिताभावानां तदघटितानाञ्चाभावानामैक्यसम्भवादिति विभावनीयम् ।

"यथा व्यभिचारवारकविशेषणासत्त्वदशायां हेतौ व्यभिचारनिश्चयेन व्याप्तिग्रहानुत्पत्त्याऽनुमित्युत्पादासम्भवात्पक्षे साध्यस्य निश्चेतुमशक्यत्वाद्व्यभिचारवारकं विशेषणं सार्थकं भवति, तथा स्वरूपासिद्धिवारकविशेषणासत्त्वदशायामपि हेत्वभाववत्पक्षरूपस्वरूपासिद्धिनिश्चयात्साध्यव्याप्यहेतुमान्पक्ष इत्याकारकनिश्चयात्मकपरामर्शोत्पादासम्भवात्कारणविरहेणानुमित्यनुत्पत्त्या पक्षे साध्यनिश्चयो न सम्भवतीति,—व्यभिचारवारकविशेषणस्य सार्थकतायामिव स्वरूपासिद्धिवारकविशेषणस्य सार्थकतायामपि युक्तेस्तौल्याद्भवति स्वरूपासिद्धिवारकविशेषणमपि सार्थकं, स्वरूपासिद्धिवारकविशेषणाघटितस्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदक—धर्मान्तरघटितस्यैव धर्मस्य व्यर्थतावच्छेदकत्वात्" इति मिश्राशयं मनसि विभाव्य समाधत्ते—व्यभिचारवारकस्येवेति । स्वरूपासिद्धिवारकविशेषणस्य सार्थकताया मिश्रादिसम्मतत्वे प्रमाणं दर्शयति—अत एवेति । शब्दोऽनित्य इति । 'शब्दो नित्य' इत्यपि क्वचित्पाठः । सामान्यवत्त्वे सति = जातिमत्त्वे सति, विशेष-

दीपिका

शब्दोऽनित्य इति । अत्र शब्दत्वे व्यभिचारवारणाय 'सामान्यवत्त्वे सती'

१ स्वरूपासिद्धेर्वारकस्योभयावृत्तिपदस्य वैयर्थ्यं, व्यभिचारवारकस्येवासिद्धिवारकस्यापीत्येवं काशीमुद्रितपाठः ।

### जागदीशी

नाधिकरणबहिरिन्द्रियग्राह्यत्वादिति हेतावसिद्धिवारकस्य शब्देतरार्थकस्य

### विवृतिः

गुणान्तरासमानाधिकरणत्वं = शब्दभिन्नविशेषगुणाधिकरणावृत्तित्वं, तच्च सामानाधिकरण्यसम्बन्धेन बहिरिन्द्रियग्राह्यत्वे विशेषणं, तथा च 'शब्दोऽनित्यो, जातिमत्त्वे सति—शब्दभिन्नविशेषगुणाधिकरणावृत्तित्वे च सति—बहिरिन्द्रियग्राह्यत्वादित्येवमनुमानप्रयोगे तात्पर्यमवसेयम् ।

**असिद्धिवारकस्येति** । तथा च शब्दभिन्नविशेषगुणार्थक 'विशेषगुणान्तर'पदानुपादानेऽधिकरणावृत्तित्वविशिष्टबहिरिन्द्रियग्राह्यत्वस्य शब्दरूपे पक्षेऽसत्त्वात्स्वरूपासिद्धिरस्ति, अधिकरणावृत्तित्वस्य शब्देऽसत्त्वाद्विशिष्टहेतोस्तत्र वर्त्तमानताया वक्तुमशक्यत्वात्, अतः स्वरूपासिद्धिवारकं हेतोः परम्परया विशेषणं 'विशेषगुणान्तर'पदमपि सार्थकमिति भावः ।

न चाधिकरणावृत्तित्वविशिष्टस्य बहिरिन्द्रियग्राह्यत्वस्याप्रसिद्ध्या हेत्वप्रसिद्धिरेवदोष आस्तां, न तु स्वरूपासिद्धिरिति वाच्यम्; तादृशाधिकरणावृत्तित्व—बहिरिन्द्रियग्राह्यत्वोभयस्यैव हेतुत्वाद्विशेषगुणान्तरपदानुपादानेपि; अधिकरणावृत्तित्वस्य गगनादौ, बहिरिन्द्रियग्राह्यत्वस्य च शब्दादौ, प्रसिद्धया प्रत्येकप्रसिद्ध्यं वोभयस्य प्रसिद्धत्वात्तादृशोभयस्य कुत्राप्यसत्त्वेन तदभावस्य केवलान्वयितया सर्वत्र सत्त्वेन शब्दरूपे पक्षेऽपि सत्त्वात्स्वरूपासिद्धेरावश्यकत्वादिति ध्येयम् ।

### दीपिका

त्युक्तम्, आत्मनि व्यभिचारवारणाय 'बहिरिन्द्रियग्राह्यत्व—'दलम्, कस्मिंश्चिदतीन्द्रिये शब्दे बहिरिन्द्रियग्राह्यत्वाभावाद्भागासिद्धिवारणाय 'बहिरिन्द्रियग्राह्यत्वमि'त्यनेन बहिरिन्द्रियग्राह्यतावच्छेदकजातिमत्त्वं विवक्षणीयम्, तथा च जलीयपरमाणुगतरूपे व्यभिचारवारणाय 'विशेषगुणान्तराऽसमानाधिकरणत्व'दलम् ।

**शब्दो नित्य इति** पाठे तु,—ध्वन्यात्मकशब्दध्वंसे व्यभिचारवारणाय 'सामान्यवत्त्वे सती'ति, घटे व्यभिचारवारणाय — 'विशेषगुणान्तरासमानाधिकरणत्वमिति, मनः क्रियायांव्यभिचारवारणाय 'बहिरिन्द्रियग्राह्यत्व'मिति ध्येयम् ।

ननु वर्णात्मकस्यैव शब्दस्य नित्यत्वं शब्दनित्यतावादिसम्मतं, तथा च ध्वन्यात्मकशब्दे व्यभिचार इति चेन्न, ध्वनिभिन्नत्वस्यापि हेतौ विशेषणीयत्वात्, पक्षोऽपि ध्वनिभिन्नः शब्दो बोध्यः, अन्यथा ध्वन्यात्मकशब्दे निरुक्तध्वनिभिन्नत्वविशिष्टबहिरिन्द्रियग्राह्यत्वरूपहेतोरवर्त्तमानतया भागासिद्धिः स्यादिति ध्येयम् ।

जागदीशी

'विशेषगुणान्तर'पदस्य शब्दमण्यालोके तैः सार्थकत्वं समर्थितम्'[1] ।

यद्वा,—'यो यदीययावद्विशेषाभाववान्' इत्यस्य[2],—यो यदीयानां= यद्धर्मावच्छिन्नप्रतियोगित्वानां, यावतां विशेषाभाववान् = प्रत्येकावच्छिन्नाभाववान्, स तद्धर्मावच्छिन्नाभाववान् इत्यर्थः। तथा च संयोगत्वावच्छिन्नप्रतियोगित्वव्यक्तीनां प्रत्येकावच्छिन्नाभावकूटवत्त्वस्य पक्षे सत्त्वान्नासिद्धिर्न वा व्यर्थविशेषणत्वमिति ध्येयम् ।

विवृतिः

शब्दमण्यालोके = शब्दखण्डीय-तत्वचिन्तामणि—व्याख्यानभूते पक्षधरमिश्राणामालोकनाम्नि ग्रन्थे, तैः = पक्षधरमिश्रैः, **सार्थकत्वमिति** । तन्मते व्यभिचारस्वरूपसिद्धिवारकविशेषणभिन्नविशेषणघटितस्यैव व्यर्थत्वादिति भावः ।

उभयावृत्तित्वस्य धर्मविशेषणत्वं —यत्सम्बन्धावच्छिन्नत्वस्य च प्रतियोगिताविशेषणत्वं—परित्यज्य लाघवात्कल्पान्तरमाह—**यद्वेति** । यदीययावद्विशेषाभाववानित्यादिदीधितिघटक'यदीय'पदस्य यावत्पदार्थेनान्वयाद् 'यदीयाना'मित्युक्तम् । यद्धर्मावच्छिन्नप्रतियोगित्वानां=संयोगत्वाद्यवच्छिन्नप्रतियोगित्वानां, प्रत्येकावच्छिन्नाभाववान् = तत्तत्प्रतियोगित्वावच्छिन्नप्रतियोगिताकाभाववान्, तत्तत्प्रतियोगितावान्नास्तीत्याकारकाभाववानिति यावत् । सः = वृक्षादिः, तद्धर्मावच्छिन्नाभाववान्= संयोगत्वाद्यवच्छिन्नाभाववान्, **इत्यर्थ इति** । 'यो यदीययावद्विशेषाभाववानि'त्यस्यार्थ इत्यर्थः । तथा च संयोगत्वाद्यवच्छिन्नतत्तत्प्रतियोगित्वावच्छिन्नप्रतियोगिताकानां 'तत्तत्प्रतियोगितावान्नास्ती'त्याद्यभावकूटानां वृक्षे सत्त्वात्तत्र संयोगत्वमात्रावच्छिन्नप्रतियोगिताकाभावस्य सिद्धिरिति हृदयम् ।

**नासिद्धिरिति** । उभयावृत्तित्वस्यानुपादानेऽपि पक्षे हेतोः सत्त्वान्न स्वरूपासिद्धिरिति भावः । **न वा व्यर्थविशेषणमिति** । स्वरूपासिद्धिवारकविशेषणस्य सार्थकत्वाभावेप्यत्र कल्पे स्वरूपासिद्धिवारकविशेषणासत्त्वान्न हेतोर्व्यर्थविशेषणघटिततया व्यर्थत्वमित्यभिप्रायः । एवं कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या 'यद्धर्म'पदेन कम्बुग्रीवादिमत्त्वस्योपादातुमशक्यतया 'जाति'पदानुपादानेऽपि न पूर्वोक्तव्यभिचार इत्यपि बोध्यम् ।

दीपिका

**यद्वेति** । नन्वत्र प्रत्येकपदं स्वरूपासिद्धिवारकम्, अन्यथा संयोगत्वावच्छिन्न-

---

१ अत एव नित्यत्वसाध्यकानुमाने सामान्यवत्त्वे सति विशेषगुणान्तरासमानाधिकरणैकमात्रवृत्तिगुणत्वहेतौ शब्देतरार्थकस्यान्तरपदस्येत्यादिक्रमेण क्वचित्पाठः ।

२ 'यो यदीययावद्विशेषाभाववान् इत्यस्य—य' इत्यन्तपाठः काशीमुद्रिते नास्ति ।

जागदीशी

योे यद्धर्म्मन्यूनवृत्तिधर्मावच्छिन्नयावदभाववान्,—स तद्धर्म्मावच्छिन्नाभाववान् इत्यर्थस्तु,—संयोगत्वन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्य घटावृत्तिसंयोगत्वादि—

विवृतिः

केचित्तु—"यो यदीययावद्विशेषाभाववानित्यस्य यद्धर्मसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति यद्धर्मसमानाधिकरणो यो धर्मस्तद्धर्मावच्छिन्नप्रतियोगिताकाभाववान्यो भवति स तद्धर्ममात्रावच्छिन्नप्रतियोगिताकाभाववान् भवतीत्यर्थः । तथा सति संयोगत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकं यत् संयोगत्वसमानाधिकरणीभूतं – तत्तत्संयोगत्वादिकं,—तत्तदवच्छिन्नप्रतियोगिताकाभाववान् वृक्ष इति,–तत्र संयोगत्वमात्रावच्छिन्नप्रतियोगिताकस्य संयोगसामान्याभावस्य सिद्धिरावश्यकी"त्याहुस्तन्मतं दूषयितुमुपन्यस्यति-**यो यद्धर्मन्यूनेति** । अत्रापि 'न्यूनवृत्तित्वं' स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति स्वसामानाधिकरण्यरूपं बोध्यं, भवति हि—संयोगत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकं संयोगत्वसमानाधिकरणं च तत्तत्संयोगत्वादिकमिति तदवच्छिन्नाभावस्य हेतुत्वे न कोऽपि दोष इत्यवधेयम् । **इत्यर्थस्त्विति** । 'यो यदीययावद्विशेषाभाववानि'त्यस्यार्थ इत्यर्थः । ननु कथं निरुक्तार्थस्यानुपादेयत्वमित्यत आह—**घटावृत्तीति** । तथा च घटावृत्तिसंयोगत्वस्य संयोगत्वाधिकरणीभूतघटवृत्ति-

दीपिका

प्रतियोगितावान्नास्तीत्यभावस्यापि यावदभावान्तर्गततया तस्य च पक्षेऽसत्त्वात्स्वरूपासिद्धिः, प्रत्येकपदोपादाने तु,—'यद्धर्मावच्छिन्नप्रतियोगित्ववृत्त्युभयावृत्तिधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकयावदभाववानि'त्यर्थलाभान्न दोषः, एवञ्चोभयावृत्तिपदमेव स्वरूपासिद्धिवारकम् ।

एवं 'यद्धर्मावच्छिन्नप्रतियोगिते'त्यत्र यद्धर्मनिष्ठावच्छेदकत्वं,–समवायसम्बन्धावच्छिन्नं वक्तव्यम्, अन्यथा कालिकेन संयोगत्ववतो वृक्षीयरूपादेरभावप्रतियोगित्वावच्छिन्नाभावस्य वृक्षेऽसत्त्वात्स्वरूपासिद्ध्यापत्तिः स्यात्, तथा चात्रापि कल्पे स्वरूपासिद्धिवारकविशेषणस्य सार्थकत्वमभ्युपगन्तव्यमेवेति चेन्न ।

यो यदवच्छेदकताकप्रतियोगितात्वव्यापकः स तदवच्छेदकताकतदितरनिष्ठावच्छेदकत्वानिरूपितप्रतियोगिताकाभाववानित्यर्थः, व्यापकता च,—स्ववृत्त्यभावीयप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकतादृशप्रतियोगितात्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वाभावरूपेति नाप्रसिद्धिः; स्वं = वृक्षः ।

जागदीशी

वृक्षान्यासमवेतत्वाद्यवच्छिन्नाभावस्य यावदन्तर्गतस्य वृक्षादौ स्वरूपासिद्धत्वादनुपादेयः[1]।

विवृतिः

संयोगनिष्ठघटावृत्तिसंयोगभेदप्रतियोगितावच्छेदकतया वृक्षवृत्तिसंयोगवृत्तितया च निरुक्तन्यूनवृत्तित्वात्तादृशघटावृत्तिसंयोगत्वावच्छिन्नाभावस्य घट एव सत्त्वेन पक्षे वृक्षेऽसत्त्वाद्भवत्युक्तार्थे स्वरूपासिद्धिरिति भावः।

ननूत्पत्तिकालावच्छेदेन वृक्षे कस्यापि संयोगव्यक्तेरसत्त्वेन घटावृत्तिसंयोगाभावस्यापि वृक्षे सत्त्वे बाधकाभावात्कुतः स्वरूपासिद्धिरित्यत आह—**वृक्षान्येति**।

केचित्तु—"पक्षताविशिष्टान्यत्वेन न्यूनवृत्तिधर्मो विशेषणीयः, वैशिष्ट्यञ्च,—स्वाश्रयवृत्तिवृत्तित्व, स्वानाश्रयवृत्तिवृत्तित्वोभयसम्बन्धेन, एवञ्च निरुक्तघटावृत्तिसंयोगत्वस्य वृक्षनिष्ठपक्षताश्रय–वृक्षवृत्तिसंयोग–वृत्तितया, तादृशपक्षतानाश्रय–पटसंयोग–वृत्तितया च निरुक्तोभयसम्बन्धेन पक्षताविशिष्टत्वात् 'यद्धर्मन्यूनवृत्तिधर्म'पदेन तस्य धर्तुमशक्यत्वान्न स्वरूपासिद्धिरित्यत आह—**वृक्षान्येती**"त्याहुः। वृक्षान्यासमवेतत्वं,—वृक्षभिन्ननिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभाववद्धर्मत्वं, तथा च तादृशधर्मत्वस्य संयोगत्वाधिकरणीभूतघटसंयोगनिष्ठभेदप्रतियोगितावच्छेदकत्वेन, संयोगत्वाधिकरणवृक्षसंयोगवृत्तित्वेन च संयोगत्वन्यूनवृत्तित्वाद् वृक्षत्वसाधारणतादृशवृक्षान्यासमवेतत्वावच्छिन्नाभावस्य च, वृक्षेऽसत्त्वाद्भवत्युक्तकल्पे स्वरूपासिद्धिरिति भावः। न च न्यूनवृत्तित्वं व्याप्यत्वमेव, तथा च वृक्षान्यासमवेतत्वस्य संयोगत्वाभाववति वृक्षीयरूपादौ सत्त्वात्संयोगत्वव्याप्यत्वाभावेन तादृशसमवेतत्वस्य संयोगत्वन्यूनवृत्तित्वाभावात्कुतः स्वरूपासिद्धिरिति वाच्यम्, उभयत्वस्य प्रत्येकावृत्तित्वमते संयोग–वृक्षत्वोभयत्वस्यापि संयोगत्वव्याप्यतया न्यूनवृत्तित्वात्तादृशोभयत्वावच्छिन्नाभावत्वस्य च वृक्षेऽसत्त्वात्स्वरूपासिद्ध्यापत्तेरिति ध्येयम्। इदमुपलक्षणम्,—एतत्कल्पे कम्बुग्रीवादिमत्त्वस्यापि 'यद्धर्म'पदेन धर्तुं शक्यतया तादृशकम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या साध्याप्रसिद्धिरित्यपि द्रष्टव्यम्। न च यज्जातिन्यूनवृत्तित्वमेव निवेश्यमिति वाच्यम्। तथा सति गौरवात्।

दीपिका

**वृक्षान्यासमवेतत्वेति**। न च वृक्षसमवेतत्वावच्छिन्नाभावमादायैव स्वरूपासिद्धिसम्भवे वृक्षान्यासमवेतत्वावच्छिन्नाभावमादाय स्वरूपासिद्ध्यभिधानमसङ्गतमिति वाच्यं, वृक्षसमवेतत्वस्य वृक्षीयरूपादौ प्रत्येकं विभिन्नतया तत्तत्संयोगनिष्ठवृक्षसमवे-

[1] 'वृक्षादौ पक्ष'इति काशीमुद्रितपाठः।

दीधितिः

**संयोगयावद्विशेषाभावा [1]एव मानं । यत्तदर्थयोरननुगमात्,**

जागदीशी

**&संयोगयावद्विशेषाभावा इति&** । [मानं= मानतावच्छेदकम् , आचार्यमतेनेदं वा] ।

न च सर्वावयवावच्छेदेन वृक्षादौ[2] गगनादेरेक एव संयोगो लाघवादिति तस्यैवाभावविरहात् संयोगयावद्विशेषाभाववत्त्वं पक्षे स्वरूपासिद्धमिति वाच्यम्; अतिप्रसङ्गभङ्गाय शाखादितत्तदवयवावच्छिन्नवृत्तिकसंयोगं प्रति तत्तदवयवत्वेन हेतुत्वस्यावश्यकतया वृक्षे व्याप्यवृत्तिगगनसंयोगस्यासम्भवादिति भावः ।

विवृतिः

ननु गगनसंयोगव्यक्तित्वस्याप्युभयावृत्तितया तदवच्छिन्नाभावस्य यावदन्तर्गतस्य वृक्षेऽसत्वान्निरुक्तहेतोः पक्षे स्वरूपासिद्धत्वमेवेत्याशङ्कते—**न चेति** । **सर्वावयवावच्छेदेन** = तत्तत्सकलशाखाद्यवच्छेदेन । 'एक एव गगनसंयोग' इत्यनेन गगनसंयोगव्यक्तित्वस्योभयावृत्तित्वमाविष्कृतम् । **लाघवादितीति** । अनन्तसंयोगस्वीकारे मानाभावादिति भावः । समाधत्ते—**अतिप्रसङ्गेत्यादि** । अतिप्रसङ्गभङ्गाय = तदवयवावच्छिन्नसंयोगस्यापरावयव उत्पत्तिरूपातिप्रसङ्गवारणाय, **शाखादितत्तदिति** । तथा च समवायेन तत्तदवयवावच्छिन्नवृत्तिकसंयोगं प्रति तादात्म्येन तत्तदवयवत्वेन हेतुत्वं वाच्यं, तादृशस्य तदवयवस्य तादात्म्येनावयवान्तरेऽसत्त्वान्न तदवयवावच्छिन्नसंयोगस्यावयवान्तर उत्पत्तिरिति भावः । न च तदवयवावच्छिन्नसंयोगस्य समवायेन कपिचरणे सत्त्वात्तत्र तादात्म्येन तदवयवविरहादुक्तकार्यकारणभावे व्यभिचार इति वाच्यम् । अनुयोगितासम्बन्धेन तदवयवावच्छिन्नवृत्तिकसंयोगं प्रत्येव तादात्म्येन तदवयवस्य हेतुताया वक्तव्यत्वादनुयोगितासम्बन्धेन तादृशसंयोगस्य च कपिचरणेऽसत्त्वेन व्यभिचाराभावादित्यवधेयम् । **व्याप्यवृत्तीति** । तथा चोक्तकार्यकारणभावानुरोधेन निरवच्छिन्नस्य कस्यापि संयोगस्य वृक्षादावसत्त्वान्न गगनसंयोगाभावमादाय स्वरूपासिद्धिरिति भावः ।

निरुक्तव्याप्तेरप्रामाणिकत्वे हेतुमाह—दीधितौ,—**यत्तदर्थयोरननुगमादिति** ।

दीपिका

तत्त्वस्यैव संयोगत्वन्यूनवृत्तितया तदवच्छिन्नाभावस्य तत्तदवयवावच्छेदेन वृक्षे सत्त्वात्स्वरूपासिद्ध्यसम्भवादतो 'वृक्षान्यासमवेतत्व'पर्यन्तानुसरणम् ।

---

१ 'यावत्संयोगाभावा'इति काशी-काञ्ची-मुद्रितपाठः । २ 'वृक्षे' इति काशीमुद्रितपाठः ।

दीधितिः

**एकावच्छेदेन यावद्विशेषाभाववत्त्वस्योपाधित्वाच्च ।**

जागदीशी

प्राचां मते यत्तदर्थयोरनुगतत्वादाह,[1]—**एकावच्छेदेनेति** इदमुपाधेः साधनाव्यापकत्वरक्षायै । न चैवं तत्तत्संयोगाभावस्य गुणे व्याप्यवृत्तित्वादेकावच्छेदेन साध्यव्यापकत्वं दुर्घटमिति वाच्यम्; 'एकावच्छेदेन' इत्यनेन निरवच्छिन्नवृत्तिकत्वविशिष्टस्य विवक्षितत्वात् ।

विवृतिः

तथा च यत्तदोस्तत्तद्व्यक्तिपर्यवसायितया यत्किञ्चिदेकव्यक्तेरुपादानेऽपरस्या असङ्ग्रहादनुगतव्याप्तिरेव न सम्भवतीति भावः । **एकावच्छेदेनेत्यादि**दीधितिग्रन्थोत्थितिबीजं दर्शयति—**प्राचामिति । यत्तदर्थयोरनुगतत्वेति** । तथा च तदादीनां बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नार्थकतया न यत्तत्पदोपादानेऽपि व्याप्तेरननुगम इति भावः । इदम् = 'एकावच्छेदेने'त्यादिविशेषणदानं, उपाधेः = संयोगीययावद्विशेषाभावस्य, **साधनाव्यापकत्वेति** । तथा 'चैकावच्छेदेने'त्यस्यानुपादाने संयोगीययावद्विशेषाभाववत्त्वस्यैवोपाधितया तस्य च हेतुस्वरूपत्वेन हेतुव्यापकत्वात् स्वस्य स्वव्यापकतायामविवादाद्धेत्वव्यापकत्वमुपाधौ न घटतेऽत 'एकावच्छेदेने'त्यस्योपादानमिति भावः । एवञ्च संयोगसामान्याभावस्य गुणादावुभयवादिसिद्धतया तत्र च गुणत्वरूपैकावच्छेदेन संयोगीययावद्विशेषाभावस्य सत्त्वान्निरुक्तोपाधेः साध्यव्यापकत्वम् । संयोगीययावद्विशेषाभाववत्त्वस्य हेतोर्वृक्षे उभयवादिसिद्धतया तत्र चैकावच्छेदेन संयोगीययावद्विशेषाभाववत्त्वासत्त्वादेकावच्छेदेन संयोगीययावद्विशेषाभाववत्त्वस्य हेत्वव्यापकत्वं सुलभमिति तस्योपाधित्वमावश्यकमित्यवधेयम् । **न चेति । वाच्यमिति** परेणान्वयः । गुणे व्याप्यवृत्तित्वात् = गुणे निरवच्छिन्नवृत्तित्वात्, तथा चैकावच्छिन्नसंयोगीययावद्विशेषाभावस्य साध्यवति गुणेऽसत्त्वान्निरुक्तोपाधेर्न साध्यव्यापकत्वमिति शङ्कितुरभिप्रायः । **निरवच्छिन्नेति** । किञ्चिदनवच्छिन्नवृत्तिकत्वविशिष्टस्य संयोगीययावद्विशेषाभाववत्त्वस्योपाधित्वेन विवक्षिततया तस्य च संयोगसामान्याभाववति गुणे सत्त्वे बाधकाभावाद्भवत्युपाधेः साध्यव्यापकत्वमित्याशयः ।

ननु 'यत्र यज्जात्यवच्छिन्नाभावस्तत्र निरवच्छिन्नवृत्तिकत्वविशिष्टतज्जाति समानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाव' इत्येवं साध्योपाध्योर्व्यापकत्वमवश्यं वाच्यं, तच्च न सम्भवति, कपिसंयोगत्वरूपजात्यवच्छिन्नाभावस्य वृक्षे सर्वसम्मततया तत्र च निरवच्छिन्नवृत्तिकत्वविशिष्टस्य कपिसंयोगत्वसमाना-

---

[1] 'प्राचीनमते यत्त्व-तत्त्वयोरनुगमादाहे'ति प्रामाणिकपुस्तकपाठः ।

जागदीशी

न च तथाऽपि कपिसंयोगसामान्याभाववति वृक्षे निरवच्छिन्नवृत्तिकत्व-विशिष्टस्य तदीययावद्विशेषाभावस्यासत्त्वादुपाधेः साध्याव्यापकत्वमिति वाच्यम्; जात्यवच्छिन्नाभावस्यैवोक्तव्याप्तौ साध्यविधया प्रवेशात्, कपिसंयोगाभावस्य चातथात्वेन तं प्रति तदीययावद्विशेषाभावस्यो क्तरूपेणाव्यापकत्वेऽपि क्षत्यभावात् ।

विवृतिः

धिकरणोभयावृत्ति तत्तत्कपिसंयोगत्वादिरूपधर्मावच्छिन्नप्रतियोगिताकयावदभावस्यासत्त्वात्, वृक्षादौ किञ्चिदवच्छिन्नस्यैव तत्तत्संयोगाभावस्य स्वीकरणीयत्वादिति कपिसंयोगाभावरूपसाध्यव्यापकत्वं नोक्तनिरवच्छिन्नवृत्तिकत्वविशिष्टस्य कपिसंयोगीययावद्विशेषाभाववत्त्वस्य सम्भवतीत्याशङ्कते—**न चेति** । जात्यवच्छिन्नाभावस्य जातिमात्रावच्छिन्नाभावस्य, उक्तव्याप्तौ='यो यदीये'त्यादिसामान्यव्याप्तौ, साध्यविधया = साध्यत्वेन रूपेण, **प्रवेशादिति** । यो यदीयेत्यस्य–'यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववान् स तज्जातिमात्रावच्छिन्नाभाववानि'त्यर्थकरणादित्यर्थः । कपिसंयोगाभावस्य = कपिप्रतियोगिकत्व—संयोगत्व–धर्मद्वयावच्छिन्नप्रतियोगिताकाभावस्य, अतथात्वेन = जातिमात्रावच्छिन्नाभावत्वाभावेन, तं प्रति = कपिसंयोगाभावं प्रति, तदीययावद्विशेषाभावस्य = कपिसंयोगीययावद्विशेषाभावस्य, उक्तरूपेण = निरवच्छिन्नवृत्तिकत्वविशिष्टकपिसंयोगीययावद्विशेषाभावत्वेन रूपेण ।

**क्षत्यभावादिति** । तथा च 'यो यज्जातिमात्रावच्छिन्नाभाववान् भवति स निरवच्छिन्नवृत्तिकत्वविशिष्टतज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववान् भवती'त्यस्यैव साध्योपाध्योर्व्यापकत्वस्यादरणीयतया कपिसंयोगाभावस्य च कपिप्रतियोगिकत्व—संयोगत्व–धर्मद्वयावच्छिन्नप्रतियोगिताकतया जातिमात्रावच्छिन्नाभावत्वाभावात्, 'यज्जाति' पदेन कपिसंयोगत्वस्य धर्त्तुमशक्यत्वात्; संयोगत्वस्यैव धर्त्तव्यतया तादृशसंयोगत्वावच्छिन्नाभाववति गुणे निरवच्छिन्नवृत्तिकत्वविशिष्टस्य तत्तत्संयोगयावद्विशेषाभाववत्त्वस्य सत्त्वेन निरुक्तोपाधेः साध्यव्यापकत्वमक्षतमिति भावः ।

ननु तथापि शब्दजनकतावच्छेदकीभूताभिघातत्वरूपजातिमात्रावच्छिन्नाभावस्याभिघातसामान्याभावस्य वृक्ष उभयवादिसिद्धतया,—तत्र च निरवच्छिन्नवृत्तिकत्वविशिष्टस्याभिघातीययावद्विशेषाभाववत्त्वस्यासत्त्वात्,—"यत्र यज्जातिमात्रावच्छिन्नाभावस्तत्र निरवच्छिन्नवृत्तिकत्वविशिष्टतज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्न प्रतियोगिताकयावदभाव" इतिव्याप्तौ व्यभिचारात्कुतः साध्यव्यापकत्वमुपाधेः

जागदीशी

न चाभिघातादि ( संयोग ) सामान्याभावस्य वृत्ते सत्त्वात् तत्र ( च ) निरवच्छिन्नवृत्तिकत्वविशिष्टस्य तदीययावद्विशेषाभावस्यासत्त्वादेवोपाधेः साध्याव्यापकत्वमिति वाच्यम्; गुणविभाजकजातेरेव हेतु-साध्ययोः प्रवेशात् ।

विवृतिः

सम्भवतीति शङ्कते—न चेति । वाच्यमिति परेणान्वयः । **गुणविभाजकजातेरेवेति** । गुणत्वभिन्न-गुणत्वव्याप्यव्याप्यभिन्न-गुणत्वव्याप्यजातेरेवेत्यर्थः । तादृशी च जाती,–रूपत्व–संयोगत्वादिरूपा, नत्वभिघातत्वादिस्वरूपा, तस्याः संयोगविभाजकजातितया गुणत्वव्याप्यव्याप्यत्वेन तद्भिन्नत्वविरहादित्यवधेयम् ।

**हेतु–साध्ययोरिति** । षष्ठ्यर्थो घटकत्वमन्वयश्चास्य जातौ, तथा च 'द्वन्द्वान्ते श्रूयमाण'मिति न्यायाद्धेतुघटकतया साध्यघटकतया च गुणविभाजकजातिः प्रवेश्येत्यर्थः । न च साध्यघटकत्वमेव गुणविभाजकजातौ प्रवेश्यतां, किं हेतुघटकतया गुणविभाजकजातेः प्रवेशेनेति वाच्यम् । हेतुघटकतया गुणविभाजकजातेः प्रवेशे कृत एव साध्यघटकतयाऽपि गुणविभाजकजातेः प्रवेशः सम्भवति, यज्जातिसमानाधिकरणेत्यादिनैकस्या एव जातेर्हेतुसाध्यघटकतया प्रवेशस्य ग्रन्थकारसम्मतत्वादिति वदन्ति । एवञ्च 'यो गुणविभाजकजातिमात्रावच्छिन्नाभाववान् स निरवच्छिन्नवृत्तिकत्वविशिष्टगुणविभाजकजातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताक यावदभाववानि' त्येवं साध्योपाध्योर्व्यापकत्वस्यादरणीयतयाऽभिघातत्वस्य च गुणविभा जकजातित्वाभावाद् 'गुणविभाजकजाति'पदेन संयोगत्वस्यैव धर्तव्यतया तादृशसंयोगत्वावच्छिन्नाभाववति गुणे निरवच्छिन्नवृत्तिकत्वविशिष्टसंयोगीययावद्विशेषाभावस्याक्षततयोपाधेः साध्यव्यापकत्वं निराबाधमेवेत्याशयः ।

दीपिका

**गुणविभाजकजातेरेवेति** । तथा च 'यो गुणविभाजकयज्जातिसमानधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकयावदभाववान् स गुणविभाजकजातिमात्रावच्छिन्नाभाववानिति'व्याप्तौ तात्पर्यम् ।

ननु तथापि गुणविभाजकरूपत्वावच्छिन्नसामान्याभावस्य साध्यस्योत्पत्तिकालीने घटेऽपि सत्त्वात् तत्र निरवच्छिन्नवृत्तिकत्वविशिष्टरूपीययावद्विशेषाभावस्यासत्त्वात् कुतः साध्यव्यापकत्वमुपाधेरिति चेन्न । दैशिकाव्याप्यवृत्तितावच्छेदकत्वस्य जातौ विशेषणीयत्वात् ।

न चैवं घटाद्यवच्छेदेन ज्ञानसामान्याभाववत्यात्मनि, देशान्तरावच्छेदेन च शब्द-

जागदीशी

[ केचित्तु 'एकावच्छेदेने'त्यस्य,—अवच्छेदकतासम्बन्धेन तदभावाधिकरणीभूतदेशस्यावच्छेद्यतासम्बन्धेनाभाववत्त्वेनेत्यर्थः, तथा च तद्विशिष्टयावद्विशेषाभाववत्त्वमुपाधिरित्याहुस्तच्चिन्त्यम् ।]

यत्तु 'एकावच्छेदेने'त्यस्य परस्परानवच्छेदकानवच्छेद्यवृत्तिकत्वविशिष्टेत्यर्थमाहुः, तन्न; व्याप्यवृत्तिरूपादीनां विशेषाभावस्यावच्छेदकाप्रसिद्ध्या तदनवच्छेदकस्याप्यसम्भवेन तत्रैव साध्याव्यापकत्वतादवस्थ्यादिति दिक् ।

विवृतिः

**केचित्त्विति । आहुरित्यनेनान्वयः । परस्परेति ।** परस्परस्य=तत्तत्संयोगाभावस्य, योऽनवच्छेदको=देशः; तदनवच्छिन्नवृत्तिकत्वविशिष्टयावद्विशेषाभावस्योपाधित्वमित्याशयः । वस्तुतस्तत्तदभावानवच्छेदकानवच्छिन्नत्वे सति तत्तदभावानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टस्येत्यर्थः । तेनैतत्कल्पे गुणविभाजकजात्यनिवेशेन लाघवमित्यवधेयम् ।

"संयोगसामान्याभावरूपसाध्यवति गुणे तत्तत्संयोगाभावस्य—परस्परानवच्छेदको यः परस्परसंयोगाधिकरणो देशः—तदनवच्छिन्नवृत्तिकत्वविशिष्टस्य तत्तत्संयोगीययावद्विशेषाभाववत्त्वस्य सत्त्वादुपाधेः साध्यव्यापकता, संयोगीययावद्विशेषाभावरूपहेतुमति च वृक्षे तत्तत्संयोगाऽभावयोः परस्परानवच्छेदकदेशानवच्छिन्नवृत्तिकत्वविशिष्टस्य तादृशसंयोगीययावद्विशेषाभावस्यासत्त्वान्निरुक्तोपाधेर्हेत्वव्यापकताऽपि बोध्येति" केषाञ्चिन्मतं दूषयति—**तन्नेति ।** व्याप्यवृत्तिरूपादीनां=निरवच्छिन्नवृत्तिकत्वविशिष्टरूपादीनां, विशेषाभावस्य= तद्रूपाभावस्य, **अवच्छेदकाप्रसिद्ध्येति ।** व्याप्यवृत्तीनां निरवच्छिन्नतयैव वर्त्तमानत्वादिति भावः । तदनवच्छेदकस्य=व्याप्यवृत्तितद्रूपाभावानवच्छेदकस्य, तत्रैव= रूपसामान्याभावसाध्यकस्थल एव, **साध्याव्यापकत्वेति ।** रूपत्वरूपजात्यवच्छिन्नाभाववति गुणादौ रूपीयविशेषाभावान्तर्गतव्याप्यवृत्तिरूपाभावस्यावच्छेदकाप्रसिद्ध्या

दीपिका

सामान्याभाववत्याकाशे निरवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशेषाभावस्यासत्त्वादुपाधेर्न साध्यव्यापकत्वमिति वाच्यं, तादृशजातौ चतुःक्षणवृत्तिजन्यवृत्तित्वस्यापि विवक्षणीयत्वात्, शब्दत्व-ज्ञानत्वादेश्च चतुःक्षणवृत्तिजन्यवृत्तित्वाभावान्न कोऽपि दोष इति ध्येयम् ।

दीधितिः

एतेन—अयं संयोगसामान्याभाववान् संयोगयावद्विशेषाभाववत्त्वादिति निरस्तं, व्यर्थविशेषणत्वात्, अप्रयोजकत्वात्, निर्गुणत्वादेरुपाधित्वाच्च ।

जागदीशी

यत्तद्भ्यां विना कृतमनुगतमनुमानमाशङ्क्य निषेधति, ❀एतेनेति❀ । वक्ष्यमाणदोषेणेत्यर्थः । ❀व्यर्थेति❀ । संयोगसामान्याभावस्य तन्मते केवलान्वयितया तत्साध्यतायामभाववत्त्वादित्यस्यैव सम्यक्त्वादिति भावः । अथाभाववत्त्वादिकमेव तर्हि हेतुरस्तु, अत आह, ❀अप्रयोजकत्वादिति❀ ।—(अनुकूलतर्कविरहादित्यर्थः) ।

ननु निरुपाधिकत्वमेव प्रयोजकमत आह, ❀निर्गुणत्वादेरिति❀ ।—आदिना द्रव्यभिन्नत्वादेरुपग्रहः ।

विवृतिः

तादृशरूपाद्यभावानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टयावद्विशेषाभावस्याप्यसम्भवादुपाधित्वाभावेन कुतो रूपसामान्याभावव्यापकत्वमुपाधेरिति भावः ।

**यत्तद्भ्यां विनेति ।** यत्तत्पदपरित्यागेनेत्यर्थः । अनुगतानुमानम् = 'अयं सयोगसामान्याभाववानि'त्याकारकानुमानप्रयोगं, निषेधति = दूषयति, तन्मते = प्राचीनमते, संयोगसामान्याभावस्य द्रव्ये सत्त्वं वदतां मत इति यावत् । केवलान्वयितया=सर्वत्र विद्यमानतया, तत्साध्यतायां = संयोगाभावसाध्यतायां, **सम्यक्त्वादितीति ।** तथा च संयोगसामान्याभावस्येवाभाववत्त्वस्यापि केवलान्वयितयाऽभाववत्त्वस्यैव हेतुत्वसम्भवे व्यर्थं संयोगीययावद्विशेषपर्यन्तानुसरणमिति भावः ।

अयं संयोगसामान्याभाववान् अभाववत्त्वादित्युक्तौ दीधितिकृदुक्तदोषमाह—**अप्रयोजकत्वादिति । अनुकूलतर्कविरहादिति ।** तथा चाभाववत्त्वं यदि संयोगसामान्याभावव्यभिचारि स्यात्तदा न किमपि दूषणं स्यादतोऽनुकूलतर्काभावेन हेतौ व्यभिचारसंशयाद्व्याप्तिग्रहानुत्पत्त्या संयोगसामान्याभावानुमितिरेव न भवितुमर्हतीति हृदयम् । **निरुपाधिकत्वमेवेति ।** तथा च "अभाववत्त्वं यदि संयोगसामान्याभावव्यभिचारि स्यादुपाधिमदपि स्यात्, यतो नोपाधिमदत एवाव्यभिचारी"—त्याकारकानुकूलतर्काद्व्यभिचारसंशयविघटनेन व्याप्तिनिश्चयः सम्भवतीति भावः ।

**निर्गुणत्वादेरितीति ।** गुणसामान्याभावस्वरूपनिर्गुणत्वस्योत्पत्तिकालावच्छेदेन वृक्षे सत्त्वान्निरुक्तोपाधेर्हेतुव्यापकत्वमपि स्यादत 'आदि' पदग्राह्यं प्रदर्शयति—**आदिनेति ।** तथा च द्रव्यभिन्नत्वस्य वृक्षादावसत्त्वाद्धेतुव्यापकत्वं, संयोगसामा-

जागदीशी

अत्र यद्यपि निर्गुणत्वोपाधेर्न स्वाभावेन साध्याभावोन्नायकतया दोषत्वं, संयोगस्यैव साध्याभावतया वृक्षादौ तस्येष्टत्वात्, नापि व्यभिचारोन्नायकतया, तत एव, तथाऽपि स्वव्याप्यत्वेन साध्यस्य पक्षवृत्ति-

विवृतिः

न्याभावस्य गुण उभयवादिसिद्धतया तत्र च द्रव्यभिन्नत्वादेः सत्त्वेन साध्यव्यापकत्वञ्च बोध्यम् ।

उपाधेर्दूषकतां प्रदर्शयितुं शङ्कते—**अत्र यद्यपीति**। निर्गुणत्वोपाधेः = गुणसामान्याभावरूपोपाधेः, स्वाभावेन=गुणसामान्याभावाभावेन, गुणस्वरूपेणेति यावत् । स्वाभाववत्त्वसम्बन्धेन निरुक्तोपाधिना वा, साध्याभावोन्नायकतया=संयोगाभावाभावानुमापकतया, दोषाभावे हेतुमाह—**संयोगस्यैवेति** । **तस्येष्टत्वादिति** । अयं भावः—यथा धूमवान्वह्नेरित्यत्र धूमव्यापकीभूतस्यार्द्रेन्धनसंयोगरूपोपाधेरभावेन धूमाभावनिश्चयात्पक्षे धूमानुमितिर्न सम्भवति, धूमाभावनिश्चयस्यैव प्रतिबन्धकत्वात्, तथाऽत्रापि संयोगसामान्याभावव्यापकीभूतस्य निर्गुणत्वरूपोपाधेरभावेन गुणस्वरूपेण संयोगाभावाभावस्य निश्चयात्संयोगाभावानुमितिर्न भवितुमर्हतीति वक्तुं न शक्यते, संयोगसामान्याभावस्येव संयोगस्यापि प्राचां मतेऽव्याप्यवृत्तितया संयोगाभावाभावनिश्चयस्य संयोगाभावानुमितावप्रतिबन्धकत्वादिति ।

**व्यभिचारोन्नायकतयेति** । प्रकृतहेत्वभिमते साध्याभाववद्वृत्तित्वरूपव्यभिचारानुमापकतया, स्वाभाववद्वृत्तित्वसम्बन्धेनोपाधेर्दोषत्वं नापीत्यर्थः । तत्र हेतुमाह—**तत एवेति** । इष्टापत्तेरेवेत्यर्थः । तथा च धूमवान्वह्नेरित्यत्र यथा धूमव्यापकीभूतार्द्रेन्धनसंयोगरूपोपाध्यभाववद्वृत्तित्वेन हेतुना प्रकृतहेत्वभिमते वह्नौ धूमाभाववद्वृत्तित्वरूपव्यभिचारस्य निश्चयाद्धेतौ व्याप्तिग्रहानुदयेन धूमानुमितिरेव पक्षे न सम्भवति, तथात्रापि संयोगसामान्याभावव्यापकीभूतगुणसामान्याभावरूपोपाध्यभाववद्वृत्तित्वेन हेतुना प्रकृतहेत्वभिमते संयोगीययावद्विशेषाभावेऽभाववत्त्वे वा,–संयोगाभावरूपसाध्यस्य योऽभावः संयोगस्वरूपः–तद्वद्वृत्तित्वरूपव्यभिचारनिश्चयाद्व्याप्तिग्रहानुत्पत्त्या संयोगाभावानुमितिरेव न सम्भवतीत्यपि न, संयोगसामान्याभावस्य केवलान्वयित्वं स्वीकुर्वतां प्राचीनानां मते तस्याव्याप्यवृत्तितया प्रकृतहेतोः संयोगाभावरूपसाध्यवद्वृत्तित्वस्येव साध्याभावसंयोगवद्वृत्तित्वस्यापीष्टत्वसम्भवाद्धेतौ संयोगवद्वृत्तित्वनिश्चयस्य व्याप्तिग्रहाप्रतिबन्धकत्वादिति भावः ।

उत्तरयति—**तथापीति** । स्वव्याप्यत्वेन = निर्गुणत्वरूपोपाधिव्याप्यत्वेन,

दीधितिः

**न च प्रतियोग्यनवच्छेदकतयैव वृक्षत्वादेरभावावच्छेदकत्वं, गुणाद्यनवच्छेदकप्रमेयत्वादेस्तदभावावच्छेदकत्वप्रसङ्गात्।**

जागदीशी

त्वाभावोन्नायकतया दूषकत्वं बोध्यं, 'संयोगसामान्याभावो न[१] पक्षवृत्तिर्निर्गुणत्वव्याप्यत्वा'दित्यनुमानेनापि 'वृक्षः संयोगसामान्याभाववान्' इत्यनुमितेः प्रतिरोधादिति ध्येयम्।

ननु 'यो यद्धर्मस्यानवच्छेदकः, स तदभावस्यावच्छेदक' इति' व्याप्त्यैव वृक्षत्वादेः संयोगाभावावच्छेदकत्वं[२] सेत्स्यतीत्याशङ्क्य निराचष्टे—॥न चेति॥ ॥गुणादीति॥।—तथा च व्यभिचारान्नोक्तव्याप्तिरिति भावः।

विवृतिः

साध्यस्य = संयोगसामान्याभावस्य, पक्षवृत्तित्वाभावोन्नायकतया = पक्षवृत्तित्वाभावानुमापकतया, दूषकत्वम् = अनुमित्यनुत्पादप्रयोजकत्वम्, उपाधेरिति शेषः। "गुणसामान्याभावरूपोपाधिर्यदि संयोगसामान्याभावव्यापकस्तर्हि संयोगसामान्याभावेऽपि गुणसामान्याभावव्याप्यत्वमवश्यं स्वीकरणीयं, तच्च गुणसामान्याभावाभावात्मकगुणवदवृत्तित्वम्, एवञ्च निरुक्तोपाधिसत्त्वे संयोगसामान्याभावस्य गुणवदवृत्तितया वृक्षावृत्तित्वमपि निश्चेयम्, वृक्षावृत्तित्वनिश्चये च 'वृक्षः संयोगसामान्याभाववानि'त्यनुमितिरेव न सम्भवति, निरुक्तनिश्चयस्य संयोगसामान्याभावानुमितौ विरोधित्वादि"त्याशयं स्फुटीकरोति – **संयोगसामान्याभावो नेति**। निर्गुणत्वव्याप्यत्वात् = गुणवदवृत्तित्वात्, इत्यनुमानेन = इत्यनुमानजन्यवृक्षावृत्तित्वनिश्चयेन, **प्रतिरोधादिति**। सामानविषयकज्ञानस्यैव प्रतिबन्धकत्वादिति भावः। सामानविषयकज्ञानस्य प्रतिबन्धकत्वे विवादाद्'ध्येयमि'त्युक्तम्।

दीधितौ – **न चेति**। अस्याभावावच्छेदकत्वमित्यनेनान्वयः। 'यदभावप्रतियोग्यनवच्छेदकं यद्भवति तत्तदभावावच्छेदकं भवती'त्येवं सामान्यव्याप्तिरिति समुदितार्थः। भवति हि 'संयोगाभावप्रतियोगिनः संयोगस्यानवच्छेदकं वृक्षत्वं, तत्संयोगाभावस्यावच्छेदकं स्या'दिति तात्पर्याद्वृक्षत्वावच्छेदेन संयोगसामान्याभावसिद्धिः। ननु कथं नोक्ता व्याप्तिरित्यत आह – **गुणाद्यनवच्छेदक इति**। तथा च गुणाभावप्रतियोगिनां गुणानामनवच्छेदकत्वस्य प्रमेयत्वे सत्त्वात्तत्र गुणाभावावच्छेदकत्वस्य साध्यस्यासत्त्वेन व्यभिचारान्नोक्ता व्याप्तिः साधीयसीति भावः।

उक्तार्थं स्पष्टयति – **नन्विति**। यः = वृक्षत्वादिः, सः = वृक्षत्वादिः,

---

१ वृक्षवृत्तिरिति बहुषु पुस्तकेषु पाठः।

२ संयोगसामान्याभावावच्छेदकत्वमिति काशीमुद्रितपाठः।

दीधितिः

**यथा च घटपूर्ववर्त्तित्वस्य प्रतिदण्डं,**

जागदीशी

ननु 'वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यानवच्छेदकत्वात्' इति विशिष्यैव व्याप्तिर्वाच्या, प्रमेयत्व—सत्त्वादेः पक्षसमत्वादतः स्वरूपासिद्धिमाह,—※यथा चेति※। ※प्रतिदण्डमिति※।—'भिन्नत्वेऽपी'ति परेणान्वयः।

**ननु अव्यवहितपूर्ववर्त्तिताया अवच्छेदकं न दण्डत्वमतिप्रसङ्गात्,**

विवृतिः

तद्भावस्य = संयोगादेरभावस्य, निराचष्टे = दूषयति।

दीधितिग्रन्थोत्थितौ बीजमाह – **नन्विति**। ननु यथा 'वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यानवच्छेदकत्वादि'त्यादिविशेषव्याप्तिः सम्भवति, तथा 'प्रमेयत्वं–सत्ता वा, – गुणसामान्याभावावच्छेदकं; गुणसामान्यानवच्छेदकत्वादि'त्यपि विशेषव्याप्त्या प्रमेयत्वादौ गुणसामान्याभावावच्छेदकत्वं सिध्यत्वित्यत आह – **प्रमेयत्वसत्वादेरिति**। पक्षसमत्वात् = पक्षतुल्यत्वात्, पक्षातिरिक्तसन्दिग्धसाध्यकत्वादिति यावत्, तथा च प्रमेयत्वसत्त्वादावपि गुणसामान्याभावस्य सन्दिग्धतया पक्षसमे व्यभिचारस्य व्याप्तिग्रहाप्रतिवन्धकत्वेन निरुक्तविशेषव्याप्तिग्रहोत्पत्तावविवाद इति भावः, तथा चोक्तं – "पक्षे पक्षसमे वा व्यभिचारो न दोषायेति।

दीधितौ—**यथेति**। यथा घटाव्यवहितपूर्ववृत्तित्वं प्रत्येकस्मिन् दण्डे विभिन्नमपि तादृशाव्यवहितपूर्ववर्त्तितासामान्यस्यावच्छेदकं दण्डत्वं भवितुमर्हति, यथा वा वह्न्यधिकरणवृत्तित्वं प्रत्येकधूमनिष्ठं विभिन्नमपि तादृशवृत्तितासामान्यस्यावच्छेदकं धूमत्वं, तथा प्रत्येकावयवनिष्ठसंयोगादेर्विभिन्नत्वेऽपि संयोगसामान्यस्यावच्छेदकं द्रव्यत्वं वृक्षत्वं वा स्वीकार्यमिति समुदितार्थः। एवञ्च वृक्षत्वरूपे पक्षे संयोगसामान्यानवच्छेदकत्वस्यासत्त्वेन हेत्वभावाद्भवति स्वरूपासिद्धिरित्याशयः।

दृष्टान्तद्वयानुसरणबीजमाह—**नन्विति**। अव्यवहितपूर्ववर्त्तितायाः=घटाव्यवहितपूर्ववर्त्तितायाः, **अतिप्रसङ्गादिति**। घटाव्यवहितपूर्ववर्त्तित्वाभाववत्यरण्यस्थदण्डे दण्डत्वस्य सत्त्वादनतिरिक्तवृत्तित्वरूपधर्मस्यैवावच्छेदकत्वनियमात्;

दीधितिः

**वह्निसामानाधिकरण्यस्य वा प्रतिधूमं,-भिन्नत्वेऽपि; दण्डत्वं, धूमत्वं वा तत्सामान्यस्यावच्छेदकं, तथैव 'संयोगसामान्यस्याव-च्छेदकं द्रव्यत्वादिक'मित्यस्यापि सुवचत्वाच्चेति-सम्प्रदायविदः ।**

जागदीशी

किन्तु अव्यवहितपूर्ववर्त्तिजातीयतायाः, सा च न[1] भिन्ना, अतः संयोगस्थल एवानुरूपं दृष्टान्तमाह,—❀वह्नीति❀। ❀तत्सामान्यस्येति❀। घटपूर्ववर्त्तित्वसामान्यस्य, वह्निसामानाधिकरण्यसामान्यस्य चेत्यर्थः ।

केचित्तु—'कथितव्याप्तावप्रयोजकत्वम्, अन्यथा तदभावानवच्छेद-कत्वहेतुना तदवच्छेदकत्वमेव कुतो न वृत्तत्वादेः साध्यते, वृत्तत्वाद्य-वच्छेदेन तत्तत्संयोगव्यक्तीनामसत्त्वेऽपि संयोगसामान्यस्य सम्भवादि—

विवृतिः

अन्यथा पटत्वादेरपि घटाव्यवहितपूर्ववर्त्तितावच्छेदकत्वं स्यादिति भावः । अव्य-वहितपूर्ववर्त्तिजातीयतायाः = घटाव्यवहितपूर्ववर्त्तिजातीयतायाः, तादृशजातीयत्व-ञ्च,—घटाव्यवहितप्राक्क्षणावच्छेदेन घटाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदक-धर्मवत्त्वरूपं, तादृशश्च धर्मो दण्डत्वादिः, तादृशधर्मवत्त्वरूपाया जातीयताया अभिन्नायाः सकलदण्डादिसाधारणतया,—तदभाववति दण्डत्वादेरवर्तमानत्वात्,—तस्या एवावच्छेदकं दण्डत्वमिति भावः ।

अत इति । निरुक्तदृष्टान्तस्यासम्भवादित्यर्थः, **अनुरूपमिति** । संयोगस्य विभिन्नत्वेन वह्निसामानाधिकरण्यस्यापि विभिन्नतया,—तुल्यदृष्टान्तसम्भ-वादिति भावः ।

"वृक्षत्वं संयोगसामान्याभावावच्छेदकं—संयोगसामान्यानवच्छेदकत्वादित्यादे-रनुकूलतर्कविरहेणाप्रयोजकत्वात्, तेन हेतुना न संयोगाभावावच्छेदकत्वं सिध्यति, अन्यथा तुल्यन्यायेन 'वृक्षत्वं संयोगसामान्यस्यावच्छेदकं—संयोगसामान्याभावा-नवच्छेदकत्वा'दित्यादिहेतुना संयोगसामान्यावच्छेदकत्वमपि सम्भवतीति दीधि-तिकृता 'यथाचे'त्यादिना प्रदर्शितमिति" केचिद्वदन्ति, तन्मतमुपन्यस्यति—**केचि-त्त्विति । अन्यथेति ।** कथञ्चित्प्रयोजकत्वमङ्गीकृत्य वृक्षत्वे निरुक्तहेतुना संयोग-

१ 'सा चाऽभिन्ने'ति क्वचित्पाठ उपलभ्यते ।

दीधितिः

नवीनास्तु—'उत्पत्तिकालावच्छेदेन घटादौ गुणस्य,-

जागदीशी

—त्यभिप्रायकोऽयं ग्रन्थ' इत्याहुः ।

❀गुणस्येति❀ ।—'सामान्याभाव' इति परेणान्वयः । ननु 'आद्यक्षणे घटे गुणो नास्ती'ति प्रत्यक्षमसम्भवि; सन्निकर्षाद्यभावात्, 'प्रथमक्षणे घटादौ[1] गुणो नास्ती'ति व्यवहारादिकञ्च सन्दिग्धप्रामाण्यक-

विवृतिः

सामान्याभावावच्छेदकत्वसाधन इत्यर्थः । अयं ग्रन्थः = 'यथा चे'त्यादिदीधिति ग्रन्थः । निरुपाधिकत्वस्यापि प्रयोजकत्वसम्भवेनाप्रयोजकत्वाभिधानमसङ्गतमित्य-स्वरसः केचिदित्युक्त्या सूचितः ।

'प्रतियोग्यसमानाधिकरण'पदस्य नवीनमतसिद्धां व्यावृत्तिं प्रदर्शयति—नवीनास्त्विवति । उत्पत्तिकालावच्छेदेनेति । तथा च प्रतियोगिवैयधिकरण्यस्या-भावाविशेषणत्वे गुणवान्द्रव्यत्वादित्यत्रोत्पत्तिकालावच्छेदेन हेत्वधिकरणे घटे 'गुणो नास्ती'त्यभावस्य सत्त्वेन तत्प्रतियोगितावच्छेदकतायाः साध्यतावच्छेदके गुणत्वे सत्त्वादव्याप्तिः ।

एवं 'संयोगी द्रव्यत्वादि'त्यत्रापि द्रव्यत्वाधिकरणे गगने प्रलयावच्छेदेन संयोगाभावसत्त्वात्,—तदभावप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदके संयो-गत्वे सत्त्वादव्याप्तिः ।

एवं–वह्निमान् धूमादित्यत्रापि धूमाधिकरणे पर्वते शिखरावच्छेदेन वह्न्यभाव-सत्त्वात् तत्प्रतियोगितावच्छेदकत्वस्य वह्नित्वरूपे साध्यतावच्छेदके सत्त्वादव्याप्तिः,–

अतः प्रतियोग्यसामानाधिकरण्यमभावविशेषणमवश्यं वक्तव्यं ।

तदुपादाने तु,–गुणाभावप्रतियोगिनो गुणस्याधिकरणे घट उत्पत्तिकालावच्छेदेन गुणसामान्याभावस्य सत्त्वान्नोक्तगुणसामान्याभावः प्रतियोग्यधिकरणावृत्तिः,

एवं–संयोगाभावोऽपि महाप्रलयावच्छेदेन संयोगरूपप्रतियोग्यधिकरणीभूत-गगनवृत्तिः,

एवं–वह्न्यभावोऽपि शिखरावच्छेदेन वह्निरूपप्रतियोग्यधिकरणवृत्तिरेव, न तु प्रतियोग्यधिकरणावृत्तिरित्यभावान्तरं घटाभावादिकमादाय लक्षणसमन्वयसम्भव इति समुदितार्थः ।

१ 'घटे' इति काशीमुद्रितपाठः ।

दीधितिः

प्रलयावच्छेदेन गगनादौ संयोगस्य,–सामान्याभावो वर्त्तते,—
तथा धूमवत्यपि विरहो दहनस्य,—
'इह पर्वते नितम्बे हुताशनो, न शिखरे' इति प्रतीतेः संयोगेन द्रव्यस्याप्यव्याप्यवृत्तित्वात्,

जागदीशी

अतः स्थलान्तरमाह,–*प्रलयावच्छेदेनेति* ।—तदानीं जन्यभावसत्त्वे प्रलय एव व्याहन्येतेति भावः । ननु महाप्रलये मानाभावात्तदवच्छेदेनेत्ययुक्तमत आह,—*तथेति* ।

विवृतिः

ननु पर्वते वह्न्यभावस्य सत्त्वं न प्रामाणिकमित्यत आह–इहेति । तथा चोक्तप्रतीतिबलादेव पर्वते वह्न्यभावो वर्त्तत इति भावः । गुणवान्द्रव्यत्वादित्यत्राव्याप्तिसम्भवे स्थलान्तरानुसरणबीजमाह–नन्विति [ जा. पृ. ६६ ] । संनिकर्षाद्यभावात् = इन्द्रियसंयुक्तविशेषणतारूपसंनिकर्षस्य प्रत्यक्षकारणस्य विरहात् ।

ननु प्रथमक्षणावच्छिन्ने घटे 'गुणो नास्ती'ति व्यवहारादेव तादृशघटादौ गुणसामान्याभावोऽस्त्येवेत्यत आह--व्यवहारादिकञ्चेति [ जा. पृ. ६६. ] । शब्दप्रयोगात्मकव्यवहारं प्रति व्यवहर्त्तव्यज्ञानस्य हेतुत्वात् 'प्रथमक्षणावच्छिन्नो घटो गुणाभाववानि'ति ज्ञानस्यासिद्ध्या व्यवहारोऽपि न सिध्यतीत्याशयः ।

न चोत्पत्तिक्षणावच्छिन्नो घटो गुणसामान्याभाववान् तद्वत्त्वेन प्रतीयमानत्वादित्यनुमानमेव तादृशघटे गुणसामान्याभावे मानमिति वाच्यम् । तद्वत्त्वेन प्रतीयमानत्वरूपहेतोरनिश्चयेन कारणाभावादनुमित्यसम्भवात् ।

न च घटो 'गुणसामान्याभाववानुत्पत्तिकालीनत्वादि'त्यनुमानमेव गुणसामान्याभावे मानमिति वाच्यम् । उत्पत्तिकालीनत्वस्य सामान्यतो हेतुत्वे,–तस्य च परमाणुसाधारणतया तत्र गुणसामान्याभावस्यासत्त्वेन व्यभिचारापत्तेः, स्वोत्पत्तिकालीनत्वस्य हेतुत्वे तु,–तस्य तद्व्यक्तिविश्रान्ततया पक्षमात्रवृत्तित्वेन दृष्टान्ताभावादप्रयोजकत्वापत्तेरिति ध्येयम् । स्थलान्तरमाहेति । संयोगी द्रव्यत्वादित्यत्राव्याप्तिमाहेत्यर्थः । तदानीं = महाप्रलयकाले, जन्यभावसत्त्व इति । निरुक्तसंयोगरूपजन्यभावसत्त्व इत्यर्थः । जन्यभावानधिकरणत्वस्यैव महाप्रलयपदार्थत्वादिति भावः ।

पुनराशङ्कते—नन्विति । मानाभावादिति । युगपद् ब्रह्माण्डप्रलयस्य सर्ववाद्यसिद्धत्वादिति भावः । तथेतीति । 'तथा धूमवत्यपि विरह' इत्यादिग्रन्थेन

दीधितिः

**वृत्तेरव्याप्यवृत्तित्वे,—वृत्तिमतो व्याप्यवृत्तित्वस्यात्यन्तम-सम्भावितत्वाच्च ।**

जागदीशी

ननूक्तप्रतीतिः—पर्वतवृत्तिहुताशनावच्छेदकत्वाभावं शिखरे, शिखरावच्छिन्नपर्वतवृत्तित्वाभावं वा हुताशनेऽवगाहते, न तु पर्वते हुताशनाभावमिति यदि ब्रूयात्तदाऽप्याह,—*वृत्तेरिति* ।–वृत्तेः,= सम्बन्धस्य, वृत्तिमतः,= सम्बन्धवतः, तथा च 'यो यदवच्छेदेन यदीययत्सम्बन्धाभाववान् स तदवच्छेदेन तस्य[1] तत्सम्बन्धावच्छिन्नाभाववानिति'व्याप्त्या[2] शिखरावच्छेदेन संयोगसम्बन्धावच्छिन्नवह्न्यभावसिद्धिरिति भावः ।

ननूक्तव्याप्तावप्रयोजकत्वम्, अन्यथा तुल्यन्यायेन 'यो यदीय-

विवृतिः

वह्निमान्धूमादित्यत्राव्याप्तिमाहेत्यर्थः । वह्न्यभावस्य निरुक्तप्रतीत्या पर्वतवृत्तित्वं न सम्भवतीति दर्शयति—**उक्तप्रतीतिरिति**। 'इह पर्वत' इत्यादिप्रतीतिरित्यर्थः। पर्वतवृत्तिर्यो हुताशनस्तदवच्छेदकत्वाभावावगाहिन्या उक्तप्रतीतेर्भ्रमत्वापत्तिरत आह—**शिखरावच्छिन्नेति** । शिखरावच्छिन्नो यः पर्वतस्तद्वृत्तित्वाभावं न वह्नावुक्तप्रतीतिरवगाहत इति भावः। **न त्विति** । पर्वते वह्न्यभावमुक्तप्रतीतिर्नावगाहत इत्यर्थः । तथा च वह्निमान्धूमादित्यत्र वह्न्यभावस्य हेत्वसमानाधिकरणतयैवाव्याप्तिवारणसम्भवे कृतं प्रतियोग्यसामानाधिकरण्यदलेनेति भावः । **तदाप्याहेति** । वह्न्यभावस्य पर्वतवृत्तित्वे हेतुमाहेत्यर्थः । सम्बन्धस्य = संयोगस्य, सम्बन्धवतः = संयोगप्रतियोगिनः । यः = पर्वतः, यदवच्छेदेन=शिखरावच्छेदेन, यदीयस्य= वह्निप्रतियोगिकस्य, सम्बन्धस्य = संयोगादेः, **अभाववानिति** । भवतीति शेषः । सः=पर्वतः, तदवच्छेदेन = शिखरावच्छेदेन, तस्य = वह्नेः, तत्सम्बन्धावच्छिन्नाभाववान्=संयोगसम्बन्धावच्छिन्नाभाववान्, इति व्याप्त्या=इत्याकारकसामान्यव्याप्त्या, वह्न्यभावसिद्धिः = वह्न्यभावानुमितिः, तथा चोक्तानुमानेन वह्न्यभावस्य पर्वतादौ निश्चिततया 'प्रतियोग्यसामानाधिकरण्या'नुक्तौ शिखरावच्छेदेन पर्वते वह्न्यभावमादाय भवत्यव्याप्तिरिति भावः ।

'एव'मित्यादिग्रन्थोत्थितौ बीजं दर्शयति—**नन्विति** । उक्तव्याप्तौ = निरुक्तसामान्यव्याप्तौ, अप्रयोजकत्वम् = अनुकूलतर्काराहित्यम्, अन्यथा = अनुकूलतर्काभावेऽपि हेतोरनुमापकत्वे, तुल्यन्यायेन = उक्तसामान्यव्याप्तिप्रदर्शितन्यायेन,

१ 'तदवच्छेदेन तत्सम्बन्धावच्छिन्नतदभाववानि'ति काशीमुद्रितपाठः ।
२ 'व्याप्त्याऽपी'ति काशीमुद्रितपाठः ।

दीधितिः

**एवं प्रतियोगिमतोरपि काल-देशयोर्देश-कालभेदावच्छेदेन तदभावः,**

जागदीशी

यत्सम्बन्धवान् स तत्सम्बन्धेन तद्वानिति' व्याप्त्या(ऽपि) कुण्डादिसंयोगिनो बदरादेः संयोगेन कुण्डादिमत्त्वापत्तेरित्युक्तावाह,—❀एवमिति❀। ( भेदः = विशेषः। ) घटवत्यपि काले 'इदानीं तन्तौ न घट' इति प्रतीत्या तन्त्ववच्छेदेनैतत्काले घटाभावः, तथा घटवत्यपि कपाले घटनाशदशायां,—'इदानीमिह कपाले न घट' इत्याद्यनुभवात् तत्कालावच्छेदेन[1] [कपाले] घटस्य सामान्याभावः सिध्यति।

विवृतिः

यः = पर्वतादिः, यदीययत्सम्बन्धवान् = प्रतियोगित्वानुयोगित्वान्यतरसम्बन्धेन वह्न्यादिविशिष्टसंयोगादिसम्बन्धवान्। तत्सम्बन्धेन = संयोगसम्बन्धेन, तद्वान्= वह्निमान्, इति व्याप्त्याऽपि=इत्याकारकसामान्यव्याप्त्याऽपि, कुण्डादिसंयोगिनः= तादृशसंयोगप्रतियोगिनः, **बदरादेरिति**। तथा च यत्पदेन बदरमादाय तत्र कुण्डसंयोगसत्त्वेन 'बदरादिः कुण्डादिमानि'त्यापत्तिः स्यात्, न चेष्टापत्तिरनुभवविरोधादिति भावः। आह = 'प्रतियोग्यसामानाधिकरण्या'नुक्तौ स्थलान्तरेऽव्याप्तिमाह।

दीधितौ—**एवमिति**। प्रतियोगिमतोः=प्रतियोग्यधिकरणीभूतयोः, **देश-कालभेदावच्छेदेनेति**। यथाक्रमं काले प्रतियोग्यनधिकरणदेशावच्छेदेन, देशे च प्रतियोग्यनधिकरणकालावच्छेदेनेत्यर्थः। तदभावः = प्रतियोगिनामभावः, वर्त्तत इति शेषः।

एतदेव स्पष्टयति—**घटवत्यपीति**। घटाधिकरणीभूते काल इत्यर्थः। तन्त्ववच्छेदेन = घटाभावप्रतियोगिघटानधिकरणतन्तुरूपदेशावच्छेदेन, **एतत्काल इति**। तथा च घटवत्येतत्काले घटानधिकरणतन्त्ववच्छेदेन 'इदानीं तन्तौ न घट' इति प्रतीत्या घटाभावः सिध्यतीति भावः।

ननु प्रतियोगिमति काल उक्तप्रतीत्या घटाभावः सिध्यतु, प्रतियोगिमति देशे कथं प्रतियोग्यभावः स्थास्यतीत्यत आह—**तथेति**। घटवत्यपि कपाले = घटाधिकरणीभूते कपालरूपे देशे, 'घटनाशदशाया'मित्यनेन—घटानधिकरणत्वं सूचितम्।

तत्कालावच्छेदेन = घटानधिकरणीभूतघटनाशकालावच्छेदेन, कपाले = घटा-

---

१ 'तत्कालावच्छेदेन घटसामान्याभावः सिध्यती'ति काशीमुद्रितपाठः।

जागदीशी

न च 'इदानीं तन्तुषु न घट' इत्यादिप्रतीतेरेतत्कालावच्छेदेन तन्तुष्वेव घटाभावो विषयो,—न [तु] तन्त्ववच्छेदेनैतत्काले तथेति वाच्यम् ;

तन्तुषु घटाभावस्य व्याप्यवृत्तितया एतत्कालस्य तदवच्छेदकत्वावगाहने उक्तप्रतीतेर्भ्रमत्वापातात् ।

न च तथाऽप्येतत्कालवृत्तिघटाभाव एव तन्तुषु भासतां तत्रेति वाच्यम् ; कालस्य प्रतियोगिकुक्षावग्रहेऽपि तादृशप्रतीतेस्तन्त्ववच्छेदेन समये घटाभावावगाहित्वस्यानुभवसिद्धत्वादिति[1] भावः ।

विवृतिः

धिकरणकपालरूपे देशे ।

**न चेति ।** वाच्यमिति परेणान्वयः । एतत्कालावच्छेदेन = वटवत्कालावच्छेदेन, **घटाभावो विषय इति ।** तथा च नोक्तप्रतीत्या घटानधिकरणतन्तुरूपदेशावच्छेदेन घटवति काले घटाभावसिद्धिर्भवतीति भावः । तथा = घटाभावो विषयः ।

समाधत्ते—**तन्तुष्विति । तदवच्छेदकेति ।** व्याप्यवृत्तेरवच्छेदकत्वास्वीकारादिति भावः । **भ्रमत्वापातादिति ।** एतत्कालावच्छिन्नत्वाभाववत्येतत्कालावच्छिन्नत्वप्रकारकतयेदानीन्तन्तुषु न घट इतिप्रतीतेर्भ्रमत्वसम्भवादित्यर्थः । तथापि = व्याप्यवृत्तेरवच्छेदकत्वासम्भवेऽपि, **एतत्कालवृत्तीति ।** एतत्कालवृत्तिर्यो घटस्तदभावस्तन्तुष्वित्यर्थः । भासतां = विषयीभवतु । तत्र = 'इदानीन्तन्तुषु न घट' इति प्रतीतौ, प्रतियोगिकुक्षावग्रहेऽपि = कालवृत्तित्वेन घटादेः प्रतियोगिनो ज्ञानाभावकालेऽपि, तादृशप्रतीतेः = 'इदानीं तन्तुषु न घट' इति प्रतीतेः, उदयादिति शेषः ।

**अनुभवसिद्धेति ।** अयम्भावः—यस्मिन् काले कालवृत्तित्वेन घटादिज्ञानं न भवति तस्मिन्नपि काल 'इदानीं तन्तुषु न घट' इति प्रतीत्युदयात्,—तादृशप्रतीतेर्न तावत्कालवृत्तिघटाभावो विषयः, कालवृत्तिताया अग्रहादिति,—तत्काल उक्तप्रतीतेर्विषयोऽवश्यं तन्त्ववच्छेदेन घटवति काले घटाभाव इत्येव स्वीकरणीयमिति,—एतदनुरोधेनैव प्रतियोगिमति काले प्रतियोग्यनाधारदेशावच्छेदेन प्रतियोग्यभावः स्वीकर्त्तव्य इति ।

---

१ 'आनुभविकत्वा'दिति काशीमुद्रितपाठः ।

दीधितिः

**तथा च तत्तत्साध्यकाव्याप्तिवारणाय तत्। नोपादेयश्च,—**

जागदीशी

❀ तथा चेति।—गुणवत् संयोगवद्वा द्रव्यत्वात्, वह्निमान् धूमात्, समयो घटवान् एतत्कालत्वात्, कपालं घटवत् घटध्वंसादित्यादावव्याप्तिवारणायेत्यर्थः। ❀ तदिति ❀ असमानाधिकरणान्तमित्यर्थः। ❀ नोपादेयश्चेति ❀ येन रूपेण[1] येन सम्बन्धेन च यद् व्याप्यवृत्ति तेन सम्बन्धेन [ तेन रूपेण ] तत्साध्यतायां नोपदेयमित्यर्थः। तेन संयोग-

विवृतिः

**समयो घटवानिति।** 'समय'इति पक्षनिर्देशः कालिकेन साध्यतालाभाय, प्रतियोगिवैयधिकरण्यानुपादान एतत्कालत्वाधिकरण एतत्काले,—तन्त्ववच्छेदेन घटाभावस्य सत्त्वात्; तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं घटत्वमित्यव्याप्तिः।

एवं—कपालं घटवद् घटध्वंसादित्यत्रापि घटध्वंसाधिकरणे घटध्वंसरूपहेतुमति कपाले घटानधिकरणघटनाशकालावच्छेदेन घटाभावस्य सत्त्वात्,—तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं घटत्वमित्यव्याप्तिरतः,—'प्रतियोग्यसमानाधिकरण्य'मभावविशेषणं, तदुपादाने तु—निरुक्तघटाभावस्य प्रतियोग्यधिकरणे काले,—कपाले च वर्त्तमानत्वान्नोक्ताभावो लक्षणघटक इति भावः। **असमानाधिकरणान्तमिति।** प्रतियोग्यसमानाधिकरणान्तमित्यर्थः। **येन रूपेणेति।** तृतीयार्थो वैशिष्ट्यम्, अन्वयश्चास्य 'य' इत्यनेन। **येन सम्बन्धेनेति।** तृतीयार्थः प्रतियोगित्वम्, अन्वयश्चास्य 'य' इत्यनेन। तथा च यादृशधर्मविशिष्टो यो येन सम्बन्धेन व्याप्यवृत्तिः=स्वाधिकरणे स्वरूपसम्बन्धेन वर्त्तमानस्याभावस्याप्रतियोगी, भवतीति शेषः, स्वं=व्याप्यवृत्तित्वेनाभिमतम्। **तेन सम्बन्धेनेति।** तादृशधर्मावच्छिन्नतत्सम्बन्धावच्छिन्नसाध्यतायां 'प्रतियोगिवैयधिकरण्य'मभावविशेषणं नोपादेयमिति फलितार्थः।

'येन रूपेणे'त्यस्य फलमाह—**तेनेति।** तथा च संयोगी द्रव्यत्वादित्यत्र संयोगत्वेन रूपेण समवेतस्य संयोगस्य साध्यतास्थलेऽपि द्रव्यत्वाधिकरणे गगनादौ संयोगाभावसत्त्वादव्याप्तिवारणाय 'प्रतियोगिवैयधिकरण्यं' देयमेव, किन्तु समवेतत्वेन समवेतमात्रस्य समवायेन साध्यतायां 'समवेतवान् द्रव्यत्वा'दित्यत्र समवेतसामान्याभावस्य द्रव्यत्वाधिकरणे हेतुमत्यसत्त्वादव्याप्तिविरहेण 'प्रतियोगिवैयधिकरण्यं' न निवेशनीयमिति भावः।

---

१ येन सम्बन्धेन येन रूपेणेत्यादिक्रमेणैव बहुषु पुस्तकेषु पाठो लभ्यते।

दीधितिः

**सर्वथैव व्याप्यवृत्तिसाध्यके, साध्य-साधनभेदेन व्याप्तिभेदात्'—इति वदन्ति ॥५॥**

जागदीशी

त्वेनाव्याप्यवृत्तेरपि संयोगस्य समवेतत्वेन साध्यतायां, कालिकतयाऽव्याप्यवृत्तेरपि द्रव्यत्वस्य समवायेन साध्यतायाश्च '—प्रतियोगिवैयधिकरण्यं—' नोपादेयमिति ।

परन्तु समवायेन व्याप्यवृत्तेरपि द्रव्यत्वसत्त्वादेः कालिकेन साध्यतायां तदुपादेयमेव ।

अव्याप्यवृत्तिसाध्यके, [ वृक्षः संयोग्येतद्वृक्षत्वादित्यादौ देयं ] संयोगाभाववान् नित्यगुणत्वादित्यादौ क्वचिदेव न देयं, व्याप्यवृत्तिसाध्यके तु प्रयोजनविरहात् सर्वत्रैव नोपादेयमित्यावेदयितुं,—ॐव्याप्यवृत्तिसाध्यके[1] सर्वथैवे ॐ त्युक्तम् ।

ॐ साध्यसाधनभेदेनेति ॐ साध्यताघटकसम्बन्धादेरप्युपलक्षकम्[2] ।

विवृतिः

'येन सम्बन्धेने'त्यस्य फलमाह—**कालिकतयेति** । तथा च द्रव्यत्ववान् घटत्वादित्यत्र समवायेन द्रव्यत्वस्य साध्यतायां 'प्रतियोगिवैयधिकरण्यं' नोपादेयं, समवायेन द्रव्यत्वाभावस्य घटेऽसत्त्वात्, किन्तु कालिकेन द्रव्यत्वसाध्यतास्थले निरुक्तघटत्वहेतौ हेत्वधिकरणे घटे गुणावच्छेदेन कालिकसम्बन्धावच्छिन्नद्रव्यत्वाभावस्य सत्त्वादव्याप्तिवारणाय 'प्रतियोगिवैयधिकरण्यं' देयमेव, एतदेवाभिप्रेत्याभिहितं—**कालिकेन साध्यतायां तदुपादेयमेवेति** ।

**'सर्वथा'** पदप्रयोजनमाह—**व्याप्यवृत्तिसाध्यक इति** । **प्रयोजनविरहादिति** । साध्याभावस्य हेत्वधिकरणेऽसत्त्वाद्व्याप्यवृत्तिसाध्यकेऽव्याप्तिविरहेण प्रतियोगिवैयधिकरण्यात्मकविशेषणस्य किमपि प्रयोजनं नास्तीत्याशयः । **न देयमिति** । संयोगाभावाभावस्य—संयोगरूपस्य—साध्याभावस्य,—नित्यगुणे केनापि सम्बन्धेनासत्त्वादभावान्तरमादाय लक्षणसमन्वयसम्भवात्संयोगाभावरूपाव्याप्यवृत्तिसाध्यकनित्यगुणत्वहेतुकस्थले हेत्वधिकरणवृत्त्यभावे 'प्रतियोगिवैयधिकरण्यं' निष्फलमित्याशयः ।

---

१ 'व्याप्यवृत्तिसाध्यके' इति काशीमुद्रिते नोपलभ्यते ।

२ 'उपलक्षण'मिति बहुषु पाठ उपलभ्यते ।

जागदीशी

अत्र यद्यपि,—व्याप्यवृत्तिसाध्यकस्थले तदप्रवेशे सत्तावान् जातेरित्यादावव्याप्तिः, साधनवति स्पन्दादौ समवायेन सत्ताभावस्यापि कालिकादिसम्बन्धेन वृत्तेः ।

न चाभावे हेत्वधिकरणवृत्तित्वस्यभावीयविशेषणतया विवक्षणान्नोक्तदोषः; तथा सत्यपि द्रव्यत्वाभाववान् सत्त्वादित्यत्रातिव्याप्तेः ।

विवृतिः

नित्यपदानुक्तौ—जन्यगुणे कालिकसम्बन्धेन संयोगरूपसाध्याभावस्य सत्त्वात्प्रतियोगिवैयधिकरण्यमव्याप्तिवारकतयाऽवश्यं सप्रयोजनं भवतीति तदुपादानम् । ननु 'सत्तावान् जाते'रित्यत्र सत्तारूपस्य साध्यस्य व्याप्यवृत्तित्वात्तत्र यदि हेत्वधिकरणवृत्त्यभावे 'प्रतियोगिवैयधिकरण्यं' न दीयते, तदा 'समवायेन सत्ता नास्ती'त्यभावस्य जातिरूपहेत्वधिकरणे स्पन्दे कालिकसम्बन्धेन सत्त्वात्तत्प्रतियोगितावच्छेदकमेव सत्तात्वमित्यव्याप्तिरतो व्याप्यवृत्तिसाध्यकस्थलेऽपि 'प्रतियोगिवैयधिकरण्य'मभावविशेषणं देयमेव, तथा सति सत्ताभावस्य -प्रतियोगिभूतायाः सत्तायाः समवायेनाधिकरणे स्पन्दे—कालिकेन सत्त्वान्नोक्ताभावस्य प्रतियोग्यधिकरणावृत्तित्वरूपं 'प्रतियोग्यसामानाधिकरण्य'मित्याशङ्कते—**यद्यपीति । कालिकादिसम्बन्धेनेति ।** हेत्वधिकरणवृत्तित्वस्य सम्बन्धविशेषेणाविवक्षितत्वादिति भावः ।

ननु व्याप्यवृत्तिसाध्यकस्थले स्वरूपेण हेत्वधिकरणे वर्त्तमानो योऽभावस्तत्प्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छेदके विवक्षणीयम् , एवञ्च सत्ताभावस्य स्वरूपसम्बन्धेन जात्यधिकरणे स्पन्दादौ कुत्राप्यसत्त्वाद् घटाभावादिकमादायैव 'सत्तावान् जाते'रित्यत्र लक्षणसमन्वयः सम्भवतीति,—न व्याप्यवृत्तिसाध्यके 'प्रतियोगिवैयधिकरण्यं' देयमित्याशङ्कते—**न चेति । 'नोक्तदोष'** इत्यनेनान्वयः । अभावीयविशेषणतया = स्वरूपसम्बन्धेन, नोक्तदोषः = सत्तावान् जातेरित्यत्र नाव्याप्तिः, समाधत्ते—**तथा सतीति । द्रव्यत्वाभाववानिति** । तथा च द्रव्यत्वाभाववान् सत्त्वादित्यत्र,—सत्ताधिकरणे द्रव्ये साध्याभावस्य द्रव्यत्वाभावाभावस्य द्रव्यत्वरूपस्य,—समवायसम्बन्धेन वर्त्तमानतया स्वरूपसम्बन्धेनासत्त्वात् ,—स्वरूपेण वर्त्तमानस्य घटाभावस्य प्रतियोगितानवच्छेदकताया द्रव्यत्वाभावत्वरूपे साध्यतावच्छेदके सत्त्वादतिव्याप्त्यापत्तिरतो,—हेत्वधिकरणवृत्तित्वं स्वरूपसम्बन्धेन विवक्षितुमशक्यमेवेत्याशयः ।

ननु 'द्रव्यभेदवान्' इति 'द्रव्यभिन्न'मिति वा यत्प्रमात्मकं ज्ञानं, तज्ज्ञानीयविशेष्यताया गुणादिनिष्ठाया अभावस्य स्वरूपसम्बन्धेन सत्ताधिकरणे

जागदीशी

द्रव्यत्वस्वरूपस्य साध्याभावस्य [१]दैशिकविशेषणतया वृत्तित्वविरहात्, द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यापि द्रव्यत्वानतिरेकात् ।

न चाभावत्वप्रतीतेः प्रमात्वरक्षार्थमभावाभावस्यातिरिक्ततयोक्तातिव्याप्त्यादिवारणमिति वाच्यम्; 'अभावत्वञ्चे'त्यग्रिमग्रन्थेन भावाभावसाधारणस्याभावत्वस्य निर्वचनविरोधापत्तेः,

विवृतिः

द्रव्ये सत्त्वेन, तत्प्रतियोगितावच्छेदकमेव द्रव्यत्वाभावत्वमिति, हेत्वधिकरणवृत्तितायाः स्वरूपसम्बन्धेन विवक्षणेऽपि, न द्रव्यत्वाभाववान् सत्त्वादित्यत्रातिव्याप्तिरित्यत आह—**द्रव्यभिन्नत्वेति** । तथा च द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यताया अभावस्य द्रव्यमात्रे सत्त्वात्तस्य च लाघवाद् द्रव्यत्वस्वरूपत्वेन द्रव्ये स्वरूपसम्बन्धेन वृत्तित्वासम्भवादवश्यं घटाभावादिकमादायातिव्याप्तिः सम्भवतीति भावः ।

ननु 'द्रव्यत्वाभावाभावोऽभाव' इति प्रमात्मकप्रत्ययानुरोधार्थं द्रव्यत्वाभावाभावो न द्रव्यत्वस्वरूपोऽपि तु द्रव्यत्वाभावाभावरूप एवेति,—द्रव्यत्वाभावाभावात्मकस्याभावरूपस्य हेत्वधिकरणे द्रव्ये स्वरूपसम्बन्धेन सत्त्वात्तत्प्रतियोगितावच्छेदकमेव द्रव्यत्वाभावत्वमिति,–कुतो व्याप्यवृत्तिसाध्यकस्थले प्रतियोगिवैयधिकरप्रवेशस्यावश्यकत्वमित्याशङ्कते—**न चेति । प्रमात्वरक्षार्थमिति ।** द्रव्यत्वाभावाभावस्य द्रव्यत्वस्वरूपत्वे तस्य भावत्वेन 'द्रव्यत्वाभावाभावोऽभाव' इति प्रत्ययस्य भ्रमत्वापत्तिः स्यादिति भावः ।

समाधत्ते—**अभावत्वञ्चेति** । अग्रिमग्रन्थेन = 'इदमिह नास्ति', 'इदमिदं ने'—त्याद्यग्रिमदीधितिग्रन्थेन, भावाभावसाधारणस्य = भावेऽभावेऽपि वर्त्तमानस्य, **निर्वचनविरोधादिति** । तथा चाभावमात्रेऽभावत्वस्वीकारेऽग्रिमदीधितिग्रन्थो

दीपिका

**द्रव्यभिन्नत्वप्रकारकेति ।** ननु द्रव्यत्वभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यापि प्रतियोगितावच्छेदकं द्रव्यत्वभिन्नत्वप्रकारकप्रमाविशेष्यतात्वमेवेति तदन्यत्वस्य साध्यतावच्छेदके द्रव्यत्वाभावत्वे सत्त्वादव्याप्तिवारणासम्भवात् तादृशाभावस्य द्रव्यत्वस्वरूपत्वाभ्युपगमो निरर्थक इति चेच्छृणु, पूर्वमभावसाध्यकस्थले द्रव्यत्वाभाववान् सत्त्वादित्यत्राव्याप्तिरभिहिता, इदानीञ्च भावसाध्यकस्थले द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्ववान् सत्त्वादित्यत्रातिव्याप्तिसङ्गमनार्थं द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्य द्रव्यत्वस्वरूपत्वमादृतमिति न दोषलेशोऽपीति ।

१ 'दैशिके'ति बहुषु पुस्तकेषु न पठ्यते ।

जागदीशी

घटत्वाद्यभावस्य कालिकसम्बन्धावच्छिन्नाभावे स्वरूपसम्बन्धेन साध्ये गगनत्वादिहेतावव्याप्तेस्तथाऽप्यनुद्धाराच्च ।

विशेषणतासम्बन्धेन गगननिष्ठघटत्वाभावस्यैव तादृशघटत्वाभावाभावाभावत्वकल्पनात्, तावतैवाभावत्वप्रतीतेः प्रमात्वसम्भवात् ।

अत एव 'साध्यताघटकसम्बन्धेन साध्यवत्त्वबुद्धेर्विषयविधया प्रति-

विवृतिः

न सङ्गच्छेतेति भावः । अभावत्वस्याभावमात्रवृत्तित्वस्वीकारेऽपि स्वरूपसम्बन्धेन हेत्वधिकरणवृत्तित्वघटितव्याप्यवृत्तिसाध्यकस्थलेऽव्याप्तिवारणमशक्यमेवेत्याह—**घटत्वाद्याभावस्येति**। 'समवायेन घटत्वं नास्ती'त्यभावस्य कालिकेन योऽभावस्तस्य स्वरूपेण साध्यत्वे गगनत्वहेतावव्याप्तिरिति भावः । विशेषणतया = स्वरूपसम्बन्धेन, घटत्वाभावस्य'=समवायेन घटत्वं नास्ती'त्यभावस्य, कल्पनात् = स्वीकारात् ।

**प्रमात्वसम्भवादिति**। तथा चाभावमात्रेऽभावत्वप्रतीतेः प्रमात्वस्वीकारेऽपि स्वरूपसम्बन्धेन हेत्वधिकरणवृत्तित्वनिवेशे 'कालिकसम्बन्धावच्छिन्नप्रतियोगिताको यो घटत्वाभावाभावस्तद्वान् गगनत्वादि'त्यत्र गगने वर्त्तमानो यः साध्यस्य घटत्वाभावाभावस्याभावो घटत्वाभावरूपः, तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके घटत्वाभावाभावत्वे सत्त्वादव्याप्तिरतः,—स्वरूपसम्बन्धेन 'हेत्वधिकरणवृत्तित्व'घटितं व्याप्यवृत्तिसाध्यकस्थलीयलक्षणं न भवितुमर्हतीति भावः ।

**अत एवेति**। निरुक्तगगनत्वहेतावव्याप्तिप्रसङ्गेनेत्यर्थः । **साध्यताघटकेति**। साध्यतावच्छेदकसम्बन्धेनेत्यर्थः । साध्यवत्त्वबुद्धेः = साध्यतावच्छेदकावच्छिन्नप्रकारताशालिबुद्धेः, किञ्चिद्धर्मिकसाध्यवानित्याकारकबुद्धेरिति यावत् । विषयविधया =

दीपिका

**घटत्वाभावस्येति**। नन्वत्र 'घटत्व'पदं किमर्थं, 'तादृशसम्बन्धावच्छिन्नाभावाभावे साध्ये' इत्यस्यैव सम्यक्त्वादिति चेच्छृणु,—अनन्ताभावानां साध्याभावत्वकल्पनामपेक्ष्य साध्याभावस्यातिरिक्तत्वकल्पनायामेव लाघवेन तस्य च हेत्वधिकरणेऽसत्त्वान्नाव्याप्तिरतस्तदुपादानमिति ।

न चैवं तादृशसाध्यस्याव्याप्यवृत्तितया तत्साध्यकस्थले व्याप्यवृत्तिसाध्यकस्थलीयलक्षणाव्याप्तेराशङ्कैव नास्तीति वाच्यं, संयोगसम्बन्धावच्छिन्नघटत्वाभावस्य कालिकेन योऽभावस्तस्य व्याप्यवृत्तितया तत्साध्यकाव्याप्तेराशङ्कनीयत्वात्, संयोगसम्बन्धावच्छिन्नघटत्वाभावस्य केवलान्वयित्वेन कालिकेन तदभावस्याव्याप्यवृत्तिताया वक्तुमशक्यत्वात् ।

**साध्यवत्त्वबुद्धेरिति**। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकाव-

### जागदीशी

-बन्धकतावच्छेदको यः सम्बन्धस्तेन सम्बन्धेन हेतुसामानाधिकरण्य-मभावस्य ग्राह्यमि'त्युक्तावपि न निस्तारः। तथाविधसम्बन्धेन हेतुसामानाधिकरण्यस्याप्रसिद्ध्या प्रागुक्तगगनत्वादिहेतौ,

### विवृतिः

प्रकारत्वेन, तेन सम्बन्धेन = प्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसम्बन्धेन, हेतुसामानाधिकरण्यं = हेत्वधिकरणवृत्तित्वं,—'अभावस्ये'त्यनेनान्वयः। भवति हि—'समवायेन सत्तावानि'ति बुद्धौ, 'स्वरूपेण सत्ताभाववानि'ति ज्ञानं प्रति-बन्धकं, तादृशप्रतिबन्धकतावच्छेदकीभूता या सत्ताभावनिष्ठा प्रकारता तदवच्छेद-कीभूतस्वरूपसम्बन्धेन जात्यधिकरणे स्पन्दादौ सत्ताभावस्यासत्त्वात्, सत्ताभाव-रूपसाध्याभावो न लक्षणघटकोऽपि तु घटाभाव एवेति, न 'सत्तावान् जाते'रित्यत्र 'प्रतियोग्यसामानाधिकरण्या'निवेशेऽपि अव्याप्तिः, न वा द्रव्यत्वाभाववान् सत्त्वादि-त्यत्रातिव्याप्तिः, 'साध्यतावच्छेदकस्वरूपसम्बन्धेन द्रव्यत्वाभाववानि'तिबुद्धौ, 'सम-वायेन द्रव्यत्ववानि'तिज्ञानस्य प्रतिबन्धकतया, तदवच्छेदकीभूतद्रव्यत्वनिष्ठप्रकार-ताया अवच्छेदकीभूतो यः समवायसम्बन्धः,—तेन सम्बन्धेन सत्तारूपहेत्वधिकरणे द्रव्ये द्रव्यत्वाभावाभावरूपस्य साध्याभावस्य—द्रव्यत्वात्मकस्य—वर्त्तमानत्वात्। न निस्तारः= नाव्याप्तिनिरासः, तत्र हेतुमाह—**तथाविधेति**। **अप्रसिद्ध्येति**। तथा च घटत्वाभावस्य कालिकेन योऽभावस्तस्य स्वरूपेण साध्यतायां गगनत्वहेतुकस्थले 'साध्यतावच्छेदकीभूतस्वरूपसम्बन्धेन तादृशघटत्वाभावा-भाववानि'ति बुद्धौ 'कालिकेन घटत्वाभाववानि'ति ज्ञानस्यैव प्रतिबन्धकतया

### दीपिका

-च्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारता-वच्छेदकसम्बन्धेन हेत्वधिकरणवृत्तित्वं विवक्षणीयमिति समुदितार्थः।

अत्र कल्पे **'विषयविधये'** त्यनुक्तौ—द्रव्यं सत्त्वादित्यत्रातिव्याप्तिः, समवायेन द्रव्यत्वबुद्धौ समवायेनैव तदभाववत्त्वनिश्चयस्य प्रतिबन्धकतया साक्षात्तदवच्छेदकसम-वायसम्बन्धेन द्रव्यत्वाभावस्य सत्ताधिकरणेऽसत्त्वात्साध्याभावस्य लक्षणाघटकत्वा-दतस्तदुपादानम्।

'साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वबुद्धे'रित्यनुक्तौ,—समवायेन घटावृत्तेः समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपसम्बन्धेन साध्यत्वे घटत्वहेताव-व्याप्तिप्रसङ्गात्, कालिकेन साध्यवत्त्वबुद्धेः प्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकस्व-रूपसम्बन्धेन साध्याभावस्य समवायेन घटावृत्तेर्घटे वर्त्तमानत्वात्, अतस्तदुपादानम्।

जागदीशी

द्रव्यत्वाभाववान् जातित्वादित्यादौ चाव्याप्तेः।

तथाऽपि,—साध्यतावच्छेदकसम्बन्धेन '[1]स्वप्रतियोगिमत्त्वबुद्धेर्विषय-

विवृतिः

तादृशप्रतिबन्धकतावच्छेदकीभूतघटत्वाभावनिष्ठप्रकारताया अवच्छेदको यः कालिक-सम्बन्धस्तेन सम्बन्धेन हेत्वधिकरणे गगने कस्याप्यभावस्य वृत्तित्वाप्रसिद्ध्या निरुक्तनिवेशेप्यव्याप्तेरनिरास इति भावः।

न केवलमुक्तस्थल एवाव्याप्तिः, किन्तु स्थलान्तरेऽप्यव्याप्तिः सम्भवतीत्याह—द्रव्यत्वाभाववानिति। 'द्रव्यत्वाभाववान् जातित्वादि'त्यत्रापि 'स्वरूपेण द्रव्यत्वाभाववानि'त्याकारकसाध्यवत्त्वबुद्धौ 'समवायेन द्रव्यत्ववानि'ति ज्ञानस्य प्रतिबन्धकतया तदवच्छेदकीभूता या द्रव्यत्वनिष्ठा प्रकारता,—तदवच्छेदकसमवायसम्बन्धेन हेत्वधिकरणीभूतायां जातौ कस्याप्यवर्त्तमानतया,—हेत्वधिकरणे समवायसम्बन्धेन वर्त्तमानस्याभावस्याप्यप्रसिद्ध्या निरुक्तनिवेशेप्यव्याप्तिवारणासम्भवान्न निस्तार इत्याशयः।

यद्यपीत्यादेरुत्तरं—तथापीति। स्वप्रतियोगिमत्त्वबुद्धेरिति। स्वपदं हेतु-समानाधिकरणत्वेनाभिमततत्तदभावव्यक्तिपरम्, एवञ्च तत्प्रतियोगितावच्छेदकाव-

दीपिका

स्वप्रतियोगिमत्त्वबुद्धेरिति। साध्यतावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसम्बन्धेन हेत्वधिकरणवृत्तित्वं विवक्षणीयमित्यर्थः।

नन्वत्र कल्पे घटभिन्नं कपालत्वादित्यत्राव्याप्तिः,—साध्यरूपप्रतियोगिमत्त्वबुद्धेर्विषयविधया प्रतिबन्धकतावच्छेदकसमवायसम्बन्धेन साध्याभावस्य घटादेः कपालत्वरूपहेत्वधिकरणे वर्त्तमानत्वात्।

एवं,—घटत्वाभावस्य कालिकेनाभावस्य स्वरूपेण साध्यतायां गगनत्वादिहेतावव्याप्तिः,—साध्यतावच्छेदकस्वरूपसम्बन्धेन घटत्वाभावरूपसाध्याभावस्य प्रतियोगिघटत्ववत्त्वबुद्धेः प्रतिबन्धकतावच्छेदकप्रकारतावच्छेदक-स्वरूप-सम्बन्धेन घटत्वाभावरूपसाध्याभावस्य गगने सत्त्वादिति चेन्न। यादृशप्रतियोगितावच्छेदकावच्छिन्न-साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारताविशिष्टं हेत्वधिकरणवृत्तित्वं, तादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वात्, वैशिष्ट्यञ्च,—स्वावच्छेदकधर्मावच्छिन्नत्व,—स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, (स्वं=प्रकारता)

१ 'स्व'पदं बहुषु पुस्तकेषु न दृश्यते।

जागदीशी

तया प्रतिबन्धकताच्छेदको यः सम्बन्धस्तेन हेत्वधिकरणवृत्तित्वमभावस्य विवक्षितमित्यदोषः,

तथा च द्रव्यत्वाभाववान् जातित्वादित्यादौ विशेषणताविशेषसम्ब-न्धेन जातित्वाभावबुद्धेर्विषयविधया प्रतिबन्धकतावच्छेदको यः स्वरूप-सम्बन्धः तेन जातित्वस्वरूपाभावस्य [तत्र] प्रसिद्धत्वादिति भावः।

विवृतिः

-च्छिन्नप्रकारताशालितदभावप्रतियोगिमानित्याकारकबुद्धेरित्यर्थः। विषयतया = प्रकारतया, **प्रतिबन्धकतेति**। प्रतिबन्धकतावच्छेदकप्रकारतावच्छेदको यः सम्बन्ध इत्यर्थः। तेन = तेन सम्बन्धेन, तथा च तत्तदभावप्रतियोगितावच्छेदका-वच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूता या प्रकारता तदवच्छेदकसम्बन्धेन हेत्वधिकरणवृत्तित्वमभावस्य वक्तव्यमिति समुदितार्थः।

पूर्वोक्तातिव्याप्तिद्वयं निरस्यति—**तथा चेति**। एवञ्च द्रव्यत्वाभाववान् जातित्वादित्यत्र हेतुभूतजात्यधिकरणे वर्त्तमानो यो जातित्वाभावाभावः,—तत्प्रति-योगी यो जातित्वाभावः, साध्यतावच्छेदकस्वरूपसम्बन्धेन तद्वत्ताबुद्धौ 'स्वरूपेणैव जातित्ववानि'ति ज्ञानस्य प्रतिबन्धकतया तत्प्रतिबन्धकतावच्छेदकीभूता या जातित्व-निष्ठा प्रकारता,—तदवच्छेदकस्वरूपसम्बन्धेन हेत्वधिकरणे जातित्वाभावाभावस्य जातित्वस्वरूपस्य विद्यमानत्वाल्लक्षणसमन्वयः सम्भवति, सत्तावान् जातेरित्यत्र सत्ताभावो न लक्षणघटकः, समवायेन सत्ताभाव-प्रतियोगि-सत्तावत्त्वबुद्धौ स्वरूपेण सत्ताभाववत्ताज्ञानस्य प्रतिबन्धकतया तदवच्छेदकसत्ताभावनिष्ठप्रकारतावच्छेदको यः स्वरूपसम्बन्धस्तेन सम्बन्धेन जात्यधिकरणे सत्ताभावस्यावर्त्तमानत्वात्, एवं कालिकसम्बन्धावच्छिन्नप्रतियोगिताकघटत्वाभावाभाववान् गगनत्वादित्यत्रापि साध्याभावो न लक्षणघटकः, तदभावप्रतियोगिसाध्यवत्ताबुद्धेः प्रतिबन्धकताव-च्छेदककालिकसम्बन्धेन गगने वृत्तित्वाप्रसिद्धेः, अतः स्वपदेन गगनत्वाभावाभाव-मादाय तत्प्रतियोगिगगनत्वाभावबुद्धौ 'स्वरूपेण गगनत्ववानि'त्याकारकज्ञानस्य प्रतिबन्धकतया तदवच्छेदकीभूता या गगनत्वनिष्ठा प्रकारता तदवच्छेदकस्वरूप-सम्बन्धेन गगने हेत्वधिकरणे गगनत्वरूपाभावस्य सत्त्वाल्लक्षणसमन्वयसम्भवान्न कोऽपि दोष इत्यवधेयम्।

जागदीशी

वस्तुतो व्याप्यवृत्तित्वमत्र साध्यतावच्छेदकसम्बन्धेन यत् स्वाधिकरणं तद्वृत्त्यभावस्य तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाभावरूपं ग्रन्थकृतोऽभिप्रेतं,

तादृशसाध्यकञ्च समवायादिना आत्मत्वसाध्यकज्ञानवत्त्वादिकं, समवायेन आत्मत्ववति [1]समवायेनात्मत्वाभावस्य केनापि सम्बन्धेनावृत्तेः,

विवृतिः

सत्तावान् जातेरित्यादिकं पुनरव्याप्यवृत्तिसाध्यकमेवातस्तत्र 'प्रतियोगिवैयधिकरण्य'मपि निवेश्यं, व्याप्यवृत्तिसाध्यकस्थले च हेत्वधिकरणवृत्तित्वं स्वरूपसम्बन्धेनैव वक्तव्यं, न तु गुरुतरसम्बन्धेनेत्याशयेन समाधत्ते—**वस्तुत इति** । अत्र = 'नोपादेयं सर्वथा व्याप्यवृत्तिसाध्यक' इत्यत्र । **साध्यतावच्छेदकसम्बन्धेनेति** । तथा च साध्यतावच्छेदकसम्बन्धेन यत्साध्याधिकरणं तत्र वृत्तिनियामकसम्बन्धसामान्येन वर्त्तमानो योऽभावस्तन्निरूपिता या साध्यतावच्छेदकसम्बन्धावच्छिन्ना प्रतियोगिता तदभाववत्त्वं व्याप्यवृत्तित्वं, तादृशव्याप्यवृत्तिसाध्यकस्थल एव 'प्रतियोगिवैयधिकरण्य'मभावविशेषणं नोपादेयं, तादृशं च साध्यमात्मत्वं, गगनत्वादिकं वा, समवायेनात्मत्वाधिकरण आत्मनि,—स्वरूपेण गगनत्वाधिकरणे गगने वा,—समवायेनात्मत्वाभावस्य,—स्वरूपेण गगनत्वाभावस्य चावर्त्तमानत्वात्, समवायेन घटाद्यभावस्यैव सत्त्वात् तत्प्रतियोगित्वाभावस्यात्मत्वादावक्षतत्वादिति सर्वं चतुरस्रम् ।

'साध्यतावच्छेदकसम्बन्धेने'त्यनुक्तौ निरुक्तव्याप्यवृत्तिलक्षणासम्भवः, आत्मत्वगगनत्वादापि कालिकेनात्मत्वाधिकरणे घटे वर्त्तमानस्य समवायेनात्मत्वाभावस्य

दीपिका

**वस्तुतो व्याप्यवृत्तित्वमिति** । नन्वेतत्कल्पाभिप्रेतं कीदृशं लक्षणशरीरं ? यदि हेत्वधिकरणवृत्तितावदभावनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वघटितं, तदा विषयितया गगनवद्भेदस्य साध्यत्वे प्रमेयत्वहेतावतिव्याप्तिः, साध्याभावस्य गगनात्मकस्य वृत्तित्वविरहेण लक्षणाघटकत्वात्,

न च हेत्वधिकरणसम्बन्धित्वमेव निवेशनीयमिति वाच्यम्, अयमात्माज्ञानादित्यत्राव्याप्त्यापत्तेः, आत्मत्वाभावस्यापि समानकालीनत्वादिसम्बन्धेन हेत्वधिकरणसम्बन्धित्वादिति चेन्न । हेत्वधिकरणसम्बन्धितायां,—वृत्तिनियामकसंसर्गातिरिक्तसम्बन्धावच्छिन्नत्व—वृत्तिमद्वृत्तित्वैतदुभयाभावस्य विवक्षितत्वान्न कोऽपि दोष इति ध्येयम् ।

[1] 'समवायावच्छिन्ने'ति प्रामाणिकपुस्तके पाठः ।

दीधितिः

**प्रतियोग्यसामानाधिकरण्यञ्च,—प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यं,**

जागदीशी

तथा च तादृशसाध्यक एव नोपादेयं, सत्तावान् जातेरित्यादौ तु पुनरुपादेयमेव, सत्त्ववति स्पन्दादौ समवायावच्छिन्नसत्ताभावस्य कालिकसम्बन्धेन वर्त्तमानतया सत्तादेर्निरुक्तव्याप्यवृत्तित्वाभावात्, व्याप्यवृत्तित्वघटक—स्वाधिकरणवृत्तित्वस्य सम्बन्धसामान्येन प्रविष्टत्वात्, एतल्लाभार्थमेव[1] 'सर्वथैव व्याप्यवृत्तिसाध्यक' इत्युक्तं, तस्य सम्बन्धविशेषानियन्त्रितत्वात्,

व्यभिचारादिस्तु सम्बन्धो न वृत्तिनियामकः, तेनात्मत्वादेरपि न व्याप्यवृत्तित्वहानिरिति ध्येयम् ।

सर्वथैव व्याप्यवृत्तिसाध्यके = प्रतियोगिवैयधिकरण्याघटित-व्याप्तिविशिष्टहेतुमत्तानिश्चयोत्तरानुमितौ, । नोपादेयं = प्रतियोग्यसमानाधिकरणांशो जनकतावच्छेदके नोपादेयः, साध्य-साधनभेदेन = कार्य्य-कारणभेदेन, व्याप्तेः = कारणतावच्छेदकघटकव्याप्तेः, ; भेदात् = भिन्नत्वात्, इत्यपि वदन्ति ॥ ५ ॥

विवृतिः

प्रतियोगितायाः सत्त्वादतस्तदुपात्तम् । सत्ताया व्याप्यवृत्तित्वाभावं प्रदर्शयति—**सत्तावान् जातेरिति** । नन्वात्मत्वाभावस्यापि समानकालीनत्वादिसम्बन्धेनात्मनि सत्त्वात्कुत आत्मत्वादेर्व्याप्यवृत्तित्वमत आह—**व्यभिचारादीति**। योऽभावो यत्र स्वरूपेण न वर्त्तते तदभावस्य येन केनापि सम्बन्धेन तत्सम्बन्धितानियामकसम्बन्धो 'व्यभिचारादिसम्बन्धः' । तथा च निरुक्तव्याप्यवृत्तित्वघटकस्वाधिकरणवृत्तित्वं वृत्तिनियामकसम्बन्धसामान्येनैव विवक्षणीयमिति भावः । संयोग-समवाय-कालिक-स्वरूपादेरेव वृत्तिनियामकत्वान्निरुक्तसमानकालीनत्वादेर्न वृत्तिनियामकत्वमतो नात्मत्वस्य व्याप्यवृत्तित्वहानिरिति ध्येयम् ॥५॥

**दीधितौ—प्रतियोग्येति** । प्रतियोग्यसामानाधिकरण्यं मूलोक्तमित्यर्थः ॥ प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यं = प्रतियोगितावच्छेदकावच्छिन्नाधि-

---

१ 'एतत्सूचनार्थ'मिति कलिकातामुद्रितपाठः ।

दीधितिः

## तेन,—अयं गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः,

जागदीशी

'एकधर्म्मावच्छिन्नप्रतियोगितायाः प्रतियोगिव्यक्तीनां भेदेऽप्यैक्य'-मिति नव्यमते,-वह्निमान् धूमादित्यादौ [ साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यमात्रोक्तावपि[1] ] वह्न्यादिसामान्याभावमादायाव्याप्त्यसम्भवादतिव्याप्तिवारणमेव प्रयोजनमाह,-※ तेनेति※ ।

विवृतिः

करणावृत्तित्वं, तेन = प्रतियोगित्वाश्रयाधिकरणावृत्तित्वं परित्यज्य प्रतियोगितावच्छेदकावच्छिन्नाधिकरणावृत्तित्वस्याभावविशेषणत्वोपादानेन,

ननु प्रतियोगित्वाश्रयाधिकरणावृत्तित्वस्याभावविशेषणत्वे—वह्निमान्धूमादित्यत्राव्याप्तिरेव सम्भवति, स्वरूपसम्बन्धात्मिकायाः प्रतियोगितायाः प्रतिव्यक्ति भिन्नतया, धूमाधिकरणे पर्वते वर्त्तमानस्य वह्न्यभावस्य प्रतियोगित्वाश्रयीभूत-महानसीयवह्न्यधिकरणे महानसेऽवर्त्तमानत्वाद्वह्न्यभावस्य प्रतियोगिव्यधिकरण-हेतुसमानाधिकरणाभावत्वेनोपादातुं शक्यतया तत्प्रतियोगितावच्छेदकत्वस्य वह्नित्वरूपसाध्यतावच्छेदके सत्त्वादिति,–निरुक्तस्थलद्वयेऽतिव्याप्तिदानमसङ्गतमत आह–एकधर्मेति । वह्नित्वाद्येकधर्मावच्छिन्नप्रतियोगिताया इत्यर्थः । भेदेऽपि=अनन्तत्वेऽपि । नव्यमत इति । तथा च सर्वमतसाधारण्यानुरोधेनैवातिव्याप्तिदानमिति भावः, प्रतियोगिवैयधिकरण्यमात्रोक्तावपि = प्रतियोगित्वाश्रयाधिकरणावृत्तित्वनिवेशेऽपि, अव्याप्त्यसम्भवादिति । तथा च 'वह्निमान्धूमा'दित्यत्र वह्न्यभावो न लक्षणघटकः, तदभावप्रतियोगिताया एकस्या निखिलवह्निनिष्ठाया आश्रयीभूतस्य वह्नेरधिकरणे पर्वतादौ वह्न्यभावस्य वृत्तेः, तादृशाभावान्तरप्रतियोगितानवच्छेदकत्वस्य च वह्नित्वे सत्त्वादव्याप्तिविरहात्,—तन्निवेशेत्वतिव्याप्तिरस्त्यवेति भावः ।

दीधितौ,-अयमिति । तथा च प्रतियोगित्वाश्रयाधिकरणावृत्तित्वस्याभावविशेषणत्वे,-'गुणकर्मान्यत्वविशिष्टसत्तावान् जाते'रित्यत्रातिव्याप्तिः, हेत्वधिकरणे गुणकर्मादौ विशिष्टसत्ताभावस्य लक्षणाघटकत्वात्, तदभावप्रतियोगित्वाश्रयीभूतायाः सत्ताया अधिकरणे गुणादौ गुणकर्मान्यत्वविशिष्टसत्ताभावस्य वृत्तेः, तादृशहेतुसमानाधिकरणघटाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विशिष्टसत्तात्वे सत्त्वात् ।

एवं–भूतत्व-मूर्त्तत्वोभयवान् मूर्त्तत्वादित्यत्राप्यतिव्याप्तिः, मूर्त्तत्वरूपहेत्वधिकरणे मनसि साध्याभावस्य—भूतत्व-मूर्त्तत्वोभयाभावस्य—लक्षणाघटकत्वान्निरुक्तोभयाभाव-

---

1. [ ] चिह्नान्तर्गतः पाठो हस्तलिखितपुस्तके नास्ति ।

जागदीशी

**न च विशिष्टसत्त्वस्य व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशादिदमसङ्गतमिति वाच्यम् ; जातौ विशिष्टसत्त्वव्यभिचारज्ञानदशायामपि विशिष्टसत्त्वधर्मिकजातिमन्निष्ठप्रतियोगिव्यधिकरणाभावाप्रतियोगित्व-**

विवृतिः

प्रतियोगित्वाश्रयीभूतस्य मूर्त्तत्वस्याधिकरणे मनसि भूतत्व–मूर्त्तत्वोभयाभावस्य वृत्तेः, तादृशघटाद्यभावान्तरप्रतियोगितानवच्छेदकत्वस्य भूतत्वमूर्त्तत्वोभयत्वे सत्त्वात् । प्रतियोगितावच्छेदकावच्छिन्नाधिकरणावृत्तित्वस्याभावविशेषणत्वे तु,–विशिष्टसत्ताभावप्रतियोगितावच्छेदकीभूत-वैशिष्ट्य-सत्तात्वावच्छिन्नाधिकरणे द्रव्ये,—भूतत्वमूर्त्तत्वोभयाभावप्रतियोगितावच्छेदकीभूततादृशोभयत्वावच्छिन्नाधिकरणे — पृथिव्यादिचतुष्टये च,—यथायथं विशिष्टसत्ताभावस्य, भूतत्वमूर्त्तत्वोभयाभावस्य चावर्त्तमानत्वात्,—हेत्वधिकरणे गुणे,–मनसि,–च वर्त्तमानत्वात्साध्याभावस्य लक्षणघटकत्वेन नातिव्याप्तिः सम्भवतीति तात्पर्यम् ।

**न चेति** । 'वाच्य'मिति परेणान्वयः । विशिष्टसत्त्वस्य = विशिष्टसत्तारूपसाध्यस्य, व्याप्यवृत्तितया = स्वरूपसम्बन्धेन स्वाधिकरणे वर्त्तमानाभावाप्रतियोगितया, **प्रतियोगीति** । केवलहेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणीयत्वादिति भावः । इदं = 'विशिष्टसत्तावान् जाते'रित्यत्रातिव्याप्तिदानम् । **असङ्गतमिति** । तथा च व्याप्यवृत्ति-विशिष्टसत्ता-साध्यकस्थले प्रतियोगित्वाश्रयाधिकरणावृत्तित्वस्य,—प्रतियोगितावच्छेदकावच्छिन्नाधिकरणावृत्तित्वस्य वाऽभावेऽनिवेशनीयतया जातिरूपहेत्वधिकरणे गुणे विशिष्टसत्ताभावस्य सत्त्वान्न 'विशिष्टसत्तावान् जाते'रित्यत्रातिव्याप्तिरित्याशयः ।

'विशिष्टसत्तात्वं जातिमन्निष्ठाभावप्रतियोगितावच्छेदक'मित्याकारकज्ञानकालेऽपि 'विशिष्टसत्तात्वं प्रतियोगित्वाश्रयाधिकरणावृत्तिजातिमद्गुणवृत्त्यभावप्रतियोगितानवच्छेदक'मित्याकारकज्ञानस्योदयात्,—तस्य च–विशिष्टसत्तासाध्यकानुमितिकारणीभूतस्य—सत्त्वदशायां पूर्वोक्तव्यभिचारज्ञानकालेऽपि विशिष्टसत्तासाध्यकानुमित्यापत्तिरेवातिव्याप्तिपदेन दीधितिकृतामभिप्रेतेत्याशयेन समाधत्ते—**जाताविति** । विशिष्टसत्त्वव्यभिचारज्ञानदशायां = 'विशिष्टसत्तात्वं जातिमन्निष्ठाभावप्रतियोगितावच्छेदकं, जातिर्विशिष्टसत्ताभाववति वर्त्तमाना वे'त्याकारकज्ञानकाले, **विशिष्टसत्त्वधर्मिकेति** । विशिष्टसत्तात्वधर्मिकेत्यर्थः । अप्रतियोगित्वज्ञानात् = प्रतियोगितानवच्छेदकत्वज्ञानात्, 'विशिष्टसत्तात्वं प्रतियोगित्वाश्रयाधिकरणावृत्तिजातिम-

दीधितिः

भूतत्व-मूर्त्तत्वोभयवान् मूर्त्तत्वादित्यादौ नातिव्याप्तिः।

जागदीशी

ज्ञानात् विशिष्टसत्त्वसाध्यकानुमितिप्रसङ्गस्यैव प्रकृतेऽतिप्रसङ्गपदार्थत्वात्, प्रागुक्तरीत्या विशिष्टसत्त्वस्यापि व्याप्यवृत्तित्वविरहाच्च। ननु विशिष्टस्यातिरिक्तत्वमते तत्रातिव्याप्त्यसम्भव इत्यत आह,—❀ भूतत्वेति ❀।

प्राञ्चस्तु—"विशिष्टसत्त्वस्य व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशात् 'भूतत्वेति' साध्यान्तरं, तत्र च भूतत्वम् = आत्मान्यत्वे सति विशेषगुणवत्त्वं, मूर्त्तत्वम् = अवच्छिन्नपरिमाणवत्त्वं, तदुभयञ्चाव्याप्यवृत्त्येव, घटादावुत्पत्तिकालावच्छेदेन तदुभयाभावसत्त्वात्" इत्याहुः।

विवृतिः

न्निष्ठाभावप्रतियोगितानवच्छेदक'मित्याकारकज्ञानादिति यावत्। अनुमितिप्रसङ्गस्य= अनुमित्यापत्तेः, 'अतिप्रसङ्ग'पदार्थत्वात् = अतिव्याप्तिशब्दार्थत्वात्।

ननु व्याप्यवृत्तितानवच्छेदकधर्मावच्छिन्नविधेयताकानुमितिं प्रति प्रतियोगिस्वाश्रयाधिकरणावृत्तिहेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्वज्ञानस्य हेतुतया विशिष्टसत्तात्वस्य व्याप्यवृत्तितानवच्छेदकत्वविरहेण तदवच्छिन्नानुमितौ नोक्तज्ञानं कारणमित्यापादकाभावेन कुतोऽनुमित्यापत्तिरित्यत आह—**विशिष्टसत्त्वेति**। उक्तरीत्या = पूर्वोक्त'साध्यतावच्छेदकसम्बन्धेन स्वाधिकरणवृत्ती'त्यादिरीत्या, **व्याप्यवृत्तित्वविरहादिति**। विशिष्टसत्ताधिकरणे घटे कालिकसम्बन्धेन विशिष्टसत्ताभावस्य सत्त्वादिति भावः।

स्थलद्वयेऽतिव्याप्तिदानप्रयोजनमाह—**विशिष्टस्येति**। **अतिरिक्तत्वमत इति**। तथा च विशिष्टसत्ताभावप्रतियोगित्वाश्रयीभूता विशिष्टसत्तैव, न तु सत्ता, तस्या विशिष्टसत्तातो भिन्नत्वादिति प्रतियोगित्वाश्रयाधिकरणावृत्तित्वनिवेशेऽपि 'विशिष्टसत्तावान् जाते'रित्यत्रातिव्याप्तिर्न सम्भवतीति भावः।

**प्राञ्चस्त्विति**। ननु विशिष्टसत्त्वं यथा व्याप्यवृत्ति,—तथा भूतत्वमूर्त्तत्वोभयमपि व्याप्यवृत्त्येवेति—भूतत्वमूर्त्तत्वोभयसाध्यकस्थलेऽपि 'प्रतियोगिवैयधिकरण्यं' न निवेश्यमित्यत आह—**तत्र चेति**। भूतत्व-मूर्त्तत्वोभयस्मिन्नित्यर्थः। सप्तम्यर्थो घटकत्वम्, अन्वयश्चास्य 'भूतत्व'मित्यनेन 'मूर्त्तत्व'मित्यनेन च, **तदुभयञ्चेति**। भूतत्व-मूर्त्तत्वोभयञ्चेत्यर्थः। **अव्याप्यवृत्त्येवेति**। तथा चात्मान्यत्वविशिष्टविशेष-

दीधितिः

न चोभयत्वमेकविशिष्टापरत्वं, विशिष्टश्च केवलादन्यदिति,— तदभावो मनसि सहजत एव प्रतियोगिव्यधिकरण इति वाच्यम्;

उभयत्वं हि न विशिष्टत्वादनतिरिक्तं,—

जागदीशी

[ सार्वभौममतमाशङ्कते[1] ] ❀ न चेति ❀ । 'वाच्य'मिति परेणा-न्वयः । तदभावः, = भूतत्व-मूर्त्तत्वोभयाभावः । ❀ सहजत एवेति ❀ ।

विवृतिः

गुणस्य भूतत्वात्मकस्य,—रूपादेरवच्छिन्नपरिमाणरूपस्य मूर्त्तत्वस्य च गुणत्वेनो-त्पत्तिकालीनघटे तदुभयाभावसत्त्वात् निरुक्तोभयस्याव्याप्यवृत्तित्वं निराबाधमिति-समुदितार्थः ।

'आहु'रित्यस्वरससूचनाय,—तद्बीजन्तु,—विशिष्टसत्ताया अपि प्रागुक्तव्याप्य-वृत्तित्वविरहेणाव्याप्यवृत्तित्वात्तस्या व्याप्यवृत्तित्वकथनमसङ्गतमिति—ध्येयम् ।

सार्वभौमास्तु—"मूलोक्तं 'प्रतियोग्यसामानाधिकरण्यं' प्रतियोगित्वाश्रया-धिकरणावृत्तित्वरूपमेव, तथात्वेऽपि 'विशिष्टसत्तावान् जाते'रित्यत्र नातिव्याप्ति-सम्भवः, विशिष्टसत्तायाः शुद्धसत्तातो भिन्नतया—विशिष्टसत्ताभावप्रतियोगिताश्रयी-भूताया विशिष्टसत्ताया अधिकरणे द्रव्ये—विशिष्टसत्ताभावस्यावृत्तेः,—हेत्वधि-करणे गुणादौ च वृत्तेः,—साध्याभावस्य लक्षणघटकत्वात् ।

एवं,—'भूतत्व-मूर्त्तत्वोभयवान् मूर्त्तत्वा'दित्यत्रापि नातिव्याप्तिः, तादृशोभयस्य भूतत्व-विशिष्टमूर्त्तत्वस्वरूपतया तस्य केवलमूर्त्तत्वतो भिन्नतया—भूतत्व-मूर्त्तत्वो-भयाभावप्रतियोगित्वाश्रयभूतत्वविशिष्टमूर्त्तत्वाधिकरणे पृथिव्यादिचतुष्टये तस्य वृत्ते-र्हेत्वधिकरणे मनस्यपि वृत्तेश्च,—साध्याभावस्य लक्षणघटकत्वादिति कृतं 'प्रति-योगितावच्छेदकावच्छिन्नासामानाधिकरण्य' निवेशेने"ति वदन्ति, तन्मतं—दूषयितुमुपन्यस्यति दीधितौ—न चेति । 'वाच्य' मित्यनेनान्वयः । उभयत्वं = भूतत्व-मूर्त्तत्वोभयत्वादिकम्, एकविशिष्टापरत्वं = भूतत्वविशिष्टमूर्त्तत्वत्वादिरूपं, केवलात् = शुद्धमूर्त्तत्वादितः, अन्यत् = भिन्नं, तदभावः = भूतत्व-मूर्त्तत्वोभयाभावः, सहजत इति । 'प्रतियोगित्वाश्रयाधिकरणावृत्तित्व'मात्रप्रवेशेऽपीत्यर्थः ।

समाधत्ते,—उभयत्वं हीति । हि=यस्मात्,—उभयत्वं विशिष्टत्वान्नान-तिरिक्तमपि त्वतिरिक्तमेव,—तस्मान्न भूतत्व-मूर्त्तत्वोभयवान् मूर्त्तत्वादित्यत्र दर्शितरीत्याऽतिव्याप्तिवारणं सम्भवतीति,—समुदितदीधितिग्रन्थार्थः ।

---

१ अयं पाठो लिखितपुस्तके नास्ति ।

दीधितिः

न वा तदवच्छिन्नाभावस्तदवच्छिन्नाभावात्,

जागदीशी

प्रतियोगितावच्छेदकावच्छिन्नत्वाप्रवेशेऽपीत्यर्थः। ननूभयत्वस्य विशिष्टत्वातिरिक्तत्वेऽपि—सहजतः प्रतियोगिव्यधिकरणस्य विशिष्टत्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकमेवोभयत्वमतो नातिव्याप्तिः, विशिष्टत्वावच्छिन्नाभावस्योभयत्वावच्छिन्नाभावानतिरेकादत आह—*न वेति*। तदवच्छिन्नाभावः, = उभयत्वावच्छिन्नाभावः। तदवच्छिन्नाभावात् = वैशिष्ट्यावच्छिन्नाभावात्, लिङ्गव्यत्ययेन 'नातिरिक्त' इत्यनुषज्यते, तथा चातिरिक्त एवेत्यर्थः।

विवृतिः

'न वे'ति दीधितिग्रन्थोत्थितौ बीजमाह—**नन्विति**। **सहजत इतीति**। अयम्भावः—भवतु भूतत्व-मूर्त्तत्वोभयत्वं भूतत्वविशिष्टमूर्त्तत्वतो भिन्नम्, मा वा भवतु भूतत्व-मूर्त्तत्वोभयाभावः प्रतियोगित्वाश्रयप्रतियोगिव्यधिकरणः, तथापि भूतत्वविशिष्टमूर्त्तत्वाभावस्य प्रतियोगिनो मूर्त्तत्वातिरिक्तस्य तादृशविशिष्टमूर्त्तत्वस्याधिकरणे पृथिव्यादाववर्त्तमानस्य हेत्वधिकरणे मनसि सत्त्वात्कुतः 'प्रतियोगित्वाश्रयाधिकरणावृत्तित्व'मात्रनिवेशे 'भूतत्व-मूर्त्तत्वोभयवान् मूर्त्तत्वा'दित्यत्रातिव्याप्तिः सम्भवतीति।

ननु निरुक्तप्रतियोगिव्यधिकरणस्य भूतत्वविशिष्टमूर्त्तत्वाभावस्य हेत्वधिकरणे मनसि सत्त्वेऽपि,—तत्प्रतियोगितानवच्छेदकमेव भूतत्व-मूर्त्तत्वोभयत्वमिति कुतोऽतिव्याप्तिवारणमित्यत आह- **तत्प्रतियोगितेति**। भूतत्वविशिष्टमूर्त्तत्वाभावप्रतियोगितावच्छेदकं भूतत्व-मूर्त्तत्वोभयत्वं कथमित्याकाङ्क्षायामाह—**विशिष्टत्वेति**। **अनतिरेकादिति**। भूतत्वविशिष्टमूर्त्तत्वाभावस्य, भूतत्व-मूर्त्तत्वोभयाभावस्य च तुल्याधिकरणवृत्तित्वेनैक्यादित्यर्थः। **तदवच्छिन्नाभावादिति**। तथा चोभयत्वं यथा विशिष्टत्वाद्भिन्नं तथोभयाभावोऽपि विशिष्टाभावाद्भिन्न एवेति,—भूतत्वविशिष्टमूर्त्तत्वाभावस्य तादृशप्रतियोगिव्यधिकरणहेतुसमानाधिकरणत्वेऽपि,—तदभावप्रतियोगितानवच्छेदकत्वस्य भूतत्व-मूर्त्तत्वोभयत्वरूपसाध्यतावच्छेदके सत्त्वान्न 'भूतत्व-मूर्त्तत्वोभयवान् मूर्त्तत्वा'दित्यत्र 'प्रतियोगित्वाश्रयाधिकरणावृत्तित्व'निवेशमात्रेणातिव्याप्तिवारणमिति भावः। **लिङ्गव्यत्ययेनेति**। पूर्वमनतिरिक्तमिति नपुंसक-

दीधितिः

**वैशिष्ट्यविरहेऽपि घटत्व-पटत्वयोरुभयत्वस्य,—उभयत्वेन तदभावस्य च,—प्रत्यक्षसिद्धत्वात्।**

जागदीशी

न च[1] [अन्यत्र] विरुद्धोभयत्वावच्छिन्नाभावस्यातिरिक्तत्वेऽपि प्रकृतेऽविरुद्धयोर्भूतत्व-मूर्त्तत्वयोरुभयत्वावच्छिन्नाभावो विशिष्टाभाव एव, समनियताभावयोर्लाघवेनैकत्वादिति वाच्यम्; तावताऽपि हेतुमतो यादृशप्रतियोगिताश्रयानधिकरणत्वं, तादृशप्रतियोगितानवच्छेदकत्वस्य भूतत्व-मूर्त्तत्वोभयत्वेऽनपायादतिव्याप्तेस्तादवस्थ्यादिति भावः। ❀उभयत्वस्येति❀।

विवृतिः

लिङ्गेन निर्देशेऽपि, अभावपदस्य पुंल्लिङ्गतया तदनुरोधेनातिरिक्त इति पुंल्लिङ्गनिर्देश एव कर्त्तव्य इत्याशयः।

ननु घटत्व—पटत्वोभयाभावस्य विशिष्टाभावाद्भिन्नत्वेऽपि भूतत्व—मूर्त्तत्वोभयाभावस्य भूतत्व—विशिष्टमूर्त्तत्वाभावसमनियततया तयोरैक्यमवश्यमभ्युपगन्तव्यमिति,—प्रतियोगित्वाश्रयप्रतियोगिव्यधिकरणस्य भूतत्वविशिष्टमूर्त्तत्वाभावस्य मनसि हेतुसमानाधिकरणस्य प्रतियोगितावच्छेदकमेव भूतत्व-मूर्त्तत्वोभयत्वरूपं साध्यतावच्छेदकमतो न तत्रातिव्याप्तिरित्याशङ्कते—**न चेति**। 'वाच्य'मित्यनेनान्वयः। निरुक्ताभावयोरभिन्नत्वेऽपि प्रतियोगितावच्छेदकभेदेन प्रतियोगिताया भिन्नतया नोक्तरीत्याऽतिव्याप्तिवारणं सम्भवतीत्याशयेन समाधत्ते—**तावतापीति**। हेतुमतः = हेत्वधिकरणस्य, **यादृशेति**। यद्धर्मावच्छिन्नेत्यर्थः। **तादृशेति**। तद्धर्मावच्छिन्नेत्यर्थः। **अनपायादिति**। तथा च भूतत्वविशिष्टमूर्त्तत्वत्वावच्छिन्नप्रतियोगित्वाश्रयतादृशविशिष्टमूर्त्तत्वानधिकरणत्वस्यैव मनसि सत्त्वात्, तादृशविशिष्टमूर्त्तत्वत्वावच्छिन्नप्रतियोगितावच्छेदकं भूतत्वविशिष्टमूर्त्तत्वत्वमेव, न तु साध्यतावच्छेदकभूतत्व—मूर्त्तत्वोभयत्वमिति प्रतियोगित्वाश्रयाधिकरणत्वनिवेशे 'भूतत्व-मूर्त्तत्वोभयवान्मूर्त्तत्वा'दित्यत्रातिव्याप्तिरस्त्येवेति भावः।

उभयत्वस्य विशिष्टत्वभिन्नत्वे बीजमाह—दीधितौ—**वैशिष्ट्यविरहेऽपीति**। वैशिष्ट्यास्याऽप्रसिद्धत्वेपीत्यर्थः। **उभयत्वस्येति**।

---

१ "न चान्यत्रोभयाभावस्य विशिष्टाभावादतिरिक्तत्वेपि प्रकृते भूतत्वविशिष्टमूर्त्तत्वाभावस्यैव तदुभयत्वावच्छिन्नप्रतियोगिताकत्व"मिति काशी-कलिकातामुद्रितपुस्तकयोः पाठो दृश्यते।

दीधितिः

न च तत्र व्याप्तिरेव, उभयत्वाधिकरणस्य मूर्त्तत्वस्य मनसि सत्त्वादिति वाच्यम्; तथात्वेऽप्युभयत्वेन रूपेण तत्रासत्त्वात्,

जागदीशी

'प्रत्यक्षसिद्धत्वा'दिति परेणान्वयः[1]। तथा च विरुद्धयोरिव समानाधिकरणयोरप्युभयत्वमतिरिक्तमेव,[2] विरुद्धाविरुद्धस्थलीयोभयत्वप्रतीत्योः समानाकारत्वात्, भूतत्वमूर्त्तत्वयोर्विरुद्धत्वभ्रमदशायामप्युभयत्वप्रत्ययाच्चेति भावः।

[❀न चेति❀।—'वाच्यम्' इति परेणान्वयः।] तत्र = 'भूतत्व-मूर्त्तत्वोभयवान् मूर्त्तत्वा'दित्यत्र। ❀व्याप्तिरेवेति❀। तथा च तस्य लक्ष्यतयातद्वारणप्रयासोऽनुचित इति भावः। ❀तथात्वेपीति❀। उभयत्वाश्रयस्य

विवृतिः

तथा च घटत्वविशिष्टपटत्वाप्रसिद्धावपि 'घटत्व-पटत्वोभय'मित्याकारकप्रत्यक्षात्मकप्रतीतिसम्भवान्नोभयत्वं विशिष्टत्वादभिन्नम्, एवं,—'घटत्वपटत्वोभयं नास्ती'त्यभावस्याप्युभयत्वावच्छिन्नप्रतियोगिताकत्वेन प्रत्यक्षसिद्धत्वादुभयाभावोऽपि विशिष्टत्वावच्छिन्नाभावादतिरिक्त एवेति तात्पर्यम्।

ननु विरुद्धोभयत्वं विशिष्टत्वादभिन्नमस्तु, न तु समानाधिकरणोभयत्वं तथेत्यतो भावमाह—**तथा चेति**। विरुद्धयोः = घटत्व-पटत्वयोः, समानाधिकरणयोः = भूतत्व-मूर्त्तत्वयोः, **विरुद्धाविरुद्धेति**। 'घटत्व-पटत्वोभय'मितिवत् 'भूतत्व-मूर्त्तत्वोभय'मित्याकारकप्रतीतेरपि समानाकारत्वानुभवादित्यर्थः।

एवं 'भूतत्वं मूर्त्तत्वविरुद्ध'मिति भ्रमकाले 'भूतत्वविशिष्टमूर्त्तत्व'मित्याकारकज्ञानानुदयात्तदानीं 'भूतत्व-मूर्त्तत्वोभय'मित्याकारकज्ञानोदये बाधकाभावेनोभयत्वमवश्यं विशिष्टत्वाद्भिन्नमेवेत्याशयेनाह—**भूतत्व-मूर्त्तत्वयोरिति**। "साध्यतावच्छेदकाश्रयस्य हेत्वधिकरणे सत्त्व एव हेतोर्लक्ष्यत्वम्" इत्यभिमानं निराकुर्वतो दीधितिकृतो'न चे'त्यादिग्रन्थं व्याचष्टे—**न चेतीति**। तस्य = मूर्त्तत्वहेतोः, लक्ष्यतया = सद्धेतुतया, तद्वारणप्रयासः = तत्र लक्षणागमनप्रदर्शनप्रयासः, **उभयत्वा-**

---

१ 'अग्रेऽन्वय' इति हस्तलिखितपुस्तके पाठः।

२ "तथा च विरुद्धयोरप्युभयत्वमतिरिक्तमेव, उभयत्रैवोभयत्वप्रतीत्योः समानाकारत्वादि"ति काशीमुद्रितपाठः।

दीधितिः

—'नात्रोभय'मिति प्रतीतेर्दुर्वारत्वात् ॥६॥

जागदीशी

मूर्त्तत्वस्य मनसि सत्त्वेपीत्यर्थः । तथा च हेतुमत्त्वावच्छेदेन साध्यतावच्छेदकावच्छिन्नवत्तास्थल एव व्याप्तिरतो नैतल्लक्ष्यमिति भावः ।

वृत्तिमवि व्याप्त्यभावस्य व्यभिचारनियतत्वाद्व्यभिचारं ग्राहयति,—
*नात्रोभयमिति* । अत्र = मूर्त्तत्वाश्रये मनसि ॥६॥

विवृतिः

**श्रयस्येति** । साध्यतावच्छेदकाश्रयस्येत्यर्थः । मनसि = हेत्वधिकरणे ।

**तथा चेति** । यस्य हेतोरधिकरणे यावत्येव यदि साध्यतावच्छेदकावच्छिन्नं वर्त्तते, तर्हि स एव हेतुः सद्धेतुः, व्याप्तिलक्षणलक्ष्यश्च । निरुक्तमूर्त्तत्वाधिकरणे यावदन्तर्गते मनसि साध्यतावच्छेदकभूतत्व–मूर्त्तत्वोभयत्वावच्छिन्नस्यासत्त्वान्न निरुक्तं मूर्त्तत्वं लक्ष्यमित्याशयः ।

**वृत्तिमतीति** । हेतावित्यर्थः । व्यभिचारनियतत्वात् = व्यभिचारव्यापकत्वात्, **व्यभिचारं ग्राहयतीति** । व्यभिचारज्ञानं प्रदर्शयतीत्यर्थः । तथा च व्यभिचार ज्ञानसत्त्वे व्याप्त्यभावस्यावश्यनिश्चेयतया नोक्तहेतौ मूर्त्तत्वे व्याप्तिरित्यर्थः ।

**दीधितौ**—उभयं = भूतत्व-मूर्त्तत्वोभयं, प्रतीतेः = 'भूतत्व-मूर्त्तत्वोभयाभाववन्मन' इतिज्ञानस्य, दुर्वारत्वात् = दुःखेनापि वारयितुमशक्यत्वात् ॥६॥

[ सम्प्रदायविदां मतमाश्रित्यात्यन्तपदव्यावृत्तिं प्रदर्शयति–**दीधितौ**—**अत्यन्तपदञ्चेति** । प्रतियोग्यसामानाधिकरण्यस्य = प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यस्य, **लाभायेति** । तथा च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यघटकीभूता प्रतियोगिताऽत्यन्ताभावत्वनिरूपिका वक्तव्या, एवं,—हेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्वघटिकाऽपि प्रतियोगिताऽत्यन्ताभावत्वनिरूपिका वक्तव्येत्याशयः ।

अन्यथा = प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यघटकीभूतायाः प्रतियोगिताया 'अत्यन्ताभावत्वनिरूपकत्व'रूपविशेषणानुपादाने, सर्वस्यैवाभावस्य = हेतुसमानाधिकरणाभावस्य ।

**स्वसमानाधिकरणेति** । स्वपदं हेतुसमानाधिकरणतत्तदभावव्यक्तिपरं, तत्समानाधिकरणं = तदधिकरणवृत्ति; अभावान्तरं = स्वातिरिक्ताभावान्तरं, तद्भिन्नत्वात् = तद्भेदाधिकरणत्वात्, 'सर्वस्यैवे'त्यनेनास्यान्वयः । तद्भेदस्य = तत्तदभाव

दीधितिः

"अत्यन्तपदञ्च,—अत्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यस्य, — अत्यन्ताभावत्वनिरूपकप्रतियोगितायाश्च — लाभाय, अन्यथा सर्वस्यैवाभावस्य स्वसमानाधिकरणाभावान्तरभिन्नत्वा-

जागदीशी

ननु वह्न्यादिभेदमादायाव्याप्तेः 'प्रतियोग्यसमानाधिकरण' पदेनैव वारणादत्यन्तपदं व्यर्थमत आह,—❀अत्यन्तपदञ्चेति❀। अत्यन्ताभावत्वनिरूपकं यत् प्रतियोगित्वं तदाश्रयवैयधिकरण्यविवक्षायाः फलमाह,—❀अन्यथेति❀। तद्भेदस्य = स्वसमानाधिकरणाभावान्तरभेदस्य।❀स्व-स्व-

विवृतिः

समानाधिकरणाभावान्तरभेदस्य, स्वस्वरूपानतिरिक्ततयेति। अभावाधिकरणकाभावस्याधिकरणस्वरूपत्वादिति भावः।

प्रतियोग्येति। तथा च यावन्तो हेतुसमानाधिकरणाभावास्तेषामेकैकमभावमादाय तत्तदभावसमानाधिकरणं यदभावान्तरं तद्भेदाधिकरणत्वस्य यावदभावे सत्त्वेन, 'वह्निमान्धूमा'दित्यादौ 'प्रतियोगिवैयधिकरण्यं' दुर्लभं स्यात्, धूमाधिकरणे वर्त्तमाना ये घटाभावादयस्तेषां मध्ये यो घटाभावस्तदधिकरणवृत्ति यत् पटाभावान्तरं तद्भेदस्य घटाभावे सत्त्वात्, पटाभावभेदस्य घटाभावस्वरूपतया घटाभावप्रतियोगी यथा घटस्तथा पटाभावोऽपीति,—पटाभावाधिकरणे पर्वतादौ घटाभावस्य वृत्तित्वात्, अनया रीत्या हेतुसमानाधिकरणाभावमात्रस्य पटाभावादेरपि घटाभावभेदस्वरूपतया 'प्रतियोगिवैयधिकरण्य'स्य दुर्लभत्वमापद्येत। ]

मूलोक्तात्यन्तपदोपादानस्य प्रयोजनाभावं प्रदर्श्य तद्व्यावृत्तिप्रदर्शनपरदीधितिग्रन्थोत्थितौ बीजमाह—नन्विति। वह्न्यादिभेदमादायेति। अत्यन्तपदानुपादाने हेतुसमानाधिकरणाभावमात्रोक्तावपि 'वह्निमान्धूमादि'त्यादौ धूमाधिकरणे पर्वतादौ 'वह्निर्न' इत्याकारकभेदमादाय तत्प्रतियोगितावच्छेदकत्वस्य वह्नित्वे सत्त्वेऽप्यव्याप्तिर्न सम्भवति, 'वह्निर्न'इत्यादिभेदस्य प्रतियोगिनो वह्नेरधिकरणे पर्वतादौ तस्य वृत्तेः, प्रतियोग्यसामानाधिकरण्यस्याभावविशेषणत्वोपादानादेव निरुक्तभेदवारणसम्भवादत्यन्तपदं निष्प्रयोजनकमित्याशयः।

तदाश्रयवैयधिकरण्यं = तदवच्छेदकावच्छिन्नाधिकरणावृत्तित्वं, यथाश्रुतार्थस्य पूर्वमेव निरस्तत्वात्। स्वसमानधिकरणेति। हेतुसमानाधिकरणतत्तदभावसमानाधिकरणेत्यर्थः। स्वस्वरूपानतिरिक्तेति। तत्तदभावस्वरूपाभिन्नतयेत्यर्थः।

दीधितिः

**तद्भेदस्य स्वस्वरूपानतिरिक्ततया प्रतियोग्यसमानाधिकरण्यस्यैव दुर्लभत्वापत्तेः,**

जागदीशी

रूपानतिरिक्ततयेति॥।—अनवस्थाभयेनेत्यादिः। ॥दुर्लभत्वापत्तेरिति॥।—हेतुसमानाधिकरणाभावमात्रस्यैव स्वात्मकभेदप्रतियोगि यदभावान्तरं—तत्समानाधिकरणत्वादिति भावः। न च भावस्वरूपाभावस्यैव [वह्न्यभावाभावस्य प्रतियोगी यो वह्न्यभावः,—तदसमानाधिकरणत्वात्[1]] प्रतियोग्यसामानाधिकरण्यं' सुलभमिति वाच्यम्; तस्यापि स्वसमानाधिकरणा-

विवृतिः

ननु घटाभावे वर्त्तमानस्य पटाभावभेदस्य घटाभावस्वरूपत्वं नाङ्गीक्रियतेऽपि त्वतिरिक्त एव पटाभावभेद इत्यत आह—**अनवस्थेति**। तथा चाभावाधिकरणकाभावभेदस्यातिरिक्तत्वे तत्तदभावभेद-भेदादेरप्यतिरिक्ततयाऽनवस्थाप्रसङ्गादिति भावः।

'प्रतियोग्यसामानाधिकरण्यस्य' दुर्लभत्वे हेतुमाह-**हेतुसमानाधिकरणेति**। **स्वात्मकेति**। स्वं = हेतुसमानाधिकरणतत्तदभावः, आत्मा = अधिकरणं—यस्य भेदस्यासौ—स्वात्मकभेदः। **प्रतियोगीति**। तादृशभेदप्रतियोगीत्यर्थः। अभावान्तरं = हेतुसमानाधिकरणतत्तदभावभिन्नो योऽभाव इत्यर्थः। 'तत्समानाधिकरणत्वादि'त्यस्य पूर्वोक्तेन 'हेतुसमानाधिकरणाभावमात्रस्ये'त्यनेनान्वयः।

ननु 'वह्निमान्धूमादि'त्यत्र पटाभावभेदस्य घटाभावाधिकरणकतया घटाभावादिकमादाय प्रतियोगिव्यधिकरणस्य दुर्लभत्वेऽपि वह्न्यभावाभावात्मकवह्निरूपभावस्वरूपाभावमादाय 'प्रतियोगिवैयधिकरण्यं' सुलभम्, अभावाधिकरणकाभावस्यैवाधिकरणस्वरूपतया वह्न्यभावाभावस्याभावत्वाभावेन पटाभावभेदादेस्तत्स्वरूपत्वासम्भवादित्याशङ्कते—**न चेति**। 'भावस्वरूपस्यै'वेत्यनेन वह्न्यधिकरणवृत्तिपटाभावस्य भेदादेर्वह्निस्वरूपत्वासम्भवः प्रदर्शितः, तत्समानाधिकरणत्वात् = वह्न्यभावासमानाधिकरणत्वात्, 'वह्न्यभावाभावस्ये'त्यनेनास्यान्वयः।

समाधत्ते—**तस्यापीति**। वह्न्यभावाभावस्य वह्नेरित्यर्थः। **स्वसमानाधिकरणेति**। स्वं = वह्निः, तत्समानाधिकरणं यदभावान्तरं घटाभावादिकं तद्भिन्नत्वात् = तद्भेदाधिकरणत्वादिति समुदितार्थः। नन्वेवं घटाभावादिभेदस्य वह्न्य-

[1] [ ] एतच्चिह्नान्तर्गतः पाठो लिखितप्रामाणिकपुस्तके नास्ति।

विवृतिः

भावा[ऽन्तर]भिन्नत्वात्, अभावमात्राधिकरणक इव अभावमात्रप्रतियोगिकोऽपि विशिष्टाभावाद्यनात्मकोऽभावोऽधिकरणभिन्नो नेष्यते, लाघवात् ।

अग्रे विवक्षणीयस्य साध्यताघटकसम्बन्धेन प्रतियोग्यसामानाधिकरण्यस्य 'वह्निमान् धूमादि'त्यादौ घटाद्यभावे सत्वान्न सर्वत्राप्रसिद्धिः,

विवृतिः

भावाभावे वह्नौ सत्त्वेऽपि कथं तस्य वह्निस्वरूपत्वमित्यत आह—**अभावाधिकरणक इवेति**। तथा च यथाऽभावाधिकरणकोऽभावः पटाभावभेदस्तदधिकरणाभावरूप एव न त्वतिरिक्तः, तथा विशिष्टाभावभिन्नोऽभावमात्रप्रतियोगिकोऽभावो यस्मिन्नधिकरणे वर्त्तते तदधिकरणरूप एव, न तु तदतिरिक्तः, अनन्ताभावस्वरूपत्वकल्पनापेक्षया तत्स्वरूपत्वकल्पनस्यैव लघुत्वात् । एवञ्च वह्न्यभावाभावे वह्नौ वर्त्तमानस्याभावमात्रप्रतियोगिकस्य घटाभावभेदस्य वह्निस्वरूपतया, वह्निस्वरूपाभावस्य यथा वह्न्यभावः प्रतियोगी, तथा घटाभावोऽपीति,—घटाभावाधिकरणे पर्वते वह्न्यभावाभावस्य वह्नेर्वर्त्तमानत्वात्प्रतियोगिवैयधिकरण्यं दुर्लभमिति समुदितार्थः ।

ननु सर्वत्र प्रतियोगिव्यधिकरणाभावस्याप्रसिद्धत्वसम्भवे कथं तस्य दुर्लभत्वोक्तिः सङ्गच्छत इत्यत आह—**अग्र इति** । तथा च पटाभावभेदस्य घटाभावस्वरूपत्वेऽपि 'वह्निमान्धूमा'दित्यत्र प्रतियोगिव्यधिकरणाभावस्य नाप्रसिद्धिः सम्भवति, साध्यतावच्छेदकीभूतसंयोगसम्बन्धेन प्रतियोग्यधिकरणावृत्त्यभावस्यैव प्रतियोगिव्यधिकरणतया 'घटाभावप्रतियोगि'पदेन पटाभावस्य धर्त्तुमशक्यत्वात्, संयोगसम्बन्धेन पटाभावस्याधिकरणाप्रसिद्धेः, किन्तु घट एव घटाभावप्रतियोगिपदेनोपादेयः, संयोगेन तदधिकरणे भूतलादौ घटाभावस्यावृत्तेर्घटाभावस्यैव प्रतियोगिव्यधिकरणत्वसम्भवादतः सर्वत्र प्रतियोगिव्यधिकरणाभावस्याप्रसिद्ध्यसम्भवेन दुर्लभत्वोक्तिः समीचीनैवेति समुदितार्थः ।

दीपिका

**(१) अभावमात्रप्रतियोगिकोऽपीति** । अत्र 'मात्र'पदं व्यर्थमिति नाशङ्कनीयम्, अत्यन्तपदोपादानेऽपि घटाभावस्य पटाभाव—वह्न्येतदुभयाभावस्वरूपतया तदभावप्रतियोगि—वह्न्यधिकरणे वर्त्तमानत्वेन प्रतियोगिवैयधिकरण्याभावाऽप्रसिद्ध्या 'वह्निमान् धूमा'दित्यादावव्याप्तितादवस्थ्यापत्तेः,—

नच 'विशिष्टाभावाद्यनात्मक' इत्यस्य वैयर्थ्यमिति वाच्यम्, 'अत्यन्त' पददानेऽपि घटाभावस्य घटाभावान्यत्वविशिष्ट—गगनाभावाभावस्वरूपतया घटाभावप्रतियोगितायास्तादृशगगनाभावेऽपि सत्त्वेन पुनः प्रतियोगिव्यधिकरणाभावाऽप्रसिद्धेः ।

दीधितिः

सर्वेषामेवाभावानां हेतुसमानाधिकरणात्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणाभावान्तरात्मकस्य स्वभेदस्य प्रतियोगित्वादभावसाध्यकाव्याप्तश्चेति” सम्प्रदायविदः।

जागदीशी

किन्तु स्वरूपसम्बन्धेनाभावस्य साध्यतायामेवेति सूचयितुमप्रसिद्धिमपहाय 'दुर्लभत्व'मुक्तम्।

'अत्यन्ताभावत्वनिरूपकप्रतियोगितानवच्छेदकत्व'विवक्षायाः फलमाह,—❀सर्वेषामेवेति❀। भावभेदस्यातिरिक्ततास्वीकारादाह,—❀अभावसाध्यकेति❀।—तथा च 'घटभिन्नं पटत्वादि'त्यादौ पटत्वसमानाधिकरणस्य

विवृतिः

नन्वेवं कुत्र प्रतियोगिव्यधिकरणाभावो दुर्लभ इत्याकाङ्क्षायामाह—किन्त्विति। स्वरूपसम्बन्धेनेति। तथा च 'धूमाभाववान् वह्न्यभावा'दित्यत्र प्रतियोगिव्यधिकरणाभावस्याप्रसिद्धिः, हेतुसमानाधिकरणघटत्वत्वाद्यभावादेः प्रतियोगित्वस्य तदात्मकपटाभावभेदप्रतियोगिनि पटाभावे सत्त्वात् तादृशपटाभावस्य स्वरूपेणाधिकरणे जलह्रदादौ घटत्वत्वाद्यभावस्य वृत्तेरिति तात्पर्यम्।

दीधितौ—सर्वेषामेवेति। साध्यीभूतानां यावतामभावानामित्यर्थः। अस्य 'प्रतियोगित्वा'दित्यग्रिमेणान्वयः। अभावान्तरात्मकस्य = साध्यीभूततत्तदभावभिन्नो यः प्रतियोगिव्यधिकरणोऽभावस्तदधिकरणकस्य, स्वभेदस्य = साध्यीभूततत्तदभावभेदस्य, तथा चाभावसाध्यकमात्र एव स्वरूपेणात्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणो यस्तत्तत्साध्यस्वरूपाभावभिन्नोऽभावः स एवाधिकरणं यस्यैवम्भूतो यस्तत्तदभावरूपसाध्यभेदः, तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादभावसाध्यकेऽव्याप्तिरिति समुदितार्थः।

निरुक्तार्थं संक्षेपादाह—अत्यन्ताभावत्वनिरूपकेति। ननु भावसाध्यकेऽप्यव्याप्तिः सम्भवति, वह्निभेदस्यापि घटाभावादौ सत्त्वेन घटाभावप्रतियोगिताया वह्नौ सत्त्वादित्यत आह—भावभेदस्येति। अतिरिक्तत्वस्वीकारादिति। सम्प्रदायविद्भिरिति शेषः। घटभिन्नमिति। तथा च 'घटभिन्नं पटत्वादि'त्यत्रात्यन्ताभावत्वनिरूपिका या गोत्वत्वाभावीयगोत्वत्वनिष्ठा प्रतियोगिता तदाश्रयाधिकरणावृत्तिगोत्वत्वाभावाधिकरणकघटभेदभेदस्य गोत्वत्वाभावरूपतया गोत्वत्वाभावप्रतियोगिताया घटभेदेऽपि सत्त्वात्, तत्प्रतियोगितावच्छेदकत्वस्य घटभेदत्वेऽनपायाद्भवत्यभावसाध्यकेऽव्याप्तिरिति तात्पर्यम्।

जागदीशी

निरुक्तप्रतियोग्यसमानाधिकरणगोत्वप्रकारकप्रमाविशेष्यत्वाद्यभावस्य घटभेदभिन्नत्वात्,—तादृशभेदस्य च गोत्वप्रकारकप्रमाविशेष्यत्वाद्यभावस्वरूपत्वात्तत्प्रतियोगितावच्छेदकमेव घटभेदत्वमित्यव्याप्तिरिति भावः[१]।

'सम्प्रदाय'इत्यस्वरसः,—तद्बीजन्तूक्तविवक्षायामपि सर्वेषां हेतुसमानाधिकरणात्यन्ताभावानामत्यन्ताभावत्वनिरूपकेण — पूर्वक्षणादिवृत्तित्व-

विवृतिः

सम्प्रदायविदां मतेऽस्वरसं प्रदर्शयति—**उक्तविवक्षायामिति**। 'अत्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरण्यादि'विवक्षायामपीत्यर्थः। **सर्वेषामिति**। तथा च घटाभावादिकमपि न प्रतियोगिव्यधिकरणं भवितुमर्हति, घटाभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्वरूपतया घटाभावनिरूपितात्यन्ताभावत्वनिरूपकप्रतियोगित्वं यथा घटे,—तथा पूर्वक्षणवृत्तित्वविशिष्टो यो घटाभावस्तदभावेऽपि, तस्याधिकरणे घटशून्ये देशे घटाभावस्य सत्त्वादत्यन्तपदोपादानेऽपि 'प्रतियोगिवैयधिकरण्यं' दुर्लभमेवेत्यवधेयम्।

ननु घटाभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावानतिरिक्तत्वेऽपि,—प्रतियोगिताया भिन्नतया यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणभिन्नं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमित्यस्यैव विवक्षणीयत्वे,—पूर्वक्षणवृत्तित्वविशिष्टघटाभावनिष्ठप्रतियोगिताया 'यादृशप्रतियोगिता'पदेन धर्तुमशक्यत्वात्, तदवच्छेदकपूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावत्वावच्छिन्नाधिकरणत्वस्य हेत्वधिकरणे पर्वतादौ सत्त्वाद्घटनिष्ठप्रतियोगिताया एव 'यादृशप्रतियोगिता'पदेन धर्त्तव्यतया न-

दीपिका

(२) **पूर्वक्षणवृत्तित्वविशिष्टेति**। नन्वेवं 'पूर्वक्षणवृत्तित्वविशिष्ट—घटाभावाभाववान् पटत्वा'दित्यत्र हेतुसमानाधिकरणघटाभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादव्याप्तिरिति चेन्न।

हेत्वधिकरणनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणीयत्वात्, घटाभावस्य पूर्वक्षणवृत्तित्वविशिष्ट—घटाभावाभावाऽभिन्नत्वेऽपि अभावत्वरूपानुयोगिताया भिन्नत्वेन घटाभावनिष्ठाऽनुयोगिताया एव पटनिष्ठाऽधिकरणतानिरूपकतावच्छेदकत्वात्।

---

[१] 'निरुक्तप्रतियोग्यसमानाधिकरणगोत्वाद्यभावस्य घटभेदाभिन्नत्वात्तादृशभेदस्य च गोत्वाद्यभावरूपत्वात्तत्प्रतियोगितावच्छेदकमेवे'त्यादिरीत्या काशी-कालिकाता-मुद्रितपाठः।

दीधितिः

**अथ यदा गोत्वं तदा गौरित्यत्रातिव्याप्तिः, प्रलयस्य गोध्वंसवत्त्वेन गवात्यन्ताभावानधिकरणत्वात् ।**

जागदीशी

विशिष्टस्वाभावात्मकेन प्रतियोगिना—समं सामानाधिकरण्यादभावसाध्यकाव्याप्तेस्तादवस्थ्यं,—

'यादृशप्रतियोगितावच्छेदकविशिष्टस्यानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकत्व'प्रवेशे तु, व्यर्थमेत्र 'अत्यन्त' पदमिति ध्येयम् ॥७॥

*गोध्वंसवत्त्वेनेति* ।—[प्राचीनमते] गवात्यन्ताभावस्य गोध्वंसविरोधित्वादित्याशयः ।

विवृतिः

प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरित्यत आह—**यादृशेति** । **व्यर्थमेवेति** । तथा च घटाभावाधिकरणकपटाभावभेदस्य घटाभावस्वरूपत्वेऽपि 'यादृशप्रतियोगिता'-पदेन घटनिष्ठप्रतियोगितैव धर्त्तव्या न तु पटाभावनिष्ठा, तदवच्छेदकपटाभावत्वावच्छिन्नाधिकरणताया हेत्वधिकरणे सत्त्वादित्यत्यन्तपदानुपादानेऽपि घटाभावस्यैव प्रतियोगिवैयधिकरण्यसम्भवादत्यन्तपदं निष्फलमिति भावः ॥७॥

दीधितौ—**यदा गोत्वमिति** । अत्र **'यदा' 'तदे'**त्यभिधानं कालिकसम्बन्धेन साध्य-हेतुत्वलाभाय ।

**अतिव्याप्तिरिति** । गोत्वस्य कालिकसम्बन्धेन महाप्रलये सत्त्वात्तत्र च जन्यभावपदार्थस्य गोरवृत्तित्वेन निरुक्तहेतोर्व्यभिचारित्वेनालक्ष्यत्वादतिव्याप्तिरिति भावः । अतिव्याप्तिं सङ्गमयति—**प्रलयस्येति** । ननु प्रलये गोध्वंससत्त्वेऽपि गवात्यन्ताभावस्य तत्रावृत्तौ को हेतुरित्यत आह—**गवात्यन्ताभावस्येति** । **विरोधित्वादिति** । गोर्गोध्वंसस्य, गोप्रागभावस्य च प्राचीनमते गवात्यन्ताभाव-

दीपिका

वस्तुतो हेत्वधिकरणवृत्तिप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विशेषणीयत्वान्न दोषः । वृत्तित्वं—स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठाऽवच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, स्वपदं प्रतियोगितापरं । तथा च निरुक्तसम्बन्धेन घटनिष्ठप्रतियोगिताया एव हेत्वाधिकरणे पटे वर्त्तमानतया तत्प्रतियोगितानवच्छेदकत्वस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावत्वे सत्त्वेनाव्याप्तिविरहादिति ध्येयम् ।

जागदीशी

न च दैशिकविशेषणतया यद्गोध्वंसस्याधिकरणं तत्रैव गवात्यन्ता-भावस्य विरोधात्, कालिकसम्बन्धेन गोध्वंसवत्यपि प्रलये,—तदत्यन्ता-भावसत्त्वे बाधकाभावान्नातिव्याप्तिरिति वाच्यम्; प्राचां मते भूतलादि-देशस्येव कालस्यापि दैशिकविशेषणतया गवादिध्वंसवत्त्वात् ।

अत एव त्वक्संयुक्तकाले विशेषणतया वायुस्पर्शनाशस्य ग्रहः[१] शब्दानित्यतायां मिश्रैरुक्तः ।

यद्यप्येवमपि नातिव्याप्तिसम्भवः,—कालिकसम्बन्धावच्छिन्नगवात्य-न्ताभावस्यैव प्रलये कालिकसम्बन्धेन वर्त्तमानत्वात्, ध्वंसादिमति दैशिक-

विवृतिः

प्रतियोगितया, प्रतियोग्यधिकरणतया सार्धमत्यन्ताभावस्यैकत्रानवस्थाननियमा-दित्याशयः ।

ननु स्वरूपसम्बन्धेन ध्वंसस्य प्रतियोगिसमवायिदेशे सत्त्वनियमात्प्रलये गो-ध्वंसवत्त्वमवश्यं कालिकसम्बन्धेन वक्तव्यं, प्रलयस्य गोध्वंसप्रतियोगिनां गवां समवायित्वाभावात्,—एवञ्च स्वरूपेण ध्वंसाधिकरणता यत्र तत्रैवात्यन्ताभावस्य प्राचीनैरनभ्युपगमात्,—कालिकेन गोध्वंसवति प्रलये गवात्यन्ताभावसत्त्वस्य निराबा-धतया गवात्यन्ताभावरूपसाध्याभावस्य लक्षणघटकत्वेन कुतः,—कालो गोमान् गोत्वादित्यत्रातिव्याप्तिरिति शङ्कते—**न चेति** ।

समाधत्ते—**प्राचामिति** । कालस्य = महाप्रलयस्य, **गवादिध्वंसवत्त्वा-दिति** । न केवलं प्रतियोगिसमवायिदेशस्यैव स्वरूपेण ध्वंसवत्त्वमपि तु भूतलादि-देशस्येव महाप्रलयस्यापि गवादिध्वंसवत्त्वं प्राचीनमतसिद्धमित्याशयः । कालेऽपि स्वरूपसम्बन्धेन ध्वंससत्त्वे मिश्रग्रन्थसंवादमाह—**अत एवेति** । विशेषणतया = स्वरूपसम्बन्धेन, ग्रहः = प्रत्यक्षम्, अन्यथा कालस्य स्पर्शसमवायित्वाभावेन स्वरूपेण काले वायुस्पर्शनाशस्य प्रत्यक्षमेव न स्यादिति भावः ।

ननु स्वरूपेण गोध्वंसस्य प्रलयवृत्तित्वे स्वरूपसम्बन्धेनैव साध्याभावस्य—गवा-त्यन्ताभावस्य—प्रलयावृत्तित्वं सम्भवति, कालिकेन तस्य प्रलयवृत्तौ बाधकाभावः, स्वरूपसम्बन्धेन ध्वंसाधिकरणताया एव स्वरूपेणात्यन्ताभावविरोधित्वादिति,—हेत्वधिकरणे प्रलये कालिकेन वर्त्तमानस्य गवात्यन्ताभावस्य प्रतियोगितावच्छेदक-तायाः साध्यतावच्छेदके गोत्वे सत्त्वात्कुतोऽतिव्याप्तिरित्याक्षिपति,—**यद्यपीति** ।

१. 'साक्षात्कार' इति क्वचित्पाठः ।

दीधितिः

## संसर्गाभावमात्रोक्तावपि,—

जागदीशी

[विशेषणता] सम्बन्धेनैवात्यन्ताभावानभ्युपगमात्, तथाऽपि प्रतियोगि-वैयधिकरण्याघटितस्य व्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्यावश्यं दैशिक-विशेषणतया[ऽभावे] हेतुसामानाधिकरण्यघटितत्वात्तस्यैवातिव्याप्तिर्बोध्या।

न च कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्य दैशिक[विशेषणता] सम्बन्धेन हेतुमन्निष्ठा[ऽत्यन्ता]भावस्याप्रसिद्ध्या तथाऽपि नातिव्याप्तिरिति वाच्यम्; सृष्टिकालवृत्तित्वादिविशिष्टगोत्वादेरत्यन्ताभावस्यैव तादृशस्य प्रसिद्धत्वादिति भावः।

मिश्रमतं निरसितुमाह,—*संसर्गाभावेति*।—'अत्यन्ताभावपदेनेत्यादिः।

विवृतिः

उत्तरयति—**तथापीति** । दैशिकविशेषणतया = स्वरूपसम्बन्धेन, हेतु-सामानाधिकरण्यघटितत्वात् = हेत्वधिकरणवृत्तित्वघटितत्वात्, **तस्येति** । व्याप्य-वृत्तिसाध्यकस्थलीयलक्षणस्येत्यर्थः। **अतिव्याप्तिरिति** । स्वरूपसम्बन्धेन हेत्व-धिकरणप्रलयवृत्त्यभावपदेन — साध्याभावस्य—गवात्यन्ताभावस्य धर्त्तुमशक्यत्वा-दभावान्तरमादायातिव्याप्तिरित्यर्थः।

**न चेति** । 'वाच्य'मित्यग्रेतनेनान्वयः, **नातिव्याप्तिरिति** । सर्वस्यैव घट-पटादिध्वंसस्य प्रलयवृत्तित्वेन कालिकसम्बन्धेन कस्याप्यभावस्य स्वरूपेण हेत्व-धिकरणीभूतप्रलयावृत्तित्वादभावाप्रसिद्ध्या नातिव्याप्तिरित्यभिप्रायः।

गोत्वस्य नित्यतया ध्वंसाप्रसिद्ध्या सृष्टिकालवृत्तित्वविशिष्टगोत्वस्य सृष्टिकाल एव सत्त्वेन तदभावस्य प्रलयवृत्तित्वे बाधकाभावात् नाभावाप्रसिद्ध्याऽतिव्याप्ति-वारणमित्याशयेन समाधत्ते—**सृष्टिकालेति** । तादृशस्य = कालिकसम्बन्धा-वच्छिन्नप्रतियोगिताकस्य, **अत्यन्तपदेनेति** । मूलोक्तात्यन्तपदेनेत्यर्थः। नन्व-

दीपिका

**सृष्टिकालवृत्तित्वेति**। ननु 'गोमान् गोत्वादि'त्यत्र सृष्टिकालवृत्तित्वविशिष्ट-गोत्वाभावस्य निरवच्छिन्नावच्छेदकताकप्रतियोगिताकत्वाभावेन कथं लक्षणघटकत्वं सम्भवतीति चेन्न। 'निरवच्छिन्नावच्छेदकताकप्रतियोगिता' पदेन साध्यतावच्छेदक-निष्ठकिञ्चिदवच्छिन्नावच्छेदकत्वानिरूपितप्रतियोगिताया एव विवक्षणीयत्वात्, उक्त गोत्वाभावस्य तादृशप्रतियोगिताकतया लक्षणघटकत्वसम्भवात्।

जागदीशी

तथा च प्रलये गोत्वावच्छिन्नध्वंसवत्त्वादेव नातिव्याप्तिरिति भावः। न च गोध्वंसस्य गोत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारेऽपि [ ध्वंस–प्रागभावादेः प्रतियोगितावच्छेदकसम्बन्धास्वीकारेण[1]] साध्यतावच्छेदकीभूतकालिकविशेषणता[2]वच्छिन्नप्रतियोगिताकत्वविरहात्,—कुतस्तमादायातिव्याप्तिव्युदास इति वाच्यं, साध्यतावच्छेदकसम्बन्धान्यसम्बन्धानवच्छिन्नस्यैव हेतुसमानाधिकरणाभावप्रतियोगित्वस्य लक्षणे प्रवेशनीयत्वात्, [ तावतैव समवायाद्यवच्छिन्नवह्न्याद्यभावमादायाव्याप्तेर्वारणात्,[3] ] तस्य च ध्वंसप्रतियोगितासाधारण्यादिति भावः।

विवृतिः

त्यन्तपदेन संसर्गाभावनिवेशेऽपि कथमतिव्याप्तिवारणमित्यतो भावमाह—**तथा चेति**। प्रलये = गोत्वरूपहेतोरधिकरणे, **ध्वंसवत्त्वादेवेति**। गोस्वरूपसाध्यस्य ध्वंसात्मकसंसर्गाभावसत्त्वादित्यर्थः। **नातिव्याप्तिरिति**। साध्यसंसर्गाभावस्य लक्षणघटकत्वादित्याशयः।

**न चेति**। 'वाच्यमि'त्यग्रेणान्वयः। **स्वीकारेऽपीति**। अन्यथा गोध्वंसप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके गोत्वेऽसत्त्वात् संसर्गाभावनिवेशेप्यतिव्याप्तिरस्त्येवेति भावः। **साध्यतावच्छेदकीभूतेति**। समवायेन वह्न्यभावमादाय 'वह्निमान्धूमा'दित्यत्राव्याप्तिवारणाय लक्षणस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताघटितत्वादित्याशयः। **अतिव्याप्तीति**। उक्तगोध्वंसस्य लक्षणाघटकत्वात्सृष्टिकालवृत्तित्वविशिष्टगोत्वाभावमादायैवोक्तातिव्याप्तेरवस्थानादिति हृदयम्।

हेतुसमानाधिकरणसाध्यतावच्छेदकसंसर्गातिरिक्तसम्बन्धानवच्छिन्नप्रतियोगिताया एव 'साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिता'पदेन विवक्षणीयतया समवायेन वह्निनिष्ठप्रतियोगितायाः साध्यतावच्छेदकसंयोगातिरिक्तसमवायावच्छिन्नतया लक्षणाघटकत्वेन 'वह्निमान्धूमा'दित्यत्राव्याप्तिवारणसम्भवः,

एवं सति—ध्वंसीयप्रतियोगितायाः सम्बन्धानवच्छिन्नत्वेन साध्यतावच्छेदकीभूतकालिकसंसर्गातिरिक्तसंसर्गानवच्छिन्नत्वस्याक्षततया गोध्वंसमादायैव 'कालो गोमान् गोत्वा'दित्यत्रातिव्याप्तिवारणं सम्भवतीत्याशयेन समाधत्ते—**साध्यतावच्छेदकेति**। **तस्य चेति**। साध्यतावच्छेदकसंसर्गातिरिक्तसम्बन्धानवच्छिन्नत्वस्येत्यर्थः, **ध्वंसप्रतियोगितेति**। ध्वंसप्रतियोगितायाः सम्बन्धानवच्छिन्नत्वेन सुतरां तथेत्याशयः।

---

१, ३. अयं पाठो लिखितपुस्तके नास्ति। २. 'सम्बन्धावच्छिन्ने'ति लिखितपुस्तकपाठः।

दीधितिः

## 'यदा स्पन्दस्तदा द्व्यणुकम् ,'–

जागदीशी

❀यदा स्पन्द इति❀ । स्पन्दवति खण्डप्रलये सर्गान्तरीयद्व्यणुकप्रागभाववत्त्वेन द्व्यणुकत्वावच्छिन्नध्वंसविरहादतिव्याप्तिः । [ न च खण्डप्रलये स्पन्दसत्त्वे मानाभावः, 'ब्रह्मणो वर्षशतमायु'रित्यागमप्रसिद्धेरेव मानत्वात् , न हि रविक्रियां विना क्षणमुहूर्त्तादिघटितस्य वर्षस्य सम्भव इति¹ । ] ।

ननु महाप्रलयपूर्वतृतीयक्षणे द्व्यणुकत्वावच्छिन्नध्वंससत्त्वान्नातिव्याप्तिः,

विवृतिः

ननु 'द्व्यणुकवान् स्पन्दा'दित्यत्र 'हेतुसमानाधिकरणसंसर्गाभाव'निवेशेऽपि कथमतिव्याप्तिः सम्भवति, द्व्यणुकत्वावच्छिन्नध्वंसस्य हेत्वधिकरणे खण्डप्रलये सत्त्वादित्यत आह—**स्पन्दवतीति । सर्गान्तरीयेति ।** तथा च सृष्ट्यन्तरीयद्व्यणुकप्रागभावसत्त्वे द्व्यणुकत्वावच्छिन्नस्य ध्वंसः खण्डप्रलये न सम्भवति, कस्यचिद्द्व्यणुकस्य ध्वंससत्त्वे च न द्व्यणुकत्वावच्छिन्नस्य प्रागभावः, ध्वंस-प्रागभावयोः सत्त्वे च, न द्व्यणुकत्वावच्छिन्नात्यन्ताभाव इति, साध्यस्य संसर्गाभावो न हेतुसमानाधिकरणः, किन्तु सृष्टिकालवृत्तित्वविशिष्टगोत्वाभाव एव तथा, तत्प्रतियोगितानवच्छेदकत्वस्य द्व्यणुकत्वरूपे साध्यतावच्छेदके सत्त्वाद्भवत्यतिव्याप्तिरित्याशयः।

ननु खण्डप्रलये स्पन्दात्मकक्रियाया असत्त्वान्निरुक्तस्पन्दहेतोः सद्धेतुत्वमेव, सृष्टिकाले स्पन्दाधिकरणे द्व्यणुकस्य सत्त्वादित्यतः खण्डप्रलये क्रियासत्त्वे प्रमाणं दर्शयति—**न चेति ।** यदि खण्डप्रलये क्रियैव न स्यात्तदा ब्रह्मणः शतवर्षजीवित्वव्यवहारो न स्यात्, शतवर्षरूपकालस्य क्षण-मुहूर्त्तादिघटिततया क्रियाविरहे क्षणादेर्वक्तुमशक्यत्वादिति भावः ।

'जन्यज्ञानवानदृष्टा'दिति स्थलान्तरानुसरणे बीजमाह—**नन्विति ।** महाप्रलयपूर्वतृतीयक्षणे = द्व्यणुकनाश–परमाणूत्तरसंयोगयोरुत्पत्तिक्षणे ।

दीपिका

ननु कस्तावन्महाप्रलयः ?—उच्यते—अदृष्टसध्रीचीनैः कालानल-झञ्झानिलादिभिः स्थूलेऽखिले जगति विलोपिते, त्रसरेणुनाशार्थं (१) प्रथमक्षणे परमाणुक्रियोत्पद्यते, (२) क्रियातो विभागः (३) विभागात्पूर्वसंयोगनाशः (४) तत उत्तरदेश [ त्रसरेणु ] संयोगो, द्व्यणुकत्वावच्छिन्नध्वंसश्च, (५) ततः क्रियानाशस्त्रसरेणुनाशश्च, (६) ततः षष्ठक्षणे आश्रय [ त्रसरेणु ] नाशादेवोत्तरसंयोगनाशः, स एव षष्ठः क्षणो निखिलजन्यानाधारभूतो 'महाप्रलय' इत्युच्यतेऽभियुक्तैरिति ।

---

१. न चेत्यारभ्य—इत्येतदन्तः [ ] मध्यस्थः पाठो हस्तलिखितपुस्तके नोपलभ्यते ।

दीधितिः

**'यदाऽदृष्टं-तदा जन्यं ज्ञानं, दुःखं वा,'—**

जागदीशी

तदानीमपि चरमद्व्यणुकनाशानुगुणस्य परमाणुस्पन्दस्य सत्त्वात्,

तत्कालोत्पन्नपरमाणूत्तरसंयोगेन प्रलयपूर्वक्षण एव पश्चात्तस्य विनाश्यत्वात्,

तादृशपरमाणूत्तरसंयोगस्य [च] कार्यद्रव्येण सहैव स्वीकारान्न नित्यत्वम्, आश्रयनाशादेव तन्नाशसम्भवादित्यत आह,—❀ यदाऽदृष्टमिति ❀ ।

केचित्तु—"स्वमते द्व्यणुकस्यासत्त्वात्,—स्पन्दस्य च खण्डप्रलये वृत्तौ बलवत्तरप्रमाणाभावाद्, 'यदाऽदृष्ट'मित्युक्तम्" इत्याहुः—तच्चिन्त्यम् ।

नित्यज्ञानमादाय सद्धेतुतावारणाय,—❀जन्यमिति❀ । नित्यसुखाभिव्यक्तेर्मुक्तित्वमते[1] सद्धेतुत्वमाशंक्य साध्यान्तरमाह,—❀ दुःखं वेति ❀ ।

विवृतिः

ननु महाप्रलयपूर्वतृतीयक्षणे स्पन्दरूपक्रियासत्त्वे किं मानमित्यत आह—**तदानीमपीति** । तादृशतृतीयक्षणेऽपीत्यर्थः । चरमद्व्यणुकनाशानुगुणस्य = अन्तिमद्व्यणुकनाशप्रयोजकस्य, परमाणुस्पन्दस्य = परमाणुक्रियायाः, **तत्कालोत्पन्नेति** । महाप्रलयपूर्वतृतीयक्षणोत्पन्नेत्यर्थः । **परमाणूत्तरसंयोगे-नेत्यस्य**—'**विनाश्यत्वा**'दित्यनेनान्वयः । पश्चात् = परमाणूत्तरसंयोगोत्तरकाले, तस्य = स्पन्दस्य, एतावता,—निरुक्त-स्पन्दरूपहेतोर्द्व्यणुकनाशक्षणे सत्त्वं, तदुत्तरक्षणे च विनाश इति,—सूचितम् । कार्यद्रव्येन = त्रसरेणुना, आश्रयनाशात् = त्रसरेणुनाशात्, तन्नाशसम्भवात् = परमाणूत्तरसंयोगनाशसम्भवात् ।

**केचित्त्विति** । स्वमते = दीधितिकारमते ।

**तच्चिन्त्यमिति** । चिन्ताबीजन्तु—'ब्रह्मणो वर्षशतमायु'रित्यागमस्यैव खण्डप्रलये क्रियासत्त्वे बलवत्तरप्रमाणस्य सद्भाव इति ।

**सद्धेतुवारणायेति** । तथा च प्रलये हेतुमति नित्यज्ञानरूपसाध्यस्य सत्त्वेन सद्धेतुतया तद्वारणप्रयासोऽनुचित इति भावः ।

**नित्यसुखेति** । नित्यं यत्सुखं तस्य याऽभिव्यक्तिर्ज्ञानं तस्य 'मुक्तित्व'मत इत्यर्थः । सुखस्य नित्यत्वे विवादान्मत इत्युक्तम् । **दुःखं वेतीति** । 'दुःखवानदृष्टा'दित्यत्रैवातिव्याप्तिरित्यर्थः ।

---

[1]. 'मोक्षत्वमते' इति क्वचित्पाठः ।

दीधितिः

'यदा तस्याऽदृष्टं—तदा तदीयं ज्ञान'मित्यादावतिव्याप्तिः;

जागदीशी

ननु कार्य्यमात्रं प्रत्यदृष्टस्य हेतुत्वात् प्रलयप्राक्क्षणेऽपि तस्य सत्त्वं, तथा च तदानीमपि दुःखत्वावच्छिन्नध्वंससत्त्वान्नातिव्याप्तिः, दुःखादेः स्वसाक्षात्कारनाश्यतया तदानीमसम्भवात्, [उत्तरक्षणे साक्षात्कारासम्भवात्, अविदिते प्रमाणाभावात्[1]]

किञ्च निखिलब्रह्माण्डानां युगपत् प्रलयानभ्युपगमेन ब्रह्माण्डान्तरवर्त्तिदुःखमादाय सद्धेतुरेवायमत आह,—*यदा तस्येति*। अत्र च तदीय-

विवृतिः

**नन्विति ।** कार्यमात्रं प्रति = कार्यत्वावच्छिन्नं प्रति, तस्य = अदृष्टस्य, **नातिव्याप्तिरिति ।** हेतुमति महाप्रलयपूर्वक्षणे दुःखरूपसाध्यस्य संसर्गाभावसत्त्वान्नातिव्याप्तिरित्यर्थः ।

ननु महाप्रलयपूर्वक्षणे दुःखासत्त्वे किं बीजमित्यत आह—**दुःखादेरिति । स्वसाक्षात्कारेति ।** स्वं = दुःखं, तस्य साक्षात्कारः = प्रत्यक्षं, तेन नाश्यतयेत्यर्थः । तदानीं = प्रलयपूर्वक्षणे, **असम्भवादिति ।** योग्यविभुवृत्तिविशेषगुणानां स्वोत्तरगुणनाश्यत्वनियमान्महाप्रलयपूर्वक्षणाद्बहुपूर्वक्षण एव दुःखसाक्षात्कारस्योत्पन्नतया, तेन तदुत्तरकाले दुःखनाशे महाप्रलयपूर्वक्षणेऽपि दुःखनाशस्य सत्त्वेन, तदानीं दुःखसद्भावो न सम्भवतीत्याशयः ।

महाप्रलयस्य प्रामाणिकत्व एव तादृशदुःखध्वंसमादायातिव्याप्तिवारणम्, अन्यथा तु निरुक्तादृष्टरूपहेतोः सद्धेतुत्वमेवेत्याशयेनाह—**किञ्चेति । सद्धेतुरेवायमिति ।** तथा च तद्वारणप्रयासोऽनुचित एवेति भावः ।

'तदीयज्ञानवान् तदीयादृष्टा'दित्यत्र हेतोर्व्यभिचारित्वं स्फुटीकरोति—**अत्र चेति ।** तदीयसुषुप्त्यादिसमये = अदृष्टरूपहेतुमति तत्काले, तथा च सुषुप्तिकाले यत्किञ्चित्तदीयज्ञानस्य प्रागभावसत्त्वे न तदीयज्ञानसामान्यध्वंसः, तदीयज्ञानध्वंससत्त्वे च न तदीयज्ञानसामान्यप्रागभावः, ध्वंस-प्रागभावयोः सत्त्वे च,—न ज्ञानसामान्यात्यन्ताभाव इति,—सृष्टिकालवृत्तित्वविशिष्टगोत्वाभावमादाय 'हेतु-

१. [ ] एतदन्तर्गतः पाठो लिखितपुस्तके नास्ति ।

दीधितिः

द्व्यणुकत्वादेर्द्व्यणुकादिशून्यखण्डप्रलयादिनिष्ठध्वंस-प्रागभाव-प्रतियोगितानवच्छेदकत्वात्,

न हि "तयोः सामान्याभावत्व"वादिमतेऽपि,—एकविशेष-प्रागभावविशेषान्तरध्वंसवत्यपि समये सामान्यावच्छिन्नध्वंस-प्राग-भावयोः,—सम्भव इति चेन्न,

जागदीशी

सुषुप्त्यादिसमये तदीयज्ञानविरहाद्व्यभिचारः स्फुट एव। ❀ द्व्यणुकत्वादे-रिति❀।—खण्डप्रलये केषाञ्चिद्ध्वंसस्य[1] केषाञ्चित् प्रागभावस्य सत्त्वात् द्व्यणुकत्वस्य तत्प्रतियोगितातिरिक्तवृत्तित्वेनानवच्छेदकत्वादित्यर्थः। [ ननु द्व्यणुकत्वावच्छिन्नानधिकरणकालवृत्तित्वविशिष्टस्यैव तत्तद्ध्वंसस्य प्रति-योगितावच्छेदकमेव द्व्यणुकत्वम्, अवच्छेदकत्वञ्चान्यूनवृत्तित्वमेवेत्यत आह—]❀न हीति❀।

ननु ध्वंसादिप्रतियोगितायां गोत्वादिधर्मावच्छिन्नत्वे मानाभावः,

विवृतिः

समानाधिकरणसंसर्गाभाव'निवेशेऽपि भवत्यतिव्याप्तिरिति तात्पर्यम्। **केषा-ञ्चिदिति**। तत्तद्द्व्यणुकादीनामित्यर्थः। एवमग्रेऽपि। **द्व्यणुकत्वस्येति**। तत्तद्द्व्यणुकादिध्वंसप्रतियोगित्वाभाववति द्व्यणुकान्तरे द्व्यणुकत्वादेः सत्त्वेन, द्व्यणुकत्वादिकं न हेतुमन्निष्ठाभावप्रतियोगित्वानतिरिक्तवृत्तित्वरूपावच्छेदकतावदिति भवत्यतिव्याप्तिरित्याशयः। यद्धर्मावच्छिन्नाभावो न हेतुसमानाधिकरणस्तद्धर्मस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वं न घटत इत्याह **दीधितौ—न हीति**। तयोः = ध्वंस-प्रागभावयोः, **सामान्याभावत्वेति**। सामान्यधर्मा-वच्छिन्नप्रतियोगिताकत्वमतेपीत्यर्थः। **एकविशेषेति**। तत्तद्व्यक्तिप्रागभावव्य-क्त्यन्तरध्वंसाधिकरणेऽपि खण्डप्रलय इत्यर्थः। **सामान्येति**। द्व्यणुकत्वादि-सामान्यधर्मावच्छिन्नप्रतियोगिताकध्वंस-प्रागभावयोरित्यर्थः।

**'मतेऽपि'**त्युक्तेः प्रयोजनं दर्शयति—**ध्वंसादीति**। गोत्वादिधर्मा-वच्छिन्नत्वे = गोत्वादिसामान्यधर्मावच्छिन्नत्वे, ननु'गौर्नष्टे'ति प्रतीतिबलादेव गोत्वा-

१. 'ध्वंसाना'मिति लिखितपुस्तके पाठः।

जागदीशी

'गौर्नष्टा' इत्यादिप्रतीतेर्गोप्रतियोगिकध्वंसाद्यवगाहितयाऽप्युपपत्ते[१]; बाधनिश्चयादिप्रतिबन्धकत्वाद्यनुरोधेनैव भेदात्यन्ताभावयोर्गोत्वाद्यवच्छिन्नप्रतियोगिताकत्वोपगमात्।

न चैवं [अपि] तद्गोत्वावच्छिन्नवत्ताबुद्धिं प्रति तद्गोत्वावच्छिन्नाभाववत्तानिश्चयत्वेन विरोधितया,—तद्गवात्यन्ताभावस्येव तद्गोध्वंसस्यापि तद्गोत्वावच्छिन्नप्रतियोगिताकत्वमावश्यकमिति वाच्यम्; एकसम्बन्धेन तद्गवात्यन्ताभावग्रहेऽपि सम्बन्धान्तरेण तद्गोमत्ताबुद्ध्युत्पादात्,-सम्बन्धविशेषमन्तर्भाव्यैवात्यन्ताभावग्रहस्य प्रतिबन्धकतया ध्वंसवत्ताग्रहसाधारण्यासम्भवा-

विवृतिः

दिसामान्यधर्मावच्छिन्नप्रतियोगिताकध्वंसोऽङ्गीकर्त्तव्य इत्यत आह—गौर्नष्टेति। तथा च 'गौर्नष्टे'ति प्रतीतिर्गोप्रतियोगिकध्वंसमात्रमवगाहते, न तु गोत्वावच्छिन्नप्रतियोगिताकध्वंसमित्यर्थः। ननु 'गौर्नास्ति' 'गौर्ने'त्यादिप्रतीतिरपि गोप्रतियोगिकात्यन्ताभावं गोप्रतियोगिकान्योन्याभावञ्चावगाहतां न तु सामान्यधर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावान्योन्याभावावित्यत आह—बाधनिश्चयेति। तथा च 'गोमानि'त्याकारकबुद्धौ गोप्रतियोगिकात्यन्ताभावस्य प्रतिबन्धकत्वे गो-घटोभयाभावनिश्चयस्यापि गोप्रतियोगिकाभावावगाहितया प्रतिबन्धकत्वापत्तेः।

एवं 'गोत्ववा'निति बुद्धौ गोप्रतियोगिकभेदनिश्चयस्य प्रतिबन्धकत्वे गो—घटोभयभेदस्यापि तथात्वापत्तिः स्यादतो 'गोमानि'त्याकारकबुद्धौ गोत्वरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावनिश्चयत्वेन,-गोत्ववत्ताबुद्धौ च गोत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वनिश्चयत्वेन प्रतिबन्धकत्वस्यावश्यकतया भेदात्यन्ताभावयोः प्रतियोगितायां सामान्यधर्मावच्छिन्नत्वं सर्ववादिसिद्धमिति समुदितार्थः।

ननु तद्गोमत्ताबुद्धौ तद्गोत्वावच्छिन्नप्रतियोगिताकाभावनिश्चयत्वेन प्रतिबन्धकतायाः प्रदर्शिततया,—तादृशगोत्वावच्छिन्नप्रतियोगिताकाभावत्वस्य ध्वंसादिसाधारणत्वाद् ध्वंसादिप्रतियोगिताऽपि बाधनिश्चयादिप्रतिबन्धकत्वाद्यनुरोधेन सामान्यधर्मावच्छिन्नाऽवश्यं स्वीकर्त्तव्येति शङ्कते,-न चेति। एवं = निरुक्तरीत्याऽत्यन्ताभावान्योन्याभावप्रतियोगितायां सामान्यधर्मावच्छिन्नत्वसिद्धौ।

समाधत्ते—एकसम्बन्धेनेति। अयम्भावः—'संयोगेन गोमानि'ति बुद्धौ संयोगावच्छिन्नगोत्वावच्छिन्नप्रतियोगिताकाभावनिश्चयस्यैव प्रतिबन्धकत्वमवश्यं

१ 'ध्वंसमादायैवोपपत्तेः' इति प्राचीनलिखितपुस्तकपाठः।

दीधितिः

**प्रतियोगिमत इव ध्वंसादिमतोऽपि कालस्यात्यन्ताभाववत्त्वेऽविरोधात्,**

**अन्यथाऽत्यन्ताभावस्य कालमात्रावृत्तित्वप्रसङ्गात् ॥८॥**

जागदीशी

'दित्याशयेनाह,—❀मतेऽपीति❀ [शि०पृ०१०१]। ननु 'प्रतियोगिमत इवे'त्यप्रसिद्धं, तत्राप्यत्यन्ताभावानुपगमादत आह,—❀अन्यथेति❀। [गवात्यन्ताभावासत्त्व इत्यर्थः]। ❀अत्यन्ताभावस्येति❀।—गोत्वादिना गवादेरत्यन्ताभावस्येत्यर्थः, तेन गगना[द्य]भावस्य,—गोविशिष्टगोत्वाद्यभावस्य वा,—प्रलयवृत्तित्वेऽपि न क्षतिः। ❀कालमात्रेति❀।—तत्र गवात्यन्ताभावस्य

विवृतिः

वक्तव्यं, न तु समवायावच्छिन्नप्रतियोगिताकगवात्यन्ताभावनिश्चयस्य तथात्वं, तादृशाभाववति भूतलादौ संयोगेन गवादेः सत्त्वादिति,—ध्वंसीयप्रतियोगितायाः सम्बन्धानवच्छिन्नत्वस्य सर्ववादिसिद्धतया सम्बन्धविशेषावच्छिन्नगोत्वावच्छिन्नप्रतियोगिताकाभावत्वस्य ध्वंससाधारण्यविरहेण निरुक्तरूपेण प्रतिबन्धकत्वकल्पनानुरोधान्न ध्वंसीयप्रतियोगितायां सामान्यधर्मावच्छिन्नत्वं सम्भवतीति।

दीधितौ—'अथे'त्यादिपूर्वपक्षस्य 'ने'त्यादिनोत्तरं। प्रतियोगिमतः = प्रतियोग्यधिकरणस्य, ध्वंसादिमतोऽपि=ध्वंसाद्यधिकरणस्यापि, **अविरोधादिति**। ध्वंसेन सार्धमत्यन्ताभावस्य विरोधित्वे मानाभावादित्यर्थः।

'अन्यथे'त्यादिना दोषदानस्य प्रयोजनमाह—**नन्विति**। तत्रापि = प्रतियोग्यधिकरणेऽपि, 'अन्यथा' पदार्थं व्याचष्टे—**गवात्यन्ताभावेति**। ध्वंसाधिकरणे काले गवात्यन्ताभावासत्त्व इत्यर्थः।

तेन = 'अत्यन्ताभाव'पदस्य गोत्वादिना गवात्यन्ताभावस्येत्यर्थकरणेन, यथाश्रुतेऽत्यन्ताभावमात्रस्य कालमात्रावृत्तित्वं न सम्भवति, गगनाभावस्याधेयतया गोविशिष्टगोत्वाभावस्य च प्रलयवृत्तित्वे बाधकाभावात्,—गोत्वादेर्गगनादेश्च ध्वंसाप्रसिद्ध्या प्रलये तद्ध्वंसवत्त्वस्य वक्तुमशक्यत्वादित्याह—**गगनाद्यभावस्येति**। न क्षतिः = न ग्रन्थासङ्गतिः, **कालमात्रेतीति**। ध्वंसादिमति प्रलयादिकालमात्र

१. 'ध्वंसत्वस्याभावत्वाघटितत्वेन तदवगाहिबुद्धेरत्यन्ताभावसाधारण्यायोगाच्चे'त्यधिकः पाठः काशीमुद्रिते दृश्यते।

दीधितिः

**इयांस्तु विशेषो,—यदेकस्य देशभेदावच्छिन्नं तथात्वमपरस्य तु स्वरूपावच्छिन्नमिति,—देशे कालस्येव, कालेऽपि,—देशस्यावच्छेद-**

जागदीशी

दैशिकविशेषणतया कालमात्रावृत्तित्वं प्राच्यैरिष्यत एव, सदातनत्व-व्यवहारस्य कालिकविशेषणतयैव सम्भवादिति तु विभावनीयम् ॥८॥

ननु प्रतियोगिमत्यपि काले तदत्यन्ताभावसत्त्वे,—गवाद्यवच्छेदेन 'इदानीं गोत्वं नास्ती'त्यपि प्रतीतिः कथं न स्यादत आह,—❀इयांस्त्विति❀ । —एकस्य = प्रतियोगिमतः कालस्य, देशभेदः, = प्रतियोग्यनधिकरणदेशः । तथात्वम् = अत्यन्ताभाववत्त्वम् ।❀ [1]अपरस्य❀ । ध्वंसादिमतः कालस्य, । ❀स्वरूपावच्छिन्नमिति❀ । [यस्य यद्रूपमधिकरणतावच्छेदकं तदवच्छिन्नं, तथा च] निरवच्छिन्नमित्यर्थः, 'तथात्व'मिति पूर्वेणान्वयः ।

ननु,—'इदानीमश्वे न गोत्व'मित्यादिप्रतीतेः कालवृत्तितयाऽश्ववृत्तितया च गोत्वाभावावगाहितयैवोपपत्तौ देशस्य कालवृत्तितावच्छेदकत्वे मानाभाव,—इत्यत आह,—❀देश इति❀ ।—इवार्थः सादृश्यं, तच्चानुभूय-

विवृतिः

इत्यर्थः । ननु गवात्यन्ताभावादेः कालमात्रावृत्तित्वं प्राचीनानुमतं चेत्तर्हि "अत्यन्ताभावः सर्वकालवृत्तिः" इति व्यवहारो न स्यादित्यत आह—**सदातनत्वेति** । कालिकविशेषणतया = कालिकसम्बन्धेन, **सम्भवादितीति** । तथा च सर्वकालवृत्तित्वव्यवहारः कालिकसम्बन्धेनैव भवति, न तु स्वरूपसम्बन्धेनेति भावः ॥८॥

'इयांस्त्वि'त्याद्यभिधानप्रयोजनमाह—**नन्विति** । प्रतियोगिविशिष्टेऽपि = प्रतियोग्यधिकरणेऽपि, तदत्यन्ताभावसत्त्वे = प्रतियोग्यभावसत्त्वे, **निरवच्छिन्नमिति** । देशकालाद्यनवच्छिन्नमित्यर्थः । **नन्विति** । **कालवृत्तितयेति** । एतत्कालवृत्त्य-

दीपिका

**विभावनीयमिति** । भावनाबीजन्तु—'इदानीं गौर्नास्ती'ति बुद्धेः सकलानुभवसिद्धाया अपलापापत्तिरेवेति ध्येयम्, न च कालिकेन तादृशाभाववत्त्वं तादृशप्रतीतेर्विषयो, न दैशिकेनेति वाच्यम् । तद्गोः सत्त्वदशायामपि 'इदानीं तद्गौर्नास्ती'ति प्रत्ययापत्तेर्दुर्वारत्वापत्तेः ।

१. 'अपरस्येति । ध्वंसादिमतः कालस्येत्यर्थ' इति काशी–कलिकातामुद्रितपाठः ।

दीधितिः

**कत्वात्, तच्छून्ये च काले तदभावस्य प्रतियोगिव्यधिकरणत्वात्।**
**न च संसर्गाभावविशेषोऽत्यन्ताभावः,—**

जागदीशी

मानत्वेन, तथा चानुभव एव देशस्य कालवृत्तितावच्छेदकत्वे मानम्, अन्यथा 'गृहे नेदानीं गौ'रित्यादिप्रत्ययबलाद्गृहादिदेशस्य गवात्यन्ताभाववत्तायामपि कालो नानवच्छेदकः स्यात्; तत्रापि गवाभावे गृहवृत्तित्वैतत्कालवृत्तित्वोभयावगाहितायाः सुवचत्वादिति भावः। नन्वेवं प्रतियोगिवैयधिकरण्यघटितस्याव्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्य,—'कालो गोमान् गोत्वा'दित्यादावतिव्याप्तिरेव, गवाद्यभावस्य सृष्टिकाले प्रतियोगिसमानाधिकरणतया तल्लक्षणाघटकत्वादत आह,—❀तच्छून्य इति❀।—गवादिशून्य इत्यर्थः। तथा च,—यत्किञ्चिद्धेत्वधिकरणावच्छेदेन प्रतियोगिवैयधिकरण्यं यदग्रे वाच्यं,—तस्य [१]गवाद्यभावे[ऽपि] सत्त्वान्न तत्रापि लक्षणेऽतिव्याप्तिरिति भावः।

❀न चेति❀।—'वाच्य'मित्यन्वयः। ❀संसर्गाभावविशेष इति❀।—

विवृतिः

दवृत्तिगोत्वाभावविषयकतयेत्यर्थः। **अन्यथेति**। कालस्य देशवृत्तितायामवच्छेदकत्वानभ्युपगम इत्यर्थः। अत्रापि = 'गृहे नेदानीं गौ'रित्यादिप्रतीतावपि, गृहवृत्तित्वेति। गृहवृत्त्येतत्कालवृत्तिगवाभावविषयकत्वस्यैवोपपत्तेरित्यर्थः।

दीधितौ—**तच्छून्य इति**। गवादिशून्य इत्यर्थः। काले=प्रलये, तदभावस्य= गवाद्यभावस्य, प्रतियोगिव्यधिकरणत्वात् = प्रलयावच्छेदेन गवाभावस्य प्रतियोग्यधिकरणावृत्तित्वात्।

समुदितग्रन्थोत्थितौ बीजमाह—**नन्विति**। **प्रतियोगीति**। सृष्टिकाले गवादेः सत्त्वेऽपि गवाद्यनधिकरणदेशावच्छेदेन तदभावस्यापि सत्त्वाद्गवाभावस्य प्रतियोगिसमानाधिकरणत्वादित्याशयः। तस्य = यत्किञ्चिद्धेत्वधिकरणावच्छेदेन प्रतियोगिवैयधिकरण्यस्य। **तत्रापीति**। 'कालो गोमान् गोत्वा'दित्यत्रापीत्यर्थः।

---

१. 'गवात्यन्ताभावे' इति क्वचित्पाठः।

दीधितिः

**संसर्गाभावत्वञ्च, — संसर्गारोपजन्यप्रतीतिविषयाभावत्वरूपं**

जागदीशी

**सदातनसंसर्गाभाव इत्यर्थः । ॐसंसर्गेतिॐ ।—स्वप्रतियोगितावच्छेदक-संसर्गेण यः प्रतियोग्यारोपः,-'तज्जन्यप्रतीतिविषयो योऽभावस्तत्त्वमित्यर्थः ।[1]**

**संसर्गस्तु तादात्म्यभिन्नो[2] ग्राह्यः, तेन भेदव्युदासः ।**

**'प्रागभावध्वंसयोरपि उत्तरकालपूर्वकालावेव प्रतियोगितावच्छेदक-सम्बन्धाविति,-ताभ्यामेव [ सम्बन्धाभ्यां ] प्रतियोग्यारोपः प्रागभावध्वं-सयोः प्रत्यक्षे हेतुरतस्तयोर्नाव्याप्तिरिति'–प्राचामाशयः ।**

विवृतिः

**सदातनेति ।** नित्येत्यर्थः । **स्वप्रतियोगितेति ।** स्वपदं तत्तत्संसर्गाभावव्यक्ति-परम् । तत्प्रतियोगितावच्छेदकसंसर्गेण = तत्प्रतियोगितावच्छेदकसम्बन्धेन, प्रति-योग्यारोपः = "अत्र यदि प्रतियोगी स्यात्तर्ह्युपलभ्येते"त्याकारक आरोपः, तज्जन्यः = आरोपजन्यः, प्रतीतिविषयः = ज्ञानविषयः, लौकिकप्रत्यक्षविषयो वा, **तादात्म्यभिन्नेति ।** तथा च तादात्म्यभिन्नप्रतियोगितावच्छेदकसम्बन्धेनेत्येवार्थः करणीय इत्याशयः । **व्युदास इति ।** तथा च तादात्म्येन यदि घटः स्यात्तर्ह्यु-पलभ्येते"त्याकारकारोपजन्यप्रतीतिविषये 'घटो ने'त्याकारकेऽन्योन्याभावेऽतिप्रसङ्गः स्यात्, तद्वारणाय स्वप्रतियोगितावच्छेदकसम्बन्धस्तादात्म्यातिरिक्तो वक्तव्य इत्याशयः ।

ननु ध्वंस-प्रागभावप्रतियोगितायाः सम्बन्धानवच्छिन्नतया तत्प्रतियोगिताव-च्छेदकसम्बन्धाऽप्रसिद्ध्या स्वपदेन ध्वंसप्रागभावयोर्धर्तुमशक्यत्वात्तयोर्निरुक्तसंसर्गा-भावत्वलक्षणमव्यापकमित्यत आह— **प्रागभावध्वंसयोरपीति ।** उत्तरकालपूर्व-कालावेव = पूर्वोत्तरकालावेव, क्वचित्तथैव पाठः । प्रागभावस्य स्वाश्रयपूर्वकालत्वं प्रतियोगितावच्छेदकसम्बन्धः, ध्वंसस्य तु स्वाश्रयोत्तरकालत्वं प्रतियोगितावच्छेदक-सम्बन्ध इति विपरीतक्रमेणैवान्वयो बोध्यः । **ताभ्यामिति ।** तथा च "स्वाश्रय-पूर्वकालत्वसम्बन्धेन यदि घटः स्यात्तर्हि तद्वत्तयोपलभ्येते"त्याकारकारोपः प्रागभाव प्रत्यक्षे हेतुः, 'स्वाश्रयोत्तरकालत्वसम्बन्धेन यदि घटः स्यात्तर्हि तद्वत्तयोपलभ्येते'-त्याकारकारोपस्तु ध्वंसप्रत्यक्षे हेतुरित्याशयः । स्वपदं तत्तत्प्रतियोगिपरं ।

१ 'तज्जन्यप्रतीतिविषयाभावत्वमित्यर्थः' इति हस्तलिखितपुस्तकपाठः ।
२ 'तादात्म्यातिरिक्तो ग्राह्यः' इति प्राचीनलिखितपुस्तके पाठः ।

दीधितिः

जन्यताघटकनियम-घटितमिति वाच्यम्; तद्वदन्यावृत्तित्वरूपनियमस्य तत्र घटकत्वात्, एवं नियमान्तरस्यात्र प्रवेशेऽपि न क्षतिरित्याहुः ॥९॥

जागदीशी

❀घटितमिति❀।—तथा च चक्रकादिप्रसङ्ग इति भावः।

तत्र = जन्यत्वे, 'नियमान्तरस्य = साध्यसम्बन्धितावच्छेदकरूपवत्त्वादिस्वरूपस्येत्यर्थः ॥९॥

विवृतिः

केचित्तु यथाक्रमेणैवान्वयबलात्स्वप्रतियोगिकप्रागभावव्यवहारोत्तरकालत्वरूपः प्रागभावस्य प्रतियोगितावच्छेदकसम्बन्धः, ध्वंसस्य तु स्वप्रतियोगिकध्वंसव्यवहारपूर्वकालत्वरूपः, यदि च स्वोत्पत्तिक्षणेऽपि प्रागभावव्यवहारः प्रामाणिकस्तदा स्वोत्पत्त्यनधिकरणत्वेन प्रागभावादिव्यवहाराधिकरणकालस्य विवक्षणीयतया न कोऽपि दोषः, अत्रापि स्वपदं तत्तत्प्रतियोगिपरमित्याहुः।

चक्रकादिप्रसंग इति। संसर्गाभावत्वघटितनिरुक्तव्याप्तिघटितजन्यताघटितत्वरूपापादकेन स्वस्मिन् स्वभिन्नत्वापादानप्रसङ्ग इत्यर्थः, तथा चोक्तं प्राचीनैः—"स्वज्ञानसापेक्ष-ज्ञानसापेक्ष-ज्ञानसापेक्ष-ज्ञानविषयत्वेन स्वभिन्नत्वापादनं चक्रकप्रसङ्ग" इति। जन्यतायास्तद्व्याप्यत्वे सति तन्निष्ठान्यथासिद्ध्यनिरूपकत्वरूपत्वादिति भावः। आदिपदात्परम्परया संसर्गाभावत्वघटितत्वेनापादकेन स्वस्मिन् स्वभिन्नत्वापादनरूपस्यात्माश्रयस्य संसर्गाभावत्वघटितजन्यताघटितत्वेनापादकेन स्वस्मिन् स्वभिन्नत्वापादनरूपस्यान्योन्याश्रयस्यापि परिग्रहः।

यत्तु मैथिलैरुक्तं,—"स्वमत्यन्ताभावत्वं—तद्घटिता व्याप्तिस्तद्घटितं संसर्गाभावत्वं तद्घटितत्वरूपापादकस्यात्यन्ताभावत्वे सत्त्वात्तत्र स्वभिन्नत्वापादनं चक्रकप्रसङ्ग इति, तत्तुच्छम्, अत्यन्ताभावत्वे स्वभिन्नत्वापादनस्यार्थान्तरग्रस्ततया प्रकृतानुपयोगित्वात्। संसर्गाभावत्व एव स्वभिन्नत्वापादनस्य 'जन्यताघटकनियमघटित'मित्यादिग्रन्थेन दीधितिकृता प्रतिपादितत्वादित्यलमधिकेन।

जन्यताया घटिका व्याप्तिर्यदि न निरुक्ता व्याप्तिस्तर्हि चक्रक एव न सम्भवति, संसर्गाभावत्वघटितायाः स्वव्यापकसाध्यसामानाधिकरण्यरूपाया व्याप्तेर्जन्यतायाम घटकत्वादित्याशयेनाह—दीधितौ—तद्वदन्येति। साध्यवदन्यावृत्तित्वेत्यर्थः। तथ च संसर्गाभावत्वज्ञानसापेक्ष-पूर्वोक्तव्याप्तिज्ञान-सापेक्षत्वस्य जन्यताज्ञानेऽसत्त्वान्न चक्रक सङ्ग इति भावः। साध्यसम्बन्धितेति। साध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वात्मकस्येत्यर्थः। अधिकमग्रे वक्ष्यते ॥ ९ ॥

दीधितिः

## वक्ष्यते च नियमाघटितमेव संसर्गाभावादिलक्षणम्,—

जागदीशी

नन्वभावबुद्धौ प्रतियोग्यारोपस्य हेतुत्वे मानाभावादुक्तसंसर्गाभावत्व-घटितव्याप्तिलक्षणस्यासम्भवः, कथञ्चिदभावलौकिकप्रत्यक्षं प्रति प्रतियो-ग्यारोपस्य हेतुतास्वीकारेऽपि,—अतीन्द्रियसाध्यके व्यभिचारिण्यति-व्याप्तिः; तत्र हेतुसमानाधिकरणसाध्याभावस्यातीन्द्रियतया निरुक्तसंसर्गा-भावत्वविरहादत आह । *वक्ष्यते चेति* । भेदभिन्नाभावत्वं संसर्गाभावत्वं, सदातनत्वविशिष्टञ्च तदेवात्यन्ताभावत्वं, भेदत्वञ्च,—संसर्गविधया तादा-त्म्यावच्छिन्नप्रतियोगिताकाभावत्वम्, अनुयोगिताविशेषो वेत्याशयः ।

विवृतिः

'वक्ष्यत'इत्यादिग्रन्थावतरणिकामाह—**नन्विति** । अभावबुद्धौ = अभाव-विषयकज्ञानसामान्ये । **असम्भव इति** । आरोपजन्यत्वस्य संसर्गाभावेऽप्रसिद्ध-त्वादित्याशयः ।

ननु 'प्रतियोग्यारोपं विनाऽभावलौकिकप्रत्यक्षमेव नोत्पद्यते, तत्सत्त्वे चोत्पद्यते' इत्यन्वयव्यतिरेकाभ्यां प्रतियोग्यारोपस्याभावलौकिकप्रत्यक्षहेतुत्वमेवावश्यकमित्यत आह—**कथञ्चिदिति** । प्रतियोग्यारोपं विनाप्यभावलौकिकप्रत्यक्षस्य नव्यैरभ्यु-पगमादुक्तान्वयव्यतिरेकासम्भवात्कथञ्चिदित्युक्तम् ।

**स्वीकारेऽपीति** । केषाञ्चिन्मते प्रतियोग्यारोपस्य हेतुत्वेऽपीत्यर्थः । **अती-न्द्रियेति** । 'मनस्त्ववानणुत्वा'दित्यत्रेत्यर्थः । अतिव्याप्तिं सङ्गमयति—**तत्रेति** । अतीन्द्रियसाध्यकस्थल इत्यर्थः । साध्याभावस्य=मनस्त्वाभावस्य । **निरुक्तेति** । तथा च 'अत्र यदि मनस्त्वं स्यात्तर्ह्युपलभ्येते'त्याकारकारोपस्यैवाप्रसिद्ध्या तादृशा-रोपजन्यप्रतीतिविषयाभावत्वस्य मनस्त्वाभावरूपसाध्याभावेऽसत्त्वाद्घटाभावमादायै-वातिव्याप्तिरिति भावः । **वक्ष्यते चेतीति** । आत्मतत्त्वविवेक इति शेषः । कीदृशं वक्ष्यमाणं संसर्गाभावत्वलक्षणमित्याकाङ्क्षायामाह—**भेदभिन्नाभावत्वमिति** । ननु तर्हि किं नामात्यन्ताभावत्वमित्यत आह—**सदातनत्वेति** । तदेव = भेद-भिन्नाभावत्वमेव, तथा च 'नित्यत्वे सति भेदभिन्नाभावत्वमत्यन्ताभावत्व'मिति पर्यव-सितार्थः । ननु तर्हि भेदत्वमपि संसर्गाभावभिन्नाभावत्वं चेदन्योन्याश्रयप्रसङ्ग इत्यत आह—**भेदत्वञ्चेति** । संसर्गविधया = संसर्गत्वेन, **तादात्म्येति** । तथा

दीधितिः

## अनुपदमेव च विवेचयिष्यते संसर्गाभावत्वप्रवेशे,—

जागदीशी

यत्तु 'भेदत्वादिवत्संसर्गाभावत्वमप्यखण्डोपाधि'रिति, तत्तुच्छम्; भेदत्वादिवदखण्डस्य संसर्गाभावत्वस्यानुभवेनाविषयीकरणात्, तान्त्रिक-व्यवहारस्य भेदभिन्नाभावत्वादिनाऽप्युपपत्तेः ।

वस्तुगतिमनुरुध्याह,—अनुपदमिति । विवेचयिष्यत इति । —'तदपि वा नोपादेयमि'त्यादिग्रन्थेनेति शेषः ।

'साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्य'घटितलक्षणमभि-प्रेत्याह,—प्रयोजनविरह इति ।—धूमादिसमानाधिकरणस्य वह्न्या-दिभेदस्य प्रतियोगिसमानाधिकरणत्वात् [एव] तमादायाव्याप्तिविरहा-दिति भावः ।

विवृतिः

च तादात्म्यसम्बन्धावच्छिन्ना प्रतियोगिता यस्यैवम्भूतो योऽभावः सोऽन्योन्याभाव इति फलितम् ।

केचित्तु "भेदत्वमखण्डोपाधिः, न तु तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिता-काभावत्वं, एवं संसर्गाभावत्वमप्यखण्डोपाधिरेवेति" वदन्ति, तन्मतमाशङ्क्य दूषयति—**तत्तुच्छमिति** । संसर्गाभावत्वस्य = ध्वंस-प्रागभावात्यन्ताभावसाधा-रणाभावत्वरूपधर्मस्य, अनुभवे विवादादाह—**तान्त्रिकेति** । शास्त्राभिज्ञानां शब्द-प्रयोगात्मकाभिलापरूपव्यवहारस्येत्यर्थः । **उपपत्तेरिति** । तथा च "अयमभावः संसर्गाभावः" इत्याकारकतान्त्रिकव्यवहारे भेदभिन्नाभावत्वस्य प्रयोजकत्वाङ्गीका-रेणैवोपपत्तेरखण्डसंसर्गाभावत्वस्याप्रामाणिकत्वमित्याशयः । **वस्तुगतिमिति** । मूलोक्तलक्षणस्याभावाघटितत्वमात्र एव तात्पर्यस्य वास्तविकत्वात्तदेवानुरुध्या-हेत्यर्थः ।

दीधितौ यल्लक्षणमभिप्रेत्य प्रयोजनविरहोऽभिहितस्तल्लक्षणं प्रदर्शयति—**साध्यतावच्छेदकसम्बन्धेनेति** । तथा च हेतुसमानाधिकरणसंसर्गाभावा-प्रवेशे 'वह्निमान्धूमा'दित्यत्र वह्निभेदस्य धूमाधिकरणवृत्तित्वेऽपि तस्य साध्यताव-च्छेदकीभूतसंयोगसम्बन्धेन वह्निरूपप्रतियोग्यधिकरणे पर्वतादौ वर्त्तमानतया प्रति-योगिसमानाधिकरणत्वादेव वारणसम्भवे संसर्गाभावत्वप्रवेशो निष्फल एवेति भावः ।

दीधितिः

## प्रयोजनविरहोऽव्याप्तिश्च ॥१०॥

जागदीशी

व्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्य 'साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिता'घटितत्वात्, तदभिप्रेत्याह,—*अव्याप्तिश्चेति* !—तादात्म्येन गवादेः साध्यतायां तत्सम्बन्धावच्छिन्नात्यन्ताभावाप्रसिद्ध्या सास्नावत्त्वाद्यावव्याप्तिरित्यर्थः ।

इदम"प्यभाववृत्तिरभावो नाधिकरणस्वरूपो, न वा धर्म्मात्यन्ताभाव एव धर्मिणो भेद" इति मतेन ।

विवृतिः

दीधितौ यल्लक्षणमभिप्रेत्य संसर्गाभावत्वप्रवेशेऽव्याप्तिरभिहिता तत्प्रदर्शयति–व्याप्यवृत्तीति । हेतुसमानाधिकरणाभावनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्यैव व्याप्यवृत्तिसाध्यकस्थलीयलक्षणत्वादिति भावः । तादात्म्येनेति । 'गौः सास्नावत्त्वा'दित्यत्र सास्नावत्त्वसमानाधिकरणसंसर्गाभावनिरूपितसाध्यतावच्छेदकीभूततादात्म्यसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या सास्नावत्त्वहेतावव्याप्तिः संसर्गाभावत्वप्रवेशेऽस्तीत्याशयः ।

नन्वभावाधिकरणकाभावस्याधिकरणस्वरूपतया पटभेदाधिकरणकघटभेदत्वात्यन्ताभावस्य पटभेदस्वरूपतया पटनिष्ठप्रतियोगितैव तादृशपटभेदात्मकघटभेदत्वात्यन्ताभावरूपसंसर्गाभावनिरूपिततादात्म्यसम्बन्धावच्छिन्ना, एवं,—'समनियताभावानामैक्य'मिति मते पटभेदस्य पटत्वात्यन्ताभावस्वरूपतया पटनिष्ठप्रतियोगिता पटभेदात्मकपटत्वात्यन्ताभावरूपसंसर्गाभावनिरूपिता तादात्म्यसम्बन्धावच्छिन्नापीति, न संसर्गाभावनिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिः सम्भवतीत्यत आह–इदमपीति । निरुक्ताव्याप्तिदानमपीत्यर्थः । अभाववृत्तिरभावः =

दीपिका

इदमप्यभाववृत्तिरिति । ननु घटाभावस्य तादात्म्येन साध्यत्वे तद्व्यक्तित्वेहेतौ हेतुसमानाधिकरणघटत्वाभावस्य साध्यभेदरूपत्वेनैक्यात्तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकमित्यव्याप्तिसम्भवे तत्परित्यागे किं बीजमिति चेन्न । हेत्वधिकरणवृत्तितावच्छेदकीभूतानुयोगितानिरूपितात्यन्ताभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वात् ।

दीधितिः

अथ 'ज्ञानवान् द्रव्यत्वात्', 'विशेषगुणवान्—

जागदीशी

अन्यथा पट[आदि]भेदस्वरूपस्य घटभेदत्वात्यन्ताभावस्य, पटत्वात्यन्ताभावस्य वा पटनिष्ठप्रतियोगितायाः एव तादात्म्यसम्बन्धावच्छिन्नत्वादव्याप्तिविरहादिति ध्येयम् ॥१०॥

ननु विषयताया वृत्त्यनियामकत्वमते—'ज्ञानाभावस्य गगनादौ सहजत एव प्रतियोगिव्यधिकरणत्वान्नातिव्याप्तिरत आह,— ❀ विशेषगुण इति ❀ ।—अत्र व्यभिचारनिरूपकः कालो, दिक् च, तत्र काले कालिकेन, दिशि च दैशिकेन सम्बन्धेन विशेषगुणस्य सत्त्वात्तदभावो न प्रति-

विवृतिः

अभावाधिकरणकाभावः, 'अभावाधिकरणकाभावस्य धर्मिभेद-धर्मात्यन्ताभावयोश्चैक्य'मिति मताभ्युपगमे निरुक्ताव्याप्तिर्न घटत इत्याह—अन्यथेति । पटादिभेदरूपस्य = पटादिभेदाधिकरणकस्य ।

ध्येयमिति । चिन्ताबीजन्तु, संसर्गाभावत्वप्रवेशेऽपि निरुक्तमतमवलम्ब्याव्याप्तिवारणसम्भवेऽव्याप्तिदानमसङ्गतमिति ध्येयम् ॥१०॥

'विशेषगुणवानि'त्यादिसाध्यान्तरानुसरणबीजमाह—नन्विति । विषयताया इति । तथा च प्रतियोगितावच्छेदकावच्छिन्नाधिकरणावृत्तित्वघटकप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वं यदि सम्बन्धसामान्येऽपि निविष्टं स्यात्, तथापि 'ज्ञानवान् द्रव्यत्वा'दित्यत्र नातिव्याप्तिः, हेतुमति गगने वर्त्तमानस्य ज्ञानसामान्याभावस्य समवाय-कालिकादिसम्बन्धेन तत्तत्प्रतियोगितावच्छेदकीभूतज्ञानत्वावच्छिन्नाधिकरणे आत्मादाववर्त्तमानत्वात् विषयतया तादृशज्ञानत्वावच्छिन्नाधिकरणं चाप्रसिद्धं, विषयतासम्बन्धस्य वृत्त्यनियामकत्वादिति भावः ।

अत्रेति । 'विशेषगुणवान् मनोऽन्यद्रव्यत्वा'दित्यत्रेत्यर्थः । व्यभिचारेति । व्यभिचारः = हेतौ साध्याभाववद्वृत्तित्वं, तन्निरूपकः = हेतुमत्साध्याभावाधिकरणं । काल इति । तथा च काले दिशि च वर्त्तमानस्य विशेषगुणाभावस्य, प्रतियोगितावच्छेदकीभूतविशेषगुणत्वावच्छिन्नस्य कालिकसम्बन्धेनाधिकरणे काले, दैशिकविशेषणतयाऽधिकरणीभूतायां दिशि च

१ 'ज्ञानाभावो गगनादौ सहजत एव प्रतियोगिव्यधिकरण इति नातिव्याप्ति'रिति प्राचीनलिखितपुस्तकपाठः ।

दीधितिः

**—मनोऽन्यद्रव्यत्वात्',—**

जागदीशी

योगिव्यधिकरण इति भवत्यतिव्याप्तिः ।

'विशेष'पदं व्यभिचारित्वरक्षायै ।

'द्रव्यत्वा'दित्युक्तौ सम्बन्धसामान्येन विशेषगुणस्य मनस्यसत्त्वान्नातिव्याप्तिसम्भवः, कालोपाधितावद्दिगुपाधित्वस्यापि मनस्यसत्त्वादव्यावर्त्तकत्वात्, अन्यथा मनसः कालोपाधित्वमपि स्यादत उक्तं,—*मनोऽन्येति* ।

विवृतिः

वर्त्तमानतया साध्याभावस्य लक्षणाघटकत्वादभावान्तरमादायातिव्याप्तिरित्याशयः । **विशेषपदमिति** । 'गुणवान्मनोऽन्यद्रव्यत्वा'दित्येतावन्मात्रोक्तौ तादृशद्रव्यत्वस्याधिकरणे दिक्कालादौ सर्वत्र गुणस्य सत्त्वेन निरुक्तहेतोः सद्धेतुतया तत्र लक्षणगमनस्येष्टत्वादतिव्याप्तिदानमसङ्गतं स्यादतो 'विशेष'पदमावश्यकमिति भावः । ननु द्रव्यत्वस्याधिकरणेऽपि दिक्कालादौ विशेषगुणस्यासत्त्वाद् द्रव्यत्वहेतोरपि व्यभिचारित्वसम्भवे हेतौ 'मनोऽन्य'पदं निरर्थकमित्यत आह–**द्रव्यत्वादिति** । 'द्रव्यत्वा'दित्युक्तौ हेत्वधिकरणे मनसि वर्त्तमानो विशेषगुणाभावो भवति प्रतियोगिव्यधिकरणः, तत्प्रतियोगितावच्छेदकीभूतविशेषगुणत्वावच्छिन्नाधिकरणतायाः कालिकादिना केनापि सम्बन्धेन हेतुमति नित्ये मनस्यविद्यमानत्वादिति, सम्बन्धसामान्येन प्रतियोगिव्यधिकरणत्वेन साध्याभावस्य धर्त्तुं शक्यतया नातिव्याप्तिरतोऽतिव्याप्तिदानाय 'मनोऽन्य'पदं हेतौ निवेशनीयमित्यभिप्रायः । ननु 'द्रव्यत्वा'दित्युक्तावप्यतिव्याप्तिः सम्भवत्येव, मूर्त्तमात्रस्य दिगुपाधितया मनोवृत्तिविशेषगुणाभावप्रतियोगिनो विशेषगुणस्यापि दिक्कृतविशेषणतासम्बन्धेन मनसि सत्त्वात् विशेषगुणाभावरूपसाध्याभावस्य मनसि प्रतियोगिसमानाधिकरणत्वादिति 'मनोऽन्य'पदं निरर्थकमेवेत्यत आह–**कालोपाधितेति** । यथा कालोपाधित्वं मनसि नास्ति तथा दिगुपाधित्वमपि तत्र नास्तीत्यर्थः, । **अव्यावर्त्तकत्वादिति** । 'इदानीं घटो न तदानीम्' 'इह दिशि घटो न तद्दिशि' इति जन्यानामेव व्यावर्त्तकत्वं न तु नित्यानामिति भावः । नित्यस्य दिगुपाधित्वे दोषमाह–**अन्यथेति** । **न स्यादिति** । कालोपाधित्वस्य नित्यावृत्तितया सर्वसम्मतत्वादिति भावः । **मनोऽन्यपदमिति** । तथा च तादृशमनोऽन्यद्रव्यत्वाधिकरणं न मनोऽपि तु दिक्कालादिकमेवेति पूर्वोक्तरीत्या भवत्यतिव्याप्तिरित्याशयः ।

दीधितिः

——'जातिमान् भावत्वा'दित्यादौ——

——समवायेन ज्ञानादेः साध्यतायामतिव्याप्तिः,

जागदीशी

यत्तु—"मूर्त्तमात्रस्य, दिगुपाधित्वं = महादिग्वृत्तितायामवच्छेदकत्वं, न त्वधिकरणत्व"मिति—प्राचां मते, सम्बन्धसामान्येनैव तस्य विशेष-गुणानधिकरणत्वात्—'मनोऽन्य'पद—मिति;

तन्मन्दम्,

एवमप्यवच्छेदकतासम्बन्धेनैव मनसो विशेषगुणवत्तायाः सम्भवेन 'मनोऽन्य'—पदवैयर्थ्यापत्तेः।

[ अत्र च द्रव्यत्वाधिकरणे घटादावतीततत्तद्व्यक्त्यभाव एव सम्बन्ध-सामान्येन प्रतियोगिव्यधिकरण इति ध्येयम्। ]

ननु स्वमते दिक्कालयोरीश्वरानतिरिक्तत्वादत्र व्याप्तिरेवेत्यत आह,—❀जातीति❀।

न च जातेर्व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्या-

विवृतिः

अन्यथा प्रकारेण 'मनोऽन्य'पदव्यावृत्तिं प्रदर्शयतां मतं दूषयितुमुपन्यस्यति—यत्त्विति। महादिग्वृत्तितायां = पूर्वादिदिग्वृत्तितायां, अवच्छेदकत्वमिति। मूर्त्तमात्रस्य दिगुपाधित्वमित्यस्यार्थं इत्यर्थः।

इदन्तु चिन्त्यते,—एतन्मतेऽपि निरुक्तरीत्या 'मनोऽन्य'पदव्यावृत्तिः सम्भवति, अवच्छेदकताया वृत्त्यनियामकतया तेन सम्बन्धेनाधिकरणाऽप्रसिद्ध्या तदतिरिक्तसम्बन्धसामान्येनैव विशेषगुणस्य मनस्यसत्त्वादिति।

न च घट-पटादेः सर्वस्यैव सम्बन्धसामान्येन काल-दिगादौ सत्त्वात्तेषामभावा-नामपि प्रतियोगिव्यधिकरणत्वासम्भवेनाभावाप्रसिद्ध्यैव नातिव्याप्तिरिति वाच्यं, विषयित्वाद्यतिरिक्तसम्बन्धेन विभिन्नकालीनवस्तुन आधाराधेयभावानभ्युपगमाद-तीततद्व्यक्तित्वावच्छिन्नाभावस्यैव प्रतियोगिव्यधिकरणत्वसम्भवात्।

**स्वमत इति।** दीधितिकारमत इत्यर्थः। **व्याप्तिरेवेति।** ईश्वरे विशेषगुणस्य ज्ञानादेः सत्त्वात्तादृशद्रव्यत्वरूपहेतोः सद्धेतुतया तद्वारणप्रयासोऽनुचित एवेति भावः।

**न चेति।** वाच्यमित्यनेनान्वयः। व्याप्यवृत्तितया = स्वाधिकरणे

दीधितिः

——— साध्यशून्यानामपि ———

जागदीशी

प्रवेशादेव नाविव्याप्तिरिति वाच्यम्;

समवायेनाव्यापकत्वग्रहदशायामपि सम्बन्धसामान्येन प्रतियोगिवैयधिकरण्यघटितव्यापकत्वज्ञानात्समवायेन जात्यनुमित्यापत्तेरेव प्रकृतेऽतिव्याप्तिपदार्थत्वात्,

जात्यादेरपि प्रागुक्तव्याप्यवृत्तित्वविरहाच्च ।

अतिव्याप्तिं योजयति,—ॐसाध्यशून्येतिॐ ।

विवृतिः

स्वरूपेण वर्त्तमानाभावाप्रतियोगितया, नातिव्याप्तिरिति । प्रतियोगिवैयधिकरण्याघटितलक्षणस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावघटिततया भावत्वाधिकरणे सामान्यादौ समवायेन वर्त्तमानस्य जात्यभावस्य प्रतियोगितावच्छेदकतायाः साध्यतावच्छेदके—जातित्वे—सत्त्वान्नातिव्याप्तिरित्यर्थः ।

'अतिव्याप्ति'पदस्यानुमित्यापत्तिरित्यर्थमभिप्रेत्य समाधत्ते,—समवायेनेति । अव्यापकत्वग्रहदशायां = 'भावत्ववन्निष्ठसमवायावच्छिन्नाभावप्रतियोगिनी जाति'-रित्याकारकग्रहकाले, सम्बन्धसामान्येन = एकार्थसमवायादिघटितसम्बन्धसामान्येन, व्यापकत्वज्ञानात् = 'भावत्वसमानाधिकरणसम्बन्धसामान्येन प्रतियोगिव्यधिकरणाभावाप्रतियोगिनी जाति'रित्याकारकज्ञानात्, तादृशज्ञानोदयादिति यावत् । अनुमित्यापत्तिरिति । अनुमितौ निरुक्तव्यापकताज्ञानस्यापि हेतुतया कारणसत्त्वेन 'समवायेन जातिमा'नित्यनुमित्यापत्तिरित्यर्थः ।

ननु व्याप्यवृत्तितानवच्छेदकधर्मावच्छिन्नविधेयताकानुमितिं प्रत्येव सम्बन्धसामान्येन प्रतियोगिवैयधिकरण्यघटितव्यापकताज्ञानस्य कारणत्वकल्पनान्नोक्तज्ञानकाले व्याप्यवृत्तितावच्छेदकजातित्वावच्छिन्नानुमित्यापत्तिः सम्भवतीत्यत आह—जात्यादेरिति । प्रागुक्तेति । 'वस्तुत' इत्यादिना कथितव्याप्यवृत्तित्वस्य जातौ विरहादव्याप्यवृत्तिसाध्यकस्थलीयस्य निरुक्तसम्बन्धसामान्येन प्रतियोगिवैयधिकरण्यघटितलक्षणस्य 'जातिमान् भावत्वा'दित्यत्रातिव्याप्तिरस्त्येवेति भावः ।

निरुक्तदीधितिग्रन्थस्य पूर्वोक्तव्यभिचारिण्यतिव्याप्तिसङ्गमनपरतामाह—अतिव्याप्तिमिति ।

दीधितौ—साध्यशून्यानामिति । साध्यतावच्छेदकसम्बन्धेन साध्याभाव-

दीधितिः

**हेतुमतां,–विषयत्व-विशेषणत्वै-कार्थसमवायैः साध्यवत्त्वादिति चेत्,**

जागदीशी

विशेषणता,—दिक्कृता, कालिकी च। ❀एकार्थेति❀।—समवायस्यापि स्वात्मक एव स्वरूपसम्बन्ध इति,–तत्रापि जात्येकार्थसमवायोऽस्तीत्याशयः। 'जातिः सती'तिवत्, 'समवायः सन्नि'ति प्रतीतेरविशेषात्,

तथा च जात्यधिकरणनिरूपितसमवायात्मकस्वरूपसम्बन्धेन समवायोऽपि जातिमानिति,–साध्याभावस्य प्रतियोगिसमानाधिकरणत्वादतिव्याप्तिरिति भावः।

विवृतिः

वतामित्यर्थः। **हेतुमतामिति**। तत्तद्धेत्वधिकरणीभूतगगनादीनां, दिक्कालयोः, सामान्यादीनाञ्चेत्यर्थः। एतेन–निरुक्तहेतूनां व्यभिचारित्वमाविष्कृतम्। **साध्यवत्त्वादिति**। क्रमेण,—साध्याभावप्रतियोगिनो ज्ञानस्य विषयतयाऽधिकरणत्वस्य गगनादौ, तादृशस्य विशेषगुणस्य कालिकेन, दिक्कृतविशेषणतासम्बन्धेन चाधिकरणत्वस्य दिक्कालयोः, तादृश्याश्च जातेरेकार्थसमवायसम्बन्धेनाधिकरणत्वस्य सामान्यादौ सत्त्वादित्यर्थः। एतेन–साध्याभावस्य प्रतियोगिव्यधिकरणत्वाभावः सूचितः।

'विशेषणता'पदार्थं व्याचष्टे—**विशेषणतेति**।

ननु स्वाधिकरणानुयोगिकसमवायवत्त्वमेवैकार्थसमवायः, तादृशसमवायवत्त्वञ्च स्वरूपसम्बन्धेन समवाये नास्ति, स्वस्मिन् स्वरूपेण स्ववत्त्वस्यादृष्टचरत्वात्, एवञ्च समवाये निरुक्तसम्बन्धाभावात्तत्सम्बन्धिन्या जातेरपि स्वपदोपात्तायाः सत्त्वं न स्यादिति,—भावत्वाधिकरणे समवाये सम्बन्धसमान्येन जात्यभावस्य प्रतियोगिव्यधिकरणतया कुतोऽतिव्याप्तिरित्यत आह—**समवायस्यापीति**। स्वात्मकः = समवायात्मकः, तादात्म्यात्मक इति यावत्, तत्रापि = समवायेऽपि, **जात्येकार्थेति**। तथा च तादात्म्य–स्वरूपान्यतरसम्बन्धेन स्वाधिकरणानुयोगिकसमवायवत्त्वस्य समवायेऽपि सत्त्वेन, सम्बन्धसत्तायाः सम्बन्धिसत्तानियामकतया स्वपदोपात्तजातेरपि तत्र सत्त्वमक्षतमेवेति,—न जातिसामान्याभावः समवायरूपहेत्वधिकरणेऽपि प्रतियोगिव्यधिकरण इति भावः।

एकार्थसमवायसम्बन्धेन जातेः समवाये सत्त्वेऽनुभवमाह—**जातिरिति**। भावत्वस्य समवेतत्वार्थकत्वे समवायस्य हेत्वधिकरणत्वमेव न सम्भवतीत्याह—

दीधितिः

———मैवं,—

प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिनो यदधिकरणं,—

जागदीशी

[ शि. पृ. ११३. ] "भावत्वात्=समवेतत्वात्" इत्यपि केचित्।

❀प्रतियोगितेति❀।—तथा च ज्ञानाद्यभावस्य तादृशेन समवायसम्बन्धेन घटादौ प्रतियोगिव्यधिकरणत्वान्नातिव्याप्तिः।

न च तादृशयत्किञ्चित्सम्बन्धेन प्रतियोगिसामानाधिकरण्याभावोक्तौ वह्निसामान्याभावस्यापि धूमवत्पर्वतावच्छेदेन महानसीयसंयोगेन प्रतियोग्यसमानाधिकरणत्वाद्वह्निमान् धूमादित्यादावव्याप्तिः,—

स्वप्रतियोगितावच्छेदकसम्बन्धसामान्येन तथात्वोक्तौ च,—'जातिमान् जातित्वा'दित्यादातिव्याप्तिः,—

समवायेन जात्यभावस्यैव तादात्म्येन जातिमद्भेदत्वात्, तस्य च स्वप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन—यज्जातिसम्बन्धि,—तद्वृत्तित्वेन प्रतियोगिव्यधिकरणत्वाभावादिति वाच्यम्;

विवृतिः

भावत्वादिति। पूर्वोक्तरीत्यैव सामाञ्जस्ये भावत्वस्य समवेतत्वार्थकरणमनर्थकमिति 'केचिदि'त्युक्त्याऽस्वरसः सूचितः।

ननु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यधिकरणत्वनिवेशेऽपि कथं निरुक्तस्थलेऽतिव्याप्तिवारणमित्यतो भावमाह—तथा चेति। ज्ञानाद्यभावस्येति। आदिना—विशेषगुणाभावस्य जात्यभावस्य च परिग्रहः। घटादाविति। आदिना—दिक्कालयोः, सामान्यादेश्च परिग्रहः, नातिव्याप्तिरिति। समवायेन ज्ञानादीनामधिकरण आत्मादौ ज्ञानाद्यभावस्यावर्त्तमानतया, हेतुमति घटादौ च वर्त्तमानतया साध्याभावादेर्लक्षणघटकत्वान्नातिव्याप्तिरित्यर्थः।

ननु 'प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यधिकरणत्व'विवक्षणेऽपि 'वह्निमान्धूमा'दित्यत्राव्याप्तिः, संयोगेन धूमाधिकरणे पर्वते वर्त्तमानस्य वह्निसामान्याभावस्य प्रतियोगिनो वह्नेः,—प्रतियोगितावच्छेदकयत्किञ्चिन्महानसीयसंयोगेनाधिकरणे महानसेऽवर्त्तमानत्वात्,—वह्न्यभावरूपसाध्याभावस्य प्रतियोगिव्यधिकरणतया लक्षणघटकत्वात्। न च स्वप्रतियोगितावच्छेदकसम्बन्धसामान्येन प्रतियोगितावच्छेदका-

जागदीशी

स्वप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं तादृशसम्बन्धेन यत् प्रतियोगिसम्बन्धि तद्वृत्तित्वाभावस्योक्तत्वात् ,

विवृतिः

वच्छिन्नाधिकरणत्वमेव विवक्षणीयं, संयोगेन पर्वतवृत्तिवह्न्यभावस्य प्रतियोगितावच्छेदकसम्बन्धसामान्यान्तर्गतपर्वतीयसंयोगेन वह्नेरधिकरणे पर्वते सत्त्वेन प्रतियोगिव्यधिकरणत्वाभावान्न 'वह्निमान्धूमा'दित्यत्राव्याप्तिरिति वाच्यम् । 'जातिमान् जातित्वा'दित्यत्रातिव्याप्त्यापत्तेः, समवायेन जात्यभावस्य तादात्म्येन 'जातिमान्न'ेति भेदसमनियततया तयोरैक्येन समवायेन, जात्यभावप्रतियोगितावच्छेदकसम्बन्धसामान्यान्तर्गततादात्म्यसम्बन्धेन जातिसम्बन्धिन्यां जातौ तस्य सत्त्वेन जात्यभावरूपसाध्याभावस्य लक्षणाघटकत्वात् ।

न च जातित्वस्य विरुद्धत्वात् साध्यसामानाधिकरण्यविरहादेव नातिव्याप्तिरिति वाच्यम् । तथापि व्यापकत्वलक्षणातिव्याप्तेर्दुर्वारत्वात् । न च प्रतियोगिव्यधिकरणाभावाऽप्रसिद्ध्यैव नातिव्याप्तिः, घटाद्यभावादेरपि घटवद्भेदस्वरूपतया प्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन घटादिसम्बन्धिनि घटादौ सत्त्वादिति वाच्यम् । जातिवृत्तिघटाभावादेः प्रतियोगिव्यधिकरणत्वसम्भवात्, यत्किञ्चिद्धेत्वधिकरणे प्रतियोगिवैयधिकरण्यस्याग्रे वक्ष्यमाणत्वादित्याशङ्क्य समाधत्ते—**स्वप्रतियोगित्वमिति** । यद्रूपपर्याप्तावच्छेदकताकसंसर्गनिष्ठावच्छेदकतानिरूपितस्वप्रतियोगित्वमित्यर्थः । स्वपदं-हेतुसमानाधिकरणत्वेनाभिमततत्तदभावव्यक्तिपरम् । **तादृशेति** । तद्रूपपर्याप्तावच्छेदकताकसंसर्गनिष्ठावच्छेदकतानिरूपिताधेयताकाधिकरणतावद्वृत्तित्वाभाववदभावस्य 'प्रतियोग्यसमानाधिकरणाभावान्त'ग्रन्थेन विवक्षितत्वादित्यर्थः । भवति हि—संयोगेन वह्न्यभावप्रतियोगित्वं संयोगत्वपर्याप्तावच्छेदकताकसंयोगनिष्ठावच्छेदकतानिरूपितं, एवञ्च संयोगत्वात्मकतद्रूपपर्याप्तावच्छेदकताकसंयोगनिष्ठावच्छेदकतानिरूपितवह्निनिष्ठाधेयताकाधिकरणतायाः पर्वतादौ सत्त्वात् तत्र वह्न्यभावस्य वृत्तित्वेन न वह्न्यभावो निरुक्तप्रतियोगिव्यधिकरण इति न 'वह्निमान्धूमा'दित्यत्राव्याप्तिः ।

न वा 'जातिमान् भावत्वा'दित्यत्रातिव्याप्तिः, समवायेन जात्यभावप्रतियोगित्वस्य समवायत्वनिष्ठावच्छेदकताकसमवायनिष्ठावच्छेदकतानिरूपिततया तादृशसमवायत्वनिष्ठावच्छेदकताकसमवायनिष्ठावच्छेदकतानिरूपितजात्यधिकरणताया द्रव्यादौ सत्त्वात्, तत्र च जात्यभावस्यासत्त्वात्, हेतुमति सामान्ये च तस्य

दीधितिः

**—सम्बन्धि वा—तद्वृत्तित्वाभावस्योक्तत्वात्,—**
**भवति चैवमन्योन्याभावोऽपि प्रतियोग्यसमानाधिकरणः ॥११॥**

जागदीशी

संयोगसामान्यावच्छिन्नवह्न्यभावप्रतियोगितायां महानसीयसंयोगत्वादि-विशिष्टानवच्छेद्यतया वह्न्यभावस्य पर्वतादौ महानसीयसंयोगेन प्रति-योगिसामानाधिकरण्याभावेऽप्यव्याप्तिविरहादिति ध्येयम् ।

ननु समवायाद्यवच्छिन्नवह्न्यभावमादाय धूमादावव्याप्तिवारणार्थमग्रे साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेन प्रतियोगित्वं निवेशनीयं, तथा च कपिसंयोगवतस्तादात्म्येन साध्यतायामेतद्वृक्षत्वादावव्याप्तिर्भेदमात्रस्यैव स्वप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन प्रतियोग्यधिकरणाप्रसिद्धेरत आह,—*सम्बन्धि वेति* ।

एतदेव घटयति,—*भवति चेति* ।—एवं = प्रतियोगितावच्छेदक-

विवृतिः

सत्त्वात् साध्याभावस्य निरुक्तप्रतियोगिव्यधिकरणतया लक्षणघटकत्वात्, एतदेव दर्शयति—**संयोगसामान्येति** । महानसीयसंयोगत्वादिविशिष्टानवच्छेद्यतया = महानसीयसंयोगत्वपर्याप्तावच्छेदकताकसंसर्गनिष्ठावच्छेदकत्वानिरूपित-तया, प्रतियोगिसामानाधिकरण्याभावेऽपि = प्रतियोगिव्यधिकरणत्वेन वह्न्यभावस्य लक्षणघटकत्वेऽपि ।

'सम्बन्धि वे'त्यस्य प्रयोजनं दर्शयितुं शङ्कते—**नन्विति । तथा चेति ।** कपिसंयोगी—एतद्वृक्षत्वादित्यत्र कपिसंयोगिनस्तादात्म्येन साध्यतास्थले—तादा-त्म्येन हेतुसमानाधिकरणघट-पटाद्यभावस्यैव—घटो न, पटो नेत्याकारकस्य—धर्त्तव्यतया तत्प्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन घटादेरधिकरणत्वस्याप्रसिद्धत्वादव्या-प्तिरतः,—**सम्बन्धि** वेत्यभिहितमित्याशयः । 'सम्बन्धि'पदोपादाने तु तादात्म्यस्य वृत्त्यनियामकत्वेनाधिकरणाप्रसिद्धावपि तेन सम्बन्धेन सम्बन्धित्वस्य सर्वसम्मत-तया घट-पटाद्यन्योन्याभावप्रतियोगिनो घटादेः सम्बन्धिनि घटेऽवर्त्तमानस्य तस्यैत-द्वृक्षत्वाधिकरणे सत्त्वान्न निरुक्तप्रतियोगिव्यधिकरणाभावाऽप्रसिद्धिनिबन्धना कपि-संयोगी—एतद्वृक्षत्वादित्यत्राव्याप्तिरिति तात्पर्यम् ।

'एवं' पदार्थं व्याचष्टे,—**प्रतियोगितावच्छेदकेति** । प्रतियोगिसम्बन्धित्व

जागदीशी

सम्बन्धेन 'प्रतियोगिसम्बन्धित्व'विवक्षणेन।

न च तादात्म्येन वस्तुमात्रस्यैव व्याप्यवृत्तित्वात्तादृशसम्बन्धेन साध्यतायां प्रतियोगिवैयधिकरण्याप्रवेशादिदमयुक्तमिति वाच्यम्;

मूलाद्यवच्छेदेन कपिसंयोगवद्भेदस्य वृक्षादौ स्वयमङ्गीकारात्, तादात्म्येन कपिसंयोगवतोऽप्यव्याप्यवृत्तित्वात्।

न चैवं 'प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावे'त्यग्रिमनिष्कर्षेऽप्यप्रतीकारः,—

प्रतियोगितावच्छेदकसम्बन्धेन ये प्रतियोगिसम्बन्धिनः—तत्तद्व्यक्तित्वावच्छिन्नभेदकूटविशिष्टहेतुमद्वृत्तित्वस्यैव तत्र वक्तव्यत्वात्।

विवृतिः

विवक्षणेन = प्रतियोगितावच्छेदकावच्छिन्नसम्बन्धित्वविवक्षणेन, ननु सम्बन्धित्वनिवेशनं व्यर्थं, तादात्म्येन वस्तुमात्रस्यैव व्याप्यवृत्तितया कपिसंयोगिनोऽपि व्याप्यवृत्तित्वात् तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशेन केवलैतद्वृक्षत्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वघटितलक्षणस्य न तत्राव्याप्तिरित्याशङ्कते—**न चेति**। इदं = पूर्वोक्ताव्याप्तिदानं।

समाधत्ते—**मूलेति**। स्वयं=दीधितिकृता, **अव्याप्यवृत्तित्वादिति**। तथा च कपिसंयोगिनस्तादात्म्येन साध्यतायामेतद्वृक्षत्वहेतुकस्थले प्रतियोगिवैयधिकरण्याप्रवेश एतद्वृक्षत्वाधिकरणे वृक्षे मूलावच्छेदेन कपिसंयोगिरूपसाध्यभेदस्य सत्त्वादव्याप्तिः स्यादतः 'प्रतियोगिवैयधिकरण्यं' निवेश्यमेव।

एवञ्च प्रतियोगिवैयधिकरण्यस्य प्रतियोगिसम्बन्ध्यवृत्तित्वार्थकत्वास्वीकारे घटादीनां तादात्म्यसम्बन्धेन प्रतियोग्यधिकरणाप्रसिद्ध्याऽव्याप्तिस्स्येवेत्यतः 'सम्बन्धित्व'निवेशनं कर्त्तव्यमेवेति भावः। एवं = सम्बन्धित्वनिवेशेऽपि।

**अग्रिमनिष्कर्ष इति**। वक्ष्यमाणहेत्वधिकरणविशेषण-प्रतियोगिवैयधिकरण्य-प्रवेशेपि। **अप्रतीकार इति**। तथा च तल्लक्षणे तादात्म्येन कपिसंयोगिनः साध्यतायामेतद्वृक्षत्वहेतावव्याप्तिप्रसङ्गः, तादात्म्येन घट-पटादीनामधिकरणत्वस्याप्रसिद्धतया तदनधिकरणत्वस्य वक्तुमशक्यत्वात्।

अग्रिमलक्षणेऽपि प्रतियोग्यधिकरणस्थाने प्रतियोगिसम्बन्धित्वं निवेशनीयमित्याशयेन समाधत्ते—**प्रतियोगितेति**।

**भेदकूटेति**। अन्यथा 'वह्निमान्धूमा'दित्यत्र वह्न्यभावप्रतियोगिवह्निसम्बन्धिमहानसभिन्नत्वस्य पर्वतादौ सत्त्वेन वह्न्यभावस्य लक्षणघटकतयाऽव्याप्तिप्रसङ्गः

जागदीशी

वस्तुतस्तु—तादात्म्यसम्बन्धेनापि न कस्य चित् प्रागुक्तव्याप्यवृत्तित्वमतो यथाश्रुतमेव सम्यक् ।

केचित्तु, — "प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितायां यद्धर्मावच्छिन्नत्व-यत्सम्बन्धावच्छिन्नत्वोभयाभाव इत्यादिवक्ष्यमाणनिष्कर्षस्य तादात्म्येन साध्यतायां व्यभिचारिण्यतिव्याप्तिः—

विवृतिः

स्यात्, भेदकूटनिवेशे तु वह्निसम्बन्धिपर्वतव्यक्तिभेदस्य पर्वतेऽसत्वान्न वह्न्यभावस्य लक्षणघटकत्वमिति नाव्याप्तिः । न च तादृशप्रतियोगिसम्बन्धित्वावच्छिन्नभेद एव हेत्वधिकरणे निवेश्यतां, किं भेदकूटनिवेशनेनेति वाच्यम् । सम्बन्धित्वस्याननुगततयैकसम्बन्धिभेदनिवेशे सम्बन्ध्यन्तरभेदमादाय निरुक्तरीत्या 'वह्निमान्धूमा'दित्यादावव्याप्तिप्रसङ्गस्य दुर्वारतापत्तेः ।

ननु भेदस्याव्याप्यवृत्तित्वं न प्रामाणिकमित्यत आह—**वस्तुतस्त्विति** । **प्रागुक्तेति** । कपिसंयोगिनस्तादात्म्येन सम्बन्धिनि वृक्षे कपिसंयोगिभेदस्य कालिकेन वर्त्तमानतया न कपिसंयोगिनः पूर्वोक्तव्याप्यवृत्तित्वमित्यर्थः । **यथाश्रुतेति** । तादात्म्येन कपिसंयोगिनः साध्यतास्थले प्रतियोगिवैयधिकरण्यस्यावश्यकतया सम्बन्धित्वानिवेशे भवति पूर्वोक्तरीत्याऽव्याप्तिरतः 'सम्बन्धित्व'निवेशनमेव सम्यगित्यर्थः ।

प्रकारान्तरेण 'सम्बन्धित्व'निवेशप्रयोजनमुपवर्णयतां मतमाह–**केचित्त्विति** । **प्रतियोग्येति** । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्तिप्रतियोगितासामान्ये,—साध्यतावच्छेदकीभूतयद्धर्मावच्छिन्नत्व,—साध्यतावच्छेदकीभूतयत्सम्बन्धावच्छिन्नत्वोभयाभावः, तेन साध्यतावच्छेदकसम्बन्धेन तादृशसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति वक्ष्यमाणनिष्कृष्टलक्षणार्थः ।

**अतिव्याप्तिरिति** । तथा च कपिसंयोगिनस्तादात्म्येन साध्यतायां प्रमेयत्वहेतौ 'प्रतियोग्यधिकरणत्व'स्थाने 'प्रतियोगिसम्बन्धित्वा'निवेशेऽतिव्याप्तिः, तादात्म्येनाधिकरणाऽप्रसिद्ध्या कपिसंयोगिभेदस्य धर्त्तुमशक्यतया तादात्म्येन घटान्योन्याभावीयघटादिनिष्ठे प्रतियोगित्वे तादात्म्यसम्बन्धावच्छिन्नत्वसत्त्वेऽपि; साध्यतावच्छेदकीभूतकपिसंयोगावच्छिन्नत्वविरहेणोभयाभावसत्वात्, समवायेन कपिसंयोग्यभावप्रतियोगितायां च साध्यतावच्छेदककपिसंयोगावच्छिन्नत्वसत्त्वेऽपि

दीधितिः

## तद्विशिष्टस्य च हेत्वधिकरणवृत्तित्वं वाच्यं,—
## —तेन नाव्याप्यवृत्तिसाध्यकासंग्रहः।

जागदीशी

अतः 'प्रतियोग्यनधिकरणत्वं' परित्यज्य 'प्रतियोग्यसम्बन्धित्व'मवश्यं तत्र निवेश्यमित्याशयेन सम्बन्धित्वमुक्तम्" इत्याहुः ॥११॥

ननु कपिसंयोगाभावस्यापि गुणादौ प्रतियोग्यसमानाधिकरणत्वात् कपिसंयोग्येतत्त्वादित्यादावव्याप्तिरत आह,—*तद्विशिष्टस्येति*।—प्रतियोगिसामानाधिकरण्याभावविशिष्टस्येत्यर्थः। तथा च हेतुमति वृक्षादौ संयोगवद्वृत्तित्वाभावविशिष्टः संयोगाभावो नास्तीति नाव्याप्तिः,

विवृतिः

तादात्म्यसम्बन्धावच्छिन्नत्वाभावेनोभयाभावस्य सत्त्वात् तादात्म्येन तादृशकपिसंयोगावच्छिन्नसामानाधिकरण्यस्य च प्रमेयत्वेऽक्षतत्वादिति भावः।

**अत इति।** तथा च 'सम्बन्धित्व'निवेशे 'कपिसंयोगी मेयत्वा'दित्यत्र तादात्म्येन कपिसंयोगिभेदस्यैव लक्षणघटकतया तदीयप्रतियोगितायां साध्यतावच्छेदककपिसंयोगावच्छिन्नत्वस्य,—साध्यतावच्छेदकतादात्म्यसम्बन्धावच्छिन्नत्वस्य च द्वयोः सत्त्वान्नातिव्याप्तिरित्याशयः। अग्रिमनिष्कर्षे 'प्रतियोगिसम्बन्धित्व'निवेशप्रयोजनप्रदर्शनमत्र कल्पे न समीचीनमित्यरुचिबीजं **केचिदि**त्युक्त्या सूचितम्।

'तद्विशिष्टस्ये'त्यादिविवक्षाप्रयोजनमाह—**नन्विति। अव्याप्तिरिति।** एकस्मिन्नेव कपिसंयोगाभावे गुणावच्छेदेन तत्प्रतियोगिकपिसंयोगाधिकरणावृत्तित्वस्य,—मूलावच्छेदेन वृक्षवृत्तित्वस्य च सत्त्वात्—'प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभाव'पदेन कपिसंयोगाभावस्य धर्त्तुं शक्यतया कपिसंयोग्येतद्वृक्षत्वादित्यत्राव्याप्तिरित्यर्थः। **प्रतियोगीति।** प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नाधिकरणनिरूपितवृत्तित्वाभावविशिष्टस्याभावस्येत्यर्थः।

ननु निरुक्तनिवेशे कथमव्याप्तिवारणमित्यत आह—**तथा चेति। संयोगवदिति।** कपिसंयोगवदित्यर्थः। **नाव्याप्तिरिति।** कपिसंयोगाभावप्रतियोगिनः कपिसंयोगस्याधिकरणीभूतवृक्षवृत्तित्वाभावविशिष्टकपिसंयोगाभावो न हेतुमति वृक्षे वर्त्तत इति—न कपिसंयोगाभावो लक्षणघटकः, अपि तु घटाभाव एव, तत्प्रतियोगिघटाधिकरणावृत्तित्वविशिष्टस्य घटाभावस्य हेतुमति वृक्षे वर्त्तमानत्वान्नाव्याप्तिरित्यर्थः।

ननु कपिसंयोगाधिकरणावृत्तित्वविशिष्टकपिसंयोगाभावो न शुद्धकपिसंयोगा-

जागदीशी

[1]विशिष्टनिरूपिताधेयत्वमप्यतिरिक्तमित्याशयेनेदम् ।

यद्वा—'तद्विशिष्टस्ये'त्यस्य 'हेत्वधिकरणे'ऽन्वयः, तत्र च षष्ठ्यर्थोऽधिकरणत्वं,—

तेन [2]तद्विशिष्टस्याधिकरणं यद्धेत्वधिकरणं तद्वृत्तित्वमभावे वाच्यमित्यर्थः ।

विवृतिः

भावाच्छिद्यते, विशिष्टस्य शुद्धानतिरेकात्, एवञ्च कपिसंयोगाभावे वृक्षवृत्तित्वसत्त्वे कपिसंयोगाधिकरणावृत्तित्वविशिष्टकपिसंयोगाभावेऽपि वृक्षवृत्तित्वमक्षतमेवेति 'तद्विशिष्टे'त्यादिनिवेशेऽपि नाव्याप्तिवारणं सम्भवतीत्यत आह—विशिष्टनिरूपितेति । विशिष्टस्य शुद्धानतिरिक्तत्वेऽपि विशिष्टनिष्ठाधेयत्वमतिरिक्तमेव, तथा च कपिसंयोगाभावनिष्ठवृक्षवृत्तितातः—कपिसंयोगाधिकरणावृत्तित्वविशिष्टकपिसंयोगाभावनिष्ठवृत्तितायाः भिन्नत्वात् कपिसंयोगाभावे वृक्षवृत्तित्वसत्त्वेऽपि न तादृशविशिष्टे वृक्षवृत्तित्वमिति कपिसंयोगाभावस्य लक्षणाघटकतया नाऽव्याप्तिरित्यभिप्रायः ।

विशिष्टनिष्ठाधेयतायाः शुद्धनिष्ठाधेयतातो भिन्नतायां विवादेऽपि विशिष्टाधिकरणतायाः शुद्धाधिकरणतातो वैलक्षण्ये विवादाभावात् 'तद्विशिष्टे'त्यादिग्रन्थं प्रकारान्तरेण व्याख्यातुं कल्पान्तरमाह—यद्वेति । तद्विशिष्टस्य = प्रतियोग्यधिकरणवृत्तित्वाभावविशिष्टस्य ।

समुदितार्थमाह—तेनेति । स्वप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नस्य यदधिकरणं तन्निरूपितवृत्तित्वाभावविशिष्टस्य यस्याभावस्याधिकरणं हेत्वधिकरणं भवति—हेत्वधिकरणवृत्तितादृशाभावप्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छेदके विवक्षणीयमिति निरुक्तग्रन्थतात्पर्यम् । एवं सति कपिसंयोग्येतद्वृक्षत्वादित्यत्र नाव्याप्तिगन्धोऽपि, कपिसंयोगाभावप्रतियोगिकपिसंयोगाधिकरणवृत्तित्वाभावविशिष्टस्य गुणवृत्तिकपिसंयोगाभावस्याधिकरणताया वृक्षेऽसत्त्वेन स्वपदेन कपिसंयोगाभावस्य धर्तुमशक्यत्वात् । घटाभावप्रतियोगिघटाधिकरणावृत्तित्वविशिष्टघटाभावस्याधिकरणताया वृक्षवृत्तित्वेन स्वपदेन घटाभावमादाय तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके कपिसंयोगत्वे सत्त्वादिति ध्येयम् ।

---

१. 'विशिष्टनिष्ठाधेयत्व'मिति कलिकातामुद्रितपुस्तकपाठः ।

२. 'प्रतियोगिसामानाधिकरण्याभावविशिष्टस्ये'ति काशी-कलिकातामुद्रित पुस्तकपाठः ।

जागदीशी

यद्यपि 'प्रतियोग्यसमानाधिकरणत्वं' हेतुविशेषणीकृत्य प्रतियोग्य-सामानाधिकरण्यविशिष्टो यो हेतुस्तदधिकरणवृत्त्यभावस्य प्रतियोगितानवच्छेदकत्वविवक्षयैव[1] 'संयोगी एतत्त्वा'दित्यादौ नाव्याप्तिसम्भव[2]:,

विवृतिः

मथुरानाथमतं दूषयितुमाशङ्कते—यद्यपीति । प्रतियोग्यसामानाधिकरण्य-विशिष्टः = प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नाधिकरण-वृत्तित्वाभावविशिष्टः, विवक्षयैवेति । 'स्वप्रतियोगितावच्छेदकसम्बन्धेन स्वप्रति-योगितावच्छेदकावच्छिन्नाधिकरणनिरूपितवृत्तित्वाभाववान् यो हेतुस्तदधिकरणवृत्ति यत् स्वं तत्प्रतियोगितानवच्छेदकते'त्यादिव्याख्ययैवेत्यर्थः ।

अथैतन्मते स्वप्रतियोग्यधिकरणवृत्तित्वं यदि सम्बन्धसामान्येन विवक्ष्यते, तदा 'स्पन्दो महाकालत्वा'दित्यत्र स्पन्दत्वाभावप्रतियोग्यधिकरणे स्पन्दे कालिकेन महाकालत्वस्य वर्त्तमानतया—साध्याभावस्य लक्षणाघटकत्वादतिव्याप्तिः ।

न च हेतुतावच्छेदकसम्बन्धेनैव तथात्वं वाच्यं, महाकालत्वस्य स्वरूपेण स्पन्देऽवर्त्तमानत्वादेव नातिव्याप्तिरिति वाच्यं, 'जातित्ववान् द्रव्यत्वात्,—धूमा-द्वे'त्यत्र जातित्वाभावप्रतियोग्यधिकरणीभूतायां जातौ समवायेन, संयोगेन च वृत्ति-त्वाप्रसिद्ध्या साध्याभावस्य लक्षणाघटकतयाऽभावान्तरमादायातिव्याप्त्यापत्तेरिति चेन्न । हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धेन स्वप्रतियोग्यधिकरणवृत्तित्वाभावस्य विवक्षितत्वाददोषः ।

न च 'द्रव्यं सत्त्वा'दित्यत्र द्रव्यत्वाभावप्रतियोगिमति द्रव्ये सत्ताया वृत्तित्वा-दभावान्तरमादायातिव्याप्तिरिति वाच्यम् । तादृशवृत्तित्वस्याव्याप्यवृत्तितया गुणा-वच्छेदेन द्रव्यत्ववद्वृत्तित्वाभावस्य सत्तायामक्षतत्वात् ।

न चैवं कपिसंयोगी—एतद्वृक्षत्वादित्यत्र कपिसंयोगाभावप्रतियोगिकपिसंयो-गवद्वृत्तित्वाभावस्य मूलावच्छेदेनैतद्वृक्षत्वे सत्त्वादव्याप्तिरिति वाच्यम्, स्वाधि-करणयत्किञ्चिदवच्छिन्नस्वप्रतियोग्यधिकरणवृत्तित्वाभाववद्वृत्त्यधिकरणकत्वस्य विव-क्षितत्वादिति ध्येयम् ।

न च तथापि 'गुणो गुणकर्मान्यत्वविशिष्टसत्त्वा'दित्यत्रातिव्याप्तिः, गुणत्वाभाव-प्रतियोग्यधिकरणे गुणे विशिष्टसत्ताया सत्त्वेन—साध्याभावस्य लक्षणाघटकत्वादिति-

---

१. 'व्याख्ययैवे'ति कलिकातामुद्रितपाठः, प्रतियोगितानवच्छेदकत्वं वाच्यं, तावतैवे'ति काशीमुद्रितपाठः ।

२. 'सम्भावना' इति काशी-कलिकातामुद्रितपाठः ।

जागदीशी

वृत्तस्य प्रतियोगिवैयधिकरण्यावच्छिन्नहेत्वधिकरणत्वाभावात्,—

तथाऽपि 'कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरण' इ-त्यग्रिममूलस्वरसेन 'हेतुसमानाधिकरणाभावस्यै'व विशेषणं 'प्रतियोग्य-समानाधिकरणत्व'दलमत एतावान् प्रयास इत्यवधेयम् ।

ननु भेदस्य व्याप्यवृत्तितया 'प्रतियोगिसमानाधिकरणभिन्नत्वो'क्तौ च प्रागुक्ताव्याप्तिवारणसम्भवे 'तद्विशिष्टस्ये' त्यादिकं विफलमत आह,—

विवृतिः

वाच्यं, 'स्वप्रतियोग्यधिकरणवृत्तितानवच्छेदकहेतुतावच्छेदकावच्छिन्नाधिकरणकत्व-स्या'भावे विवक्षणीयत्वादित्यलं पल्लवितेन ।

कपिसंयोगी—एतद्वृक्षत्वादित्यत्राव्याप्तिं वारयति—वृत्तस्येति । हेत्वधि-करणत्वाभावादिति । तथा च कपिसंयोग्येतद्वृक्षत्वादित्यत्र कपिसंयोगाभावो न लक्षणघटकः, कपिसंयोगाभावप्रतियोगि-कपिसंयोग-वद्वृत्तित्वाभावस्यैतद्वृक्षत्वेऽ-सत्त्वात्साध्याभावस्य धर्त्तुमशक्यत्वादिति भावः ।

दूषयति—तथापीति । न च "कर्मणि संयोगाभावः प्रतियोग्यसमानाधिकरण" इति मूलेन संयोगाभावरूपहेतोरपि प्रतियोगिवैयधिकरण्यं सम्भवति, 'द्रव्यं संयो-गाभावा'दित्यत्र कर्मावच्छेदेन द्रव्यत्वाभावप्रतियोगिद्रव्यत्ववति द्रव्ये संयोगाभावस्याव र्त्तमानत्वादित्यभावविशेषणपरमूलग्रन्थस्वरसमवलम्ब्यैतन्मतदूषणं न सम्भवतीति वाच्यं, 'संयोगी सत्त्वा'दित्यत्रातिव्याप्तिवारणायैव "कर्मणि संयोगाभावः प्रतियोग्यस मानाधिकरण" इत्यग्रिममूलस्योत्थितत्वेन प्रतियोगिवैयधिकरण्यमभावविशेषणमेवे-त्याशयेन निरुक्तदूषणस्य सम्भवात् । एतावान्प्रयास इति । 'तद्विशिष्टस्येत्यादि'-विवरणप्रयास इत्यर्थः ।

तद्वद्वृत्तित्वाद्यभिधानप्रयोजनमाह—नन्विति । व्याप्यवृत्तितया = स्वप्रतियो-गितावच्छेदकवति स्वरूपेणावर्त्तमानतया, प्रागुक्तेति । तथा च प्रतियोगिमद्वृत्ति भिन्नत्वस्य प्रतियोगिवैयधिकरण्यात्मकत्वे 'कपिसंयोगी एतत्त्वा'दित्यादौ नाव्याप्तिः, कपिसंयोगाभावस्य कपिसंयोगवद्वृत्तितया तादृशवृत्तिभिन्नत्वस्य तत्रासत्त्वेन साध्या-भावस्य लक्षणाघटकत्वादित्याशयः । तद्विशिष्टस्य = प्रतियोग्यधिकरणवृत्तित्वाभाव विशिष्टस्य ।

दीधितिः

**तद्वद्वृत्तिभिन्नत्वन्तु नार्थः,**

**अव्याप्यवृत्तिसाध्यकव्यभिचारिण्यतिप्रसङ्गात् ।**

**अत्र 'सामानाधिकरण्यवतो न तदभाववत्त्वं, प्रतीतेरन्यथैवो-**

जागदीशी

❀तद्वद्वृत्तीति❀ ।—प्रतियोगिमद्वृत्तिभिन्नत्वमित्यर्थः । ❀अत्रेति❀ ।—'अस्वरसा'दित्यन्वयः । ❀न तदभाववत्त्वमिति❀ ।—तथा च 'संयोगी सत्त्वा'दित्यादावतिव्याप्तिरिति भावः ।

ननु 'संयोगाभावे गुणे न संयोगसामानाधिकरण्य'मिति प्रतीतिबलादेव गुणावच्छेदेन संयोगाभावे प्रतियोगिसामानाधिकरण्याभावसत्त्वान्नातिव्याप्तिरत आह, ❀प्रतीतेरिति❀ ।—उक्तप्रतीतिस्तु संयोगाभाव-

विवृतिः

दीधितौ—**अव्याप्यवृत्तीति** । तथा च 'कपिसंयोगी सत्त्वा'दित्यत्र कपिसंयोगाभावस्य कपिसंयोगवद्वृत्तित्वेन प्रतियोगिवैयधिकरण्याभावादभावान्तरमादायातिव्याप्तिरतः 'प्रतियोगिवैयधिकरण्यं' प्रतियोगिमद्वृत्तिभिन्नत्वार्थकं भवितुं नार्हतीति तत्त्वम् । यत्र प्रतियोग्यधिकरणवृत्तित्वं तत्र न प्रतियोग्यधिकरणवृत्तित्वाभावो निरुक्तवृत्तितात्मकसामानाधिकरण्यस्य व्याप्यवृत्तित्वादित्याशयेन प्रतियोग्यधिकरणवृत्तित्वाभावार्थकप्रतियोगिवैयधिकरण्यकल्पेऽस्वरसं प्रदर्शयति—**अत्रेतीति** । अस्मिन् कल्प इत्यर्थः । सामानाधिकरण्यवतः = प्रतियोग्यधिकरणवृत्तितावतः, न तदभाववत्त्वं = न तादृशवृत्तित्वाभाववत्त्वं ।

**अतिव्याप्तिरितीति** । 'संयोगी सत्त्वा'दित्यत्र संयोगाभावरूपसाध्याभावे संयोगरूपप्रतियोग्यधिकरणवृत्तित्वसत्त्वेन न तादृशवृत्तित्वाभाव इति साध्याभावस्य लक्षणाघटकत्वादतिव्याप्तिरित्यर्थः ।

**प्रतीतेरि**त्यादिग्रन्थोत्थितौ बीजमाह—**नन्विति** । न संयोगसामानाधिकरण्यं= न संयोगवद्वृत्तित्वं, **नातिव्याप्तिरिति** । संयोगाभावे गुणावच्छेदेन संयोगवद्वृत्तित्वाभावसत्त्वात्तस्य प्रतियोगिव्यधिकरणतया लक्षणघटकत्वसम्भवान्न 'संयोगी सत्त्वा'दित्यत्रातिव्याप्तिरित्यर्थः ।

प्रतीतेरन्यथोपपादनमाह—**उक्तप्रतीतिस्त्विति** । संयोगाभावनिष्ठस्य = संयोगाभावे वर्त्तमानस्य, संयोगसामानाधिकरण्यस्य = संयोगाभावप्रतियोगिसंयोगवद्वृत्तित्वस्य, अवच्छेदकत्वाभावं = द्रव्यनिष्ठावच्छेदकत्वस्याभावं ।

दीधितिः

**पपादितत्वा'दित्यस्वरसात्—'प्रतियोगिवैयधिकरण्ये'त्यादिविशे-षणं वक्ष्यति,—तच्च हेत्वधिकरणे बोध्यं।**

जागदीशी

निष्ठस्य संयोगसामानाधिकरण्यस्यावच्छेदकत्वाभावमेव गुणादौ, संयोगानधिकरणीभूतगुणवृत्तित्वमेव वा संयोगाभावादाववगाहत इत्यर्थः, तथा चातिव्याप्तिस्तदवस्थैवेति भावः। वक्ष्यति, = मूलकारः। तच्च = तदपि।

*हेत्वधिकरण इति*।—तेन कपिसंयोगाभावस्य प्रतियोगिवैयधिकरण्यावच्छेदकीभूतगुणाद्यवच्छिन्नत्वेऽपि 'कपिसंयोग्येतत्त्वा'दित्यादौ नाव्याप्तिरिति भावः।

ननु हेत्वधिकरणे प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वं,—प्रतियोगिसामानाधिकरण्यानवच्छेदकीभूतहेत्वधिकरणवृत्तित्वमिति यावत्,

विवृतिः

**गुणादाविति।** **अवगाहत** इत्यनेनान्वयः। एवञ्च तादृशप्रतीतिर्न संयोगाभावे संयोगवद्वृत्तित्वाभावमवगाहत इत्येवमेवकारेण सूचितं,

ननु संयोगवद्वृत्तित्वार्थकसंयोगसामानाधिकरण्यस्य व्याप्यवृत्तितयाऽवच्छेदकत्वासम्भवात् तदवच्छेदकत्वाभावावगाहिन्या उक्तप्रतीतेर्भ्रमत्वापत्तिरत आह—**संयोगानधिकरणीभूतेति।** संयोगरूपप्रतियोग्यनधिकरणीभूतेत्यर्थः। **गुणवृत्तित्वमेवेति।** अत्राप्येवकारेण संयोगाभावे संयोगवद्वृत्तित्वाभावं नावगाहत इति सूचितं। **तदवस्थैवेतीति।** पूर्वोक्तरीत्या 'संयोगी सत्त्वा'दित्यत्रातिव्याप्तिरस्त्येवेत्यर्थः। तेन = हेत्वधिकरणे 'प्रतियोगिवैयधिकरण्य'विशेषणदानेन, **नाव्याप्तिरिति।** हेत्वधिकरणे प्रतियोगिवैयधिकरण्यविशेषणानुपादाने 'कपिसंयोग्येतत्त्वा'दित्यत्र कपिसंयोगाधिकरणवृत्तित्वाभावावच्छेदकगुणाद्यवच्छिन्नत्वस्य साध्याभावे कपिसंयोगाभावे सत्त्वात् तस्य च हेतुमति वृत्तित्वाद्भवत्यव्याप्तिरतः 'प्रतियोगिवैयधिकरण्यं' हेत्वधिकरणस्यैव विशेषणं, गुणस्य हेत्वधिकरणत्वाभावेन नाव्याप्तिरिति भावः।

प्रतियोग्यनधिकरणत्वार्थक'प्रतियोगिवैयधिकरण्य'स्य हेत्वधिकरणविशेषणत्वे बीजमाह—**नन्विति।** 'हेत्वधिकरण' इत्यादेः समुदितस्य परिष्कृतमर्थमाह—**प्रतियोगीति।** स्वप्रतियोगिनो यदधिकरणं तद्वृत्तित्वस्यानवच्छेदकत्वमेव हेत्वधिकरणे 'प्रतियोगिवैयधिकरण्य'मवसेयं, तादृशहेत्वधिकरणवृत्तित्वमभावे विशेषणमित्य-

दीधितिः

'प्रतियोग्यानधिकरणीभूतहेत्वधिकरणवृत्त्यभावे'ति पुनरभावान्तार्थनिष्कर्षः ।

ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्,—तत्सामान्यस्य,—

प्रतियोगितावच्छेदकयत्किञ्चिदवच्छिन्नस्य वा,—

जागदीशी

तच्च व्याप्यवृत्तेरवच्छेदकत्वविरहादप्रसिद्धं गुरुतरञ्चे त्यत आह,—❀प्रतियोग्यनधिकरणीभूतेति ॥१२॥

❀कस्य चिदिति❀ ।—'अनधिकरणत्व'मिति परेणान्वयः ।

विवृतिः

भावान्तग्रन्थार्थ इति ध्येयं, तच्चेति । तादृशानवच्छेदकत्वार्थकप्रतियोगिवैयधिकरण्यञ्चेत्यर्थः । व्याप्यवृत्तेः = प्रतियोगिसामानाधिकरण्यात्मकव्याप्यवृत्तेः

अप्रसिद्धमिति । अवच्छेदकाप्रसिद्ध्याऽनवच्छेदकमप्यप्रसिद्धमित्याशयः । ननु प्रतियोगिसामानाधिकरण्यमव्याप्यवृत्त्यैवेति केषां चिन्मतमतो न निरुक्तप्रतियोगिवैयधिकरण्यमप्रसिद्धमत आह—गुरुतरञ्चेति । तथा च हेत्वधिकरणविशेषणत्वेन निरुक्तप्रतियोगिवैयधिकरण्यस्य विवक्षणे महद्गौरवं स्यादतो नोक्तरीत्या तद्विवक्षणीयमित्याशयः ।

दीधितौ—तत्सामान्यस्येति । प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्येत्यर्थः । यत्किञ्चिदिति । प्रतियोगितावच्छेदकं यत्—यत्किञ्चित्—तदवच्छिन्नस्येत्यर्थः ।

आद्ये = हेत्वधिकरणे प्रतियोगितावच्छेदकावच्छिन्नयत्किञ्चिद्व्यक्त्यनधिकरणत्वनिवेशकल्पे, अव्याप्यवृत्तिसाध्यकेति । कपिसंयोगिसाध्यकैतद्वृक्षत्वहेताविन्यर्थः । अव्याप्तिरिति । कपिसंयोगाभावप्रतियोगितावच्छेदककपिसंयोगत्वावच्छिन्नयत्किञ्चिज्जलादिवृत्तिकपिसंयोगानधिकरणत्वस्य हेत्वधिकरण एतद्वृक्षे सत्त्वात् साध्याभावस्य प्रतियोगिव्यधिकरणतया लक्षणघटकत्वादव्याप्तिरित्यर्थः ।

अव्याप्तिमुपपादयति—एकेति [ शि० पृ० १२८ ] । एकस्य = कपिसंयोगाभावप्रतियोगितावच्छेदककपिसंयोगत्वावच्छिन्नवृक्षवृत्तिकपिसंयोगस्य, अधिकरणस्यापि = एतद्वृक्षस्यापि, तद्व्यक्त्यन्तरानधिकरणत्वात् = तादृशजलादिवृत्तिकपिसंयोगव्यक्त्यनधिकरणत्वात् ।

दीधितिः

————अनधिकरणत्वमुक्तम् ?

आद्ये—अव्याप्यवृत्तिसाध्यकाव्याप्तिः,—

एकप्रतियोग्यधिकरणस्यापि तद्व्यक्त्यन्तरानधिकरणत्वात्,

द्वितीये—'संयोगसामान्याभाववान्,– 'द्रव्यत्वाभाववान्,– वा सत्त्वा'दित्यादावतिव्याप्तिः,

जागदीशी

❀तद्व्यक्त्यन्तरेति❀ ।—प्रतियोगिव्यक्त्यन्तरेत्यर्थः । स्वमते संयोगसामान्याभावस्य केवलान्वयित्वात्तत्साध्यकसत्तादिकं सद्धेतुरेवातः साध्यान्तरमाह,—❀द्रव्यत्वाभावेति❀ ।

यद्यपि द्रव्यत्वाभावस्य व्याप्यवृत्तित्वात्तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशादिदमसङ्गतम् ;

न चात्र कालिकसम्बन्धावच्छिन्नद्रव्यत्वाभावः साध्यः, स च गुणाद्यवच्छेदेन काल एवाव्याप्यवृत्तिरिति वाच्यम् ;

विवृतिः

ननु प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्यानधिकरणत्वमुच्यतां, तावतैव कपिसंयोगी—एतद्वृक्षत्वादित्यत्राव्याप्तिवारणं सम्भवति, कपिसंयोगाभावप्रतियोगितावच्छेदककपिसंयोगत्वावच्छिन्नसामान्यानधिकरणत्वस्य वृक्षेऽसत्त्वादत आह—**द्वितीय इति** । हेत्वधिकरणे प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्व निवेशकल्प इत्यर्थः ।

साध्यान्तरानुसरणबीजमाह—**स्वमत इति** । दीधितिकारमत इत्यर्थः । केवलान्वयित्वात् = सर्वत्र सत्त्वात्, **सद्धेतुरेवेति** । तथा च निरुक्तसत्ताया लक्ष्यतया तत्रातिव्याप्त्यभिधानमसङ्गतं स्यादिति भावः ।

ननु द्रव्यत्वाभावस्य स्वरूपेण द्रव्यत्ववत्यवर्त्तमानतया व्याप्यवृत्तित्वात् तत्साध्यकसत्तारूपहेतौ प्रतियोगिवैयधिकरण्यघटितलक्षणस्याव्याप्त्यभिधानमसङ्गतमित्याशङ्कते—**यद्यपीति** । इदम् = अतिव्याप्तिदानम्, **असङ्गतमिति** । तथा च सत्त्ववति द्रव्ये द्रव्यत्वाभावाभावस्य सत्त्वात् प्रतियोगिवैयधिकरण्याघटितलक्षणस्य नातिव्याप्तिरित्याशयः ।

**न चेति** । **वाच्य**मित्यनेनान्वयः । गुणाद्यवच्छेदेन = द्रव्यत्वानधिकरणगुणाद्यवच्छेन, **अव्याप्यवृत्तिरिति** । एकस्मिन्नेव कालिकेन द्रव्यत्वस्य द्रव्यत्वानधि-

दीधितिः

**साध्याभाववतो द्रव्यस्य तत्प्रतियोगिसंयोगविशेषाभाववत्त्वात्,**

जागदीशी

तथा सति तस्य केवलान्वयित्वात्तत्साध्यकसत्त्वादेः सद्धेतुत्वेन तत्रातिव्याप्ते-रुपन्यासानौचित्यात्,—

तथाऽपि सत्त्वे हेतौ द्रव्यत्वाभावस्य व्यभिचारग्रहदशायामपि 'प्रति-योगिसामान्यानधिकरणसत्त्ववन्निष्ठाभावप्रतियोगितानवच्छेदकं द्रव्यत्वाभा-वत्व'मित्याकारकव्यापकताज्ञानादनुमित्यापत्तिरेवात्रा'तिव्याप्ति'शब्दार्थः।

वस्तुतो—द्रव्यत्वाभावस्यापि न प्रागुक्तव्याप्यवृत्तित्वमिति ध्येयम्।

प्रथमे साध्येऽतिव्याप्तिं [1]ग्राहयति, — ❀साध्याभाववत इति❀। ❀तत्प्रतियोगीति❀। तस्य = संयोगात्मनः साध्याभावस्य, यः प्रतियोगी =

विवृतिः

करणगुणाद्यवच्छेदेन कालिकसम्बन्धावच्छिन्नद्रव्यत्वाभावः स्वरूपेण वर्त्तत इत्य-व्याप्यवृत्तिरित्यर्थः।

कालिकेन द्रव्यत्वाधिकरणे यदि स्वरूपेण कालिकसम्बन्धावच्छिन्नद्रव्यत्वाभावो वर्त्तते,—तर्हि तस्य सर्वत्र सत्त्वेन सत्ताधिकरणेऽपि सत्त्वात् निरुक्तसत्तादेः सद्धेतु-त्वमेव, न तु व्यभिचारित्वमिति—तत्रातिव्याप्तिदानमनुचितमित्याशयेन समाधत्ते—**तथा सतीति**। कालिकसम्बन्धावच्छिन्नद्रव्यत्वाभावस्य साध्यत्वे सतीत्यर्थः, तस्य = कालिकेन द्रव्यत्वाभावस्य, केवलान्वयित्वात् = सर्वत्र सत्त्वात्।

'यद्यपी'त्यस्योत्तरं—**तथापीति**। व्यभिचारग्रहदशायां = द्रव्यत्ववद्वृत्तित्व-ज्ञानकाले, "द्रव्यत्वाभावत्वं सत्तावन्निष्ठाभावप्रतियोगितावच्छेदकम्" इत्याकारक-ज्ञानकाले वा, इत्याकारकव्यापकतावच्छेदकज्ञानात् = इत्याकारकव्यापकताज्ञानो-दयसम्भवात्, **अनुमित्यापत्तिरिति**। कारणसत्त्वे 'द्रव्यत्वाभाववान्' इत्या-कारकानुमित्यापत्तिरित्यर्थः।

ननु व्याप्यवृत्तितानवच्छेदकधर्मावच्छिन्नविधेयताकानुमितावेव निरुक्तज्ञानं कारणं, द्रव्यत्वाभावत्वं तु न व्याप्यवृत्तितानवच्छेदकमिति,—कुतस्तादृशद्रव्यत्वा-भावानुमित्यापत्तिः सम्भवतीत्यत आह—**द्रव्यत्वाभावस्यापीति। प्रागुक्तेति**। 'साध्यतावच्छेदकसम्बन्धेने'त्यादिना प्रागुक्तेत्यर्थः। **व्याप्यवृत्तित्वमितीति**। तथा च स्वरूपेण द्रव्यत्वाभाववति—जन्यगुणादौ—कालिकेन द्रव्यत्वाभावाभावस्य द्रव्यत्वात्मकस्य सत्त्वान्न तस्य प्रागुक्तव्याप्यवृत्तित्वमित्याशयः।

**प्रथमे साध्य इति**। संयोगसामान्याभावे साध्य इत्यर्थः। **साध्याभाववत**

---

१. 'योजयति' प्राचीनपुस्तकपाठः।

दीधितिः

नित्यत्वादिविशिष्टद्रव्यत्वाभावात्मक—तत्प्रतियोगिनोऽधिकरणत्वाच्च,

——स्वाभावाभावात्मकस्य,——

जागदीशी

संयोगविशेषाभावः, तद्वत्त्वादित्यर्थः।

द्वितीयेऽतिव्याप्तिं योजयति,—॥नित्यत्वादीति॥। नित्य[वृत्ति¹]-त्वविशिष्टं यद्द्रव्यत्वं, तदभावात्मको यः साध्याभावस्य प्रतियोगी, तदधिकरणत्वात्,—"साध्याभाववतो द्रव्यस्ये"—ति पूर्वेणान्वयः।

ननु विशिष्टद्रव्यत्वाभावो न द्रव्यत्वस्वरूपस्य साध्याभावस्य प्रतियोगी, किन्तु [नित्यत्वादि²]विशिष्टद्रव्यत्वस्यैवेति,—द्रव्यत्वं प्रतियोगिव्यधिकरणमेवेत्यत आह,—॥स्वाभावेति॥।—स्वं = नित्यवृत्तित्वविशिष्टद्रव्यम्।

विवृतिः

इति। संयोगाभावाभावरूपसंयोगवत इत्यर्थः। साध्याभावस्य = संयोगाभावाभावस्य, संयोगविशेषाभावः = तत्तत्संयोगाभावः, तद्वत्त्वादिति। तथा च 'संयोगसामान्याभाववान् सत्त्वा'दित्यत्र संयोगाभावाभावो न लक्षणघटकः, संयोगाभावाभाव-प्रतियोगि-तत्तत्संयोगाभावस्याधिकरणतायाः सत्ताधिकरणे द्रव्ये सत्त्वात्—तस्य प्रतियोगिव्यधिकरणत्वासम्भवादित्यभिप्रायः।

द्वितीये = द्रव्यत्वाभावे साध्ये, तदभावात्मकः = नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावात्मकः, साध्याभावस्य = द्रव्यत्वाभावाभावस्य, तदधिकरणत्वादिति। तथा च 'द्रव्यत्वाभाववान् सत्त्वा'दित्यत्र सत्ताऽधिकरणे द्रव्ये द्रव्यत्वाभावाभावो न लक्षणघटकः, द्रव्यत्वरूप-साध्याभाव-प्रतियोगिसामान्यान्तर्गतनित्यवृत्तित्व-विशिष्टद्रव्यत्वाभावस्याधिकरणताया जन्यद्रव्यरूपहेत्वधिकरणे,—तादृशस्य जन्य-वृत्तित्वविशिष्टद्रव्यत्वाभावस्याधिकरणतायाश्च नित्यद्रव्ये,—सत्त्वात्।

नन्विति। विशिष्टद्रव्यत्वाभावः = नित्यादिवृत्तित्वविशिष्टद्रव्यत्वाभावः। द्रव्यत्वमिति। तथा च द्रव्यत्वाभावाभावस्य द्रव्यत्वरूपस्य, यः प्रतियोगी = द्रव्यत्वाभावः, तदनधिकरणताया हेत्वधिकरणे—द्रव्ये—सत्त्वात् साध्याभावस्य लक्षणघटकतया कुतोऽतिव्याप्तिरित्याशयः।

दीधितौ—स्वाभावेति। नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावाभावात्मकस्ये-

१,२. [ ] एतच्चिह्नान्तर्गतः पाठो हस्तलिखितपुस्तके नास्ति।

दीधितिः

—विशिष्टस्यापि द्रव्यत्वस्य द्रव्यत्वानतिरेकात् ।

जागदीशी

न च नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावस्याभावो न नित्यवृत्तित्व-विशिष्टद्रव्यत्वं, विशिष्टस्यानतिरिक्ततया जन्यद्रव्येऽपि 'नित्यवृत्तित्वविशिष्ट-द्रव्यत्वस्याभावो नास्ती'ति प्रतीतिप्रसङ्गात्, किन्तु नित्यैकत्वादिक मेवेति नातिव्याप्तिरिति वाच्यम् ;—

विशिष्टाधिकरणतायाः प्रतीतिनियामकतयैवातिप्रसङ्गभङ्गे, द्रव्यत्वम-पेक्ष्य नित्यानन्तसङ्ख्या—परिमाणादौ तादृशाभावत्वकल्पनायां गौरवात्,—

विवृतिः

त्यर्थः । विशिष्टस्यापि = नित्यवृत्तित्वविशिष्टस्यापि, द्रव्यत्वानतिरेकादिति । साध्याभाव-द्रव्यत्वाभावाभाव- रूप-द्रव्यत्व-स्वरूपत्वादित्यर्थः ।

ननु नित्यवृत्तित्वविशिष्ट-द्रव्यत्वाभावाभावस्य नित्यवृत्तित्वविशिष्टद्रव्यत्व स्वरूपत्वे सत्येव तदात्मकसाध्याभावस्य द्रव्यत्वाभावाभावरूपद्रव्यत्वस्य प्रतियो-गित्वं नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावे सम्भवति, नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावा-भाव एव तु न नित्यवृत्तित्वविशिष्टद्रव्यत्वस्वरूपः, तस्य द्रव्यत्वस्वरूपतया जन्यद्रव्येऽपि द्रव्यत्वस्य सत्त्वात्—"जन्यद्रव्यं नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावा-भाववत्" इत्यपि प्रतीतिः स्यात्, अतो नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावाभावो नित्यैकत्वादिस्वरूप एव स्वीकर्त्तव्यः, तस्य च गुणस्वरूपतया न द्रव्यत्वाभावाभाव-रूपद्रव्यत्वस्वरूपत्वं सम्भवति, इति द्रव्यत्वरूपसाध्याभावस्य प्रतियोगित्वं न नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावे, तथा च कुतोऽतिव्याप्तिः, द्रव्यत्वरूपसाध्याभाव-प्रतियोगिनो द्रव्यत्वाभावस्यानधिकरणताया हेत्वधिकरणे द्रव्ये सत्त्वादित्याशङ्कते—न चेति ।

समाधत्ते—विशिष्टेति । नित्यवृत्तित्वविशिष्टद्रव्यत्वाधिकरणताया इत्यर्थः । प्रतीतिनियामकतया = "तादृशाधिकरणताया यत्र सत्त्वं तदेव नित्यवृत्तित्वविशिष्ट-द्रव्यत्वाभावाभाववत्" इत्याकारकप्रतीतिप्रयोजकतया, अतिप्रसङ्गभङ्गे = जन्यद्रव्ये निरुक्तप्रतीत्यापत्तिरूपातिप्रसङ्गाभावसम्भवे, द्रव्यत्वमपेक्ष्य = नित्यवृत्तित्वविशिष्ट-द्रव्यमपेक्ष्य, गौरवादिति । संख्यानां, परिमाणादीनाञ्चानन्त्यात्—तत्र नित्य-वृत्तित्वविशिष्टद्रव्यत्वाभावाभावत्वकल्पनेऽनन्ताभावत्वकल्पनापत्तिः स्यादिति भावः ।

ननु फलमुखगौरवं न दोषाय, निरुक्तातिव्याप्तिवारणार्थमीदृशं गौरवं

जागदीशी

—'अभावाभावस्यैव प्रतियोगित्व'मिति सिद्धान्तप्रवादाच्च ।

नन्वेवमपि निखिलाभावस्यैव स्वाश्रयतत्तद्व्यक्तिवृत्तित्वविशिष्टं यत् स्वं,—तदभावात्मकस्वप्रतियोगिना सह समानाधिकरणत्वात् प्रतियोगि-व्यधिकरणाभावाप्रसिद्ध्यैव नातिव्याप्तिः, एकव्यक्तिमात्रवृत्तीनां गुणाद्यात्मकाभावानामपि पूर्वक्षणवृत्तित्वविशिष्टस्य स्वस्य योऽभावः

विवृतिः

स्वीकरणीयमेवेत्यत आह—अभावाभावस्येति । तथा च नित्यवृत्तित्वविशिष्ट-द्रव्यत्वाभावाभावो यदि नित्यैकत्वादिस्वरूपः स्यात्तर्हि—अभावाभावत्वरूपप्रति-योगित्वं तादृशद्रव्यत्वे न स्यात्, अतो निरुक्तप्रतियोगित्वलक्षणाव्याप्त्यादिनिरासा-यैव नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावाभावो नित्यवृत्तित्वविशिष्टद्रव्यत्वस्वरूप एव, तथात्वे च तदभावस्य साध्याभाव–द्रव्यत्व–प्रतियोगिसामान्यान्तर्गततया पूर्वोक्त-रीत्या भवत्येवातिव्याप्तिरिति तात्पर्यमवसेयम् ।

निरुक्तरीत्याऽभावाप्रसिद्ध्याऽतिव्याप्तिर्न सम्भवतीत्याशङ्कते—नन्विति । निखि-लेति । हेतुसमानाधिकरणत्वेनाभिमतस्य सर्वस्यैवाभावस्येत्यर्थः । स्वाश्रयेति । स्वपदं हेतुसमानाधिकरणतत्तदभावपरम् । तदाश्रयं = तत्तदधिकरणीभूतभूतलादिकं-त्तद्व्यक्ति वृत्तित्वविशिष्टं, यत्, स्वं = हेतुसमानाधिकरणतत्तदभावव्यक्तिः, तद-भावात्मकः = हेतुसमानाधिकरणतत्तदभावाभावात्मको यः, स्वस्य = हेतुसमानाधि-करणीभूततत्तदभावव्यक्तेः,—प्रतियोगी, तेन सह समानाधिकरणत्वात् = तदधि-करणत्वस्य हेत्वधिकरणत्वे सत्त्वात् ।

नातिव्याप्तिरिति । तथा च 'द्रव्यत्वाभाववान् सत्त्वा'दित्यत्र हेतुसमानाधि-करणा ये घटाभावादयः, तत्तदधिकरणभूतलादिव्यक्तिवृत्तित्वविशिष्टघटाभावादेश्च घटाभावस्वरूपतया—घटाभावस्य प्रतियोगी यथा घटस्तथा तत्तद्भूतलादिवृत्ति-त्वविशिष्टघटाभावाभावोऽपीति—तदधिकरणताया हेत्वधिकरणे द्रव्ये सत्त्वात्तादृशा-भावाप्रसिद्ध्या नातिव्याप्तिरित्यर्थः । एवं—पटाभावादिस्थलेऽपि निरुक्तरीतिः स्वयमूहनीया ।

ननु गुणाभावाभावस्य गुणस्वरूपस्य द्रव्यत्वसमानाधिकरणाभावस्य प्रतियोगी यो गुणाभावः, तदनधिकरणत्वस्य हेत्वधिकरणे द्रव्ये सत्त्वात् कथं प्रतियोगिव्यधिकरणाभावाप्रसिद्धया 'द्रव्यत्वाभाववान् सत्त्वा'दित्यत्रातिव्याप्ति-वारणं सम्भवतीत्यत आह,—एकव्यक्तीति । द्रव्यमात्रवृत्तीनामित्यर्थः । गुणा-द्यात्मकानां = गुणस्वरूपाणां, स्वस्य=गुणस्वरूपाभावस्य, योऽभावः = पूर्व-

जागदीशी

तादृशप्रतियोगिना सार्द्धं सामानाधिकरण्यात् ।

न च वक्ष्यमाणखण्डशः प्रसिद्ध्या गगना[द्य] भाव एव प्रतियोगि-व्यधिकरणः,—

तस्यापि नित्य[वृत्ति]त्वविशिष्टो यो गगना[द्य]भावस्तदभावात्मकेन स्वप्रतियोगिना समं समानाधिकरणत्वात् ।

विवृतिः

क्षणवृत्तित्वविशिष्टगुणाभावः, तादृशप्रतियोगिना = तदात्मकप्रतियोगिना, सामानाधिकरण्यात् = तादृशप्रतियोगिनोऽधिकरणत्वात् ।

एवं च गुणस्वरूपस्याभावस्य पूर्वक्षणवृत्तित्वविशिष्टगुणस्वरूपतया गुणात्मकाभावप्रतियोगी यथा गुणाभावः, तथा पूर्वक्षणवृत्तित्वविशिष्टस्य गुणस्य योऽभावः सोपि, तथा च निरुक्तगुणात्मकाभावप्रतियोगिसामान्यान्तर्गतपूर्वक्षणवृत्तित्वविशिष्टगुणाभावरूपप्रतियोगिनोऽधिकरणताया हेत्वधिकरणे द्रव्ये सत्त्वान्निरुक्तगुणाद्यात्मकाभावोऽपि न प्रतियोगिव्यधिकरणः,—इति तादृशाभावाप्रसिद्ध्या 'द्रव्यत्वाभाववान् सत्त्वा'दित्यत्रातिव्याप्तिरस्त्येवेत्याशयः ।

ननु 'साध्यतावच्छेदकसम्बन्धसामान्ये' इत्याद्यग्रिमरीत्या 'प्रतियोगिवैयधिकरण्यं' गगनाभावे सम्भवति, स्वरूपसम्बन्धे हेत्वधिकरणीभूतद्रव्यानुयोगिकत्वसत्त्वेऽपि गगनाभावप्रतियोगि—गगन—प्रतियोगिकत्वविरहेणोभयाभावसत्त्वात् गगनाभावस्यैव लक्षणघटकतया कुतोऽतिव्याप्तिवारणमित्याशङ्कते—**न चेति** । अस्य 'प्रतियोगिव्यधिकरण' इत्यनेनान्वयः ।

**खण्डशः प्रसिद्ध्येति** । साध्यतावच्छेदकसम्बन्धसामान्ये,—यदभावप्रतियोगिसामान्यप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावः, स एवाभावः प्रतियोगिव्यधिकरण इत्यादिरीत्येत्यर्थः ।

समाधत्ते,—**तस्यापीति** । गगनाभावस्यापीत्यर्थः । स्वप्रतियोगिना=गगनाभावप्रतियोगिना, **समानाधिकरणत्वादिति** । तथा च साध्यतावच्छेदकीभूतस्वरूपसम्बन्धे,—गगनाभावप्रतियोगिसामान्यान्तर्गतनित्यादिवृत्तित्वविशिष्टगगनाभावाभावप्रतियोगिकत्वस्य, हेत्वधिकरणीभूतद्रव्याऽनुयोगिकत्वस्य चोभयोः सत्त्वान्न गगनाभावोऽपि वक्ष्यमाणरीत्या प्रतियोगिव्यधिकरण इति भावः ।

एवं—गगनाभावस्य संयोगेनाभावाभावस्वरूपतया गगनाभावप्रतियोगिसामान्यान्तर्गताभावरूपप्रतियोगिकत्वस्य, हेत्वधिकरणद्रव्यानुयोगिकत्वस्य च द्वयोः

जागदीशी

गगना[द्य]भावस्यैव संयोगादिसम्बन्धेनाभावत्वावच्छिन्नाभावतया खण्डशः प्रसिद्ध्याऽपि तस्य प्रतियोगिव्यधिकरणत्वासम्भवाच्च ।

एतेन—नित्यत्वादिविशिष्टस्य गगनात्यन्ताभावस्य योऽभावस्तद्भावत्वं न नित्यत्वविशिष्टगगना[द्य]भावस्य, तस्य केवलान्वयितया जन्येऽपि 'नित्यवृत्तित्वविशिष्टस्य गगनाभावस्याभावो नास्ती'ति प्रतीतिप्रसङ्गात्,—

—किन्तु नित्यत्वादेरेव तथात्वमित्युक्तावपि न निस्तारः इति चेत्,—

—अत्र नव्याः,—"यथाश्रुतस्य[1] प्रागुक्तक्रमेण प्रतियोगिव्यधिकरणाभावस्याप्रसिद्ध्या 'वह्निमान् धूमा'दित्यादौ सर्वत्रासम्भवः[2] स्यात् ।

विवृतिः

सत्त्वादपि गगनाभावो न वक्ष्यमाणरीत्या प्रतियोगिव्यधिकरण इत्याह—**संयोगादीति । अभावत्वेति ।** उभयोः केवलान्वयित्वात्समनियताभावत्वेनैक्यमित्याशयः ।

**एतेनेति ।** गगनाभावस्य संयोगेनाभावाभावप्रतियोगिनमादाय प्रतियोगिव्यधिकरणत्वासम्भवप्रदर्शनेनेत्यर्थः ।

**नित्यत्वादि**त्यादिना जन्यत्वपरिग्रहः । तस्य = गगनात्यन्ताभावस्य, **प्रतीतिप्रसङ्गादिति ।** तथा च नित्यवृत्तित्वविशिष्टगगनाभावस्य गगनाभावस्वरूपतया गगनाभावस्य केवलान्वयित्वेन जन्येऽपि सत्त्वात् जन्यं नित्यवृत्तित्वविशिष्टगगनाभावाभावाभावव'दित्यपि प्रतीतिः स्यादित्याशयः ।

**किन्त्विति ।** तथा च नित्यत्वस्वरूपस्य तादृशगगनाभावाभावाभावस्य न गगनाभावस्वरूपत्वमतो न गगनाभावस्य प्रतियोगित्वं नित्यवृत्तित्वविशिष्टगगनाभावाभावे इति कुतोऽतिव्याप्तिवारणमित्युक्तावपि न निस्तार इत्यर्थः ।

**अत्रेति ।** निरुक्तक्रमेण प्रतियोगिव्यधिकरणाभावाप्रसिद्धौ सत्यामित्यर्थः । यथाश्रुतस्य = 'प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्व'शब्दप्रतिपाद्यस्य प्रतियोगिवैयधिकरण्यस्य, प्रागुक्तक्रमेण='स्वाश्रयतत्तद्व्यक्ती'त्याद्युक्तरीत्या, **असम्भवः स्यादिति ।** 'वह्निमान् धूमा'दित्यादौ हेतुसमानाधिकरणघटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टघटाभावात्मकतया घटाभावप्रतियोगित्वं यथा घटे, तथा पूर्वक्षणादिवृत्तित्वविशिष्टघटाभावाभावेऽपीति—प्रतियोगिसामान्यान्तर्गतपूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावाधिकरणताया धूमाधिकरणे पर्वतादौ सत्त्वात् प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽसम्भव इत्यर्थः ।

---

१. 'यथाश्रुते'इति तालपत्रलिखितपुस्तके पठ्यते ।

२. 'सर्वत्राव्याप्तिः स्या'दिति प्राचीनलिखितपुस्तकपाठः ।

जागदीशी

अतो—यत्किञ्चित्स्वप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं तादृश-सम्बन्धेन—स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यत् साधनाधिकरणं,—तन्निष्ठाभावस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रति-योगितानवच्छेदकत्वमेव लक्षणे [साध्यतावच्छेदके] प्रवेशनीयम्;—

तथा च सद्धेतुस्थल इव 'द्रव्यत्वाभाववान् सत्त्वा'दित्यत्रापि संयो-गेन घटाद्यभाव एव प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः,

विवृतिः

न च व्याप्यवृत्तिसाध्यकस्थले—अयमात्मा ज्ञानादित्यादौ—लक्षणसम-न्वयसम्भवात् कथमसम्भवः सम्भवतीति वाच्यम्। प्रतियोगिवैयधिकरण्य-घटितलक्षणेऽसम्भवस्यैवाभिहितत्वेन व्याप्यवृत्तिसाध्यके लक्षणसमन्वयसम्भवेऽपि क्षतिविरहात्।

अतः = निरुक्तरीत्याऽसम्भवादेव, **यत्किञ्चिदिति**। अस्य 'स्वप्रतियोगित्वे'-ऽन्वयः, स्वपदं हेतुसमानाधिकरणत्वेनाभिमततत्तदभावव्यक्तिपरम्। यादृश सम्बन्धावच्छिन्नं = यद्रूपावच्छिन्नसंसर्गावच्छिन्नं, तादृशसम्बन्धेन = तद्रूपावच्छिन्न-संसर्गेण,

**स्वप्रतियोगितेति**। अत्रापि स्वपदं तादृशाभावव्यक्तिपरं। साधनाधि-करणं = हेत्वधिकरणं, तन्निष्ठाभावस्य = हेत्वधिकरणनिष्ठाभावस्य, स्वपदोपात्तस्य तत्तदभावस्येति यावत्। लक्षणे=लक्षणघटके।

**सद्धेतुस्थल इवेति**। यथा सद्धेतुस्थले 'वह्निमान् धूमा'दित्यत्र स्वपदेन घटाभावमुपादाय तत्प्रतियोगित्वस्य संयोगसम्बन्धावच्छिन्नतया तादृशसंयोग-सम्बन्धेन घटाभावप्रतियोगिसामान्यं यत् घटादिकं तदनधिकरणताया धूमा-धिकरणे पर्वतादौ सत्त्वाल्लक्षणसमन्वयः,—

'स्वप्रतियोगि'पदेन तत्तद्व्यक्तिवृत्तित्वविशिष्टघटाभावाभावादिकन्तु न धर्त्तुं शक्यते, तस्य संयोगेनाधिकरणत्वाप्रसिद्धेरिति निरुक्तरीत्या घटाभावस्यैव

दीपिका

**यत्किञ्चित्स्वप्रतियोगित्वमिति**। हेत्वधिकरणवृत्तिप्रतियोगितानवच्छेदक-साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमित्यर्थः, वृत्तित्वञ्च,—स्वविशिष्टनिरूपकता-काधिकरणतावच्छेदकूटवत्त्वसम्बन्धेन।

वैशिष्ट्यञ्च,—स्वावच्छेदकसम्बन्धावच्छिन्नत्व, स्वनिरूपकाभावप्रतियोगितावच्छे-दकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन।

जागदीशी

तदीयं [हि] घटनिष्ठप्रतियोगित्वं यादृशसंयोगसम्बन्धेनावच्छिन्नं तादृश-संयोगसम्बन्धसामान्येन साधनवतो द्रव्यस्य तदीयप्रतियोगितावच्छेदका वच्छिन्नसामान्यानधिकरणत्वमक्षतमेव ।

न चैवमपि तदीयस्य साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्न-प्रतियोगित्वस्याप्रसिद्ध्या न दोषसङ्गतिः, पूर्वक्षणवृत्तित्वादिविशिष्ट[स्य] घटाद्यभावस्याभाव एव तत्प्रसिद्धेः"—इत्याहुः ।

विवृतिः

लक्षणघटकत्वं, तथेत्यर्थः । तदीयं = घटाभावीयं, अक्षतमेवेति । तथा च घटाभावप्रतियोगिसामान्यान्तर्गततत्तद्व्यक्तिवृत्तित्वविशिष्टघटाभावाभावस्य संयोगेनाधिकरणाप्रसिद्ध्या घटस्यैव 'प्रतियोगिसामान्य'पदेन धर्त्तव्यतया तदनधिकरणत्वस्य हेत्वधिकरणे द्रव्ये सत्वाद्भवति 'द्रव्यत्वाभाववान् सत्त्वा'दित्यत्रातिव्याप्तिरिति भावः ।

न चोक्तकल्पे 'स्वप्रतियोगित्वं यत्सम्बन्धावच्छिन्न'मित्यनुक्त्वा 'यादृशसम्ब-न्धावच्छिन्न'मित्याद्यभिधानस्यासङ्गतत्वमिति वाच्यम् ।

'संयोगी नित्यद्रव्यत्वा'दित्यत्र समवायेन संयोगाभावप्रतियोगिसंयोगसामान्यस्य समवाय-कालिकोभयसम्बन्धेनाधिकरणं यज्जन्यद्रव्यादि तद्भिन्नत्वस्य हेत्वधिकरणे नित्यद्रव्ये सत्त्वात् साध्याभावस्य लक्षणघटकतयाऽव्याप्तिप्रसङ्गादिति ध्येयम् ।

साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य प्रतियोगितायामनुपादाने—समवायेना-भावमादाय 'वह्निमान्धूमा'दित्यत्राव्याप्तिः स्यादतस्तदुपात्तम् ।

**न चेति । दोषसङ्गति**रित्यनेनान्वयः । एवमपि = संयोगेन घटाभावस्य निरुक्तरीत्या लक्षणघटकत्वेपि, तदीयस्य = घटाभावनिरूपितस्य, न दोषसङ्गतिः= नातिव्याप्तिसम्भव इत्यर्थः ।

समाधत्ते—**पूर्वक्षणेति** । तथा च संयोगेन घटाभावस्य पूर्वक्षणवृत्तित्वादि-विशिष्टघटाभावात्मकतया पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावेऽपि घटाभाव-निरूपितस्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वप्रसिध्या घटाभावस्यैव लक्षणघटकतयाऽ-तिव्याप्तिसङ्गतिरित्याशयः । तत्प्रसिद्धेः = साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छि-न्नप्रतियोगित्वप्रसिद्धेः । **आहुरित्य**स्वरससूचनाय, तद्बीजन्तु निरुक्तप्रतियोगिवैय-धिकरण्यस्य स्वत्वघटितत्वेनाऽननुगतत्वमिति, न च संसर्गमुद्रयाऽनुगतत्वं सम्भवती-ति वाच्यं, तादृशसंसर्गस्यानभ्युपगमादिति ध्येयम् ।

जागदीशी

## तृतीये—'कपिसंयोगाभाववान्—

जागदीशी

"—स्वावच्छेदकसम्बन्धावच्छिन्न [ स्वनिरूपकाभाव[1] ] प्रतियोगि-सामान्यानधिकरणीभूत-हेत्वधिकरण-वृत्त्यभाव-प्रतियोगितासामान्ये,—

'यत्सम्बन्धावच्छिन्नत्व-यद्धर्मावच्छिन्नत्वोभयाभाव' इत्यग्रिमलक्षणा-भिप्रायेणेदं, संयोगेन घटाद्यभावस्यैव प्रतियोगिवैयधिकरण्यसौलभ्या'दि-त्यपि—" वदन्ति ।

[तृतीये चाव्याप्तिं दर्शयति[2]-]※कपीति※। प्राचां मते संयोगसामान्या-भावसाध्यकमात्मत्वं विरुद्धमतः,—'कपिसंयोगसामान्यभाव' उक्तः, ।

विवृतिः

प्रकारान्तरेणातिव्याप्तिं सङ्गमयतां मतमाह—**स्वावच्छेदकेति** । स्वं=प्रति-योगिता, एवमग्रेऽपि। यत्सम्बन्धावच्छिन्नत्व–यद्धर्मावच्छिन्नत्वोभयाभावः= साध्य-तावच्छेदकसम्बन्धावच्छिन्नत्व,—साध्यतावच्छेदकधर्मावच्छिन्नत्वोभयाभावः, इदं= अतिव्याप्तिदानं ।

**सालभ्यादिति** । तथा च 'संयोगेन घटो नास्ती'त्यभावीयप्रतियोगिताव-च्छेदकसंयोगसम्बन्धेन घटसामान्यानधिकरणहेत्वधिकरणद्रव्यनिष्ठताद्दशघटाभावीय-प्रतियोगितासामान्ये,— साध्यतावच्छेदकस्वरूपसम्बन्धावच्छिन्नत्व,— साध्यताव-च्छेदकद्रव्यत्वाभावत्वावच्छिन्नत्वोभयोरेवाभावसत्त्वात् घटाभावस्यैव प्रतियोगि-वैयधिकरण्यसम्भवेन लक्षणसमन्वयादतिव्याप्तिरित्याशयः ।

**'वदन्ती'**त्यस्वरससूचनाय, तद्बीजन्तु—अग्रिमलक्षणाभिप्रायेणातिव्याप्तेरभि-प्रेतत्वे नन्वित्याद्याशङ्काया अग्रिमाया दीधितिकृदुक्ताया निर्बीजत्वापत्तिरिति ध्येयम्।

तृतीये=प्रतितयोगितावच्छेदकं यत्किञ्चित्तदवच्छिन्नानधिकरणत्वस्य हेत्वधिकरणे निवेशकल्पे, **विरुद्धमिति** । संयोगाभावासमानाधिकरणमित्यर्थः । तथा च प्राचीनैर्द्रव्ये संयोगसामान्याभावस्यानभ्युपगमात् संयोगसामान्याभावसाध्य-कात्मत्वस्य सर्ववादिसिद्धसद्धेतुत्वं न सम्भवति, अतः सर्ववादिसिद्धसद्धेतुत्व-प्रदर्शनाय संयोगसामान्याभावस्य साध्यत्वमुपेक्ष्य 'कपिसंयोगसामान्याभावस्य' साध्यत्वमुक्तम् ।

ननु वृक्षत्वहेतोरपि सद्धेतुतया तदधिकरणस्यापि कपिसंयोगरूपसाध्या-भावस्य गुणस्य प्रतियोगितावच्छेदकं यद्गुणाभावत्वं तदवच्छिन्नानधिकरणत्वात्

१, २. [ ] एतदन्तर्गतः पाठो हस्तलिखितपुस्तके नास्ति ।

दीधितिः

——आत्मत्वा'दित्यादावव्याप्तिः,

जागदीशी

वृक्षादावुत्पत्तिकालावच्छेदेन गुणसामान्याभावसत्त्वाद् वृक्षत्वादिकं हेतुं परित्यज्यात्मत्वं हेतुरुक्तः ।

यद्यपि—वृक्षादेः स्वसमवेतकपिसंयोगसामान्यस्वरूपाभावप्रतियोगिनः

विवृतिः

वृक्षत्वेऽप्यव्याप्तिसम्भवे आत्मत्वस्य हेतुत्वाभिधानमसङ्गतमत आह,—वृक्षादावुत्पत्तीति ।

**गुणसामान्याभावेति** । तथा च वृक्षत्वस्य हेतुत्वेऽव्याप्तिरेव न सम्भवति, तदधिकरणे वृक्षे कपिसंयोगरूपसाध्याभाव—गुणस्वरूपाभाव—प्रतियोगितावच्छेदकगुणाभावत्वावच्छिन्नस्योत्पत्तिकालावच्छेदेनाधिकरणत्वस्य सत्त्वात् साध्याभावस्य कपिसंयोगस्य लक्षणाघटकत्वात् ।

ननु वृक्षत्वस्यापि हेतुत्वेऽव्याप्तिः सम्भवति, वृक्षत्वाधिकरणे वृक्षे कपिसंयोगरूपसाध्याभावस्य कपिसंयोगस्य समवेतात्मकस्य यत्किञ्चित्प्रतियोगितावच्छेदकं यत् समवेतसामान्याभावत्वं, द्रव्यमात्रसमवेताभावत्वं वा—तदवच्छिन्नानधिकरणतायाः सत्त्वात् कपिसंयोगात्मकसाध्याभावस्य प्रतियोगिव्यधिकरणत्वेन लक्षणघटकत्वादित्याशङ्कते—**यद्यपीति** । वृक्षादेः = वृक्षत्वरूपहेत्वधिकरणस्य, **स्वसमवेतेति** । वृक्षसमवेतेत्यर्थः । **स्वसमवेतेत्यनेन** कपिसंयोगप्रतियोगित्वं समवेतसामान्याभाव आविष्कृतम् ।

दीपिका

**वृक्षत्वं परित्यज्येति** । ननु कपिसंयोग—वृक्षत्वान्यतराभावाभावस्यान्यतरस्वरूपस्य कपिसंयोगस्वरूपतया साध्याभावकपिसंयोगप्रतियोगितावच्छेदकतादृशान्यतराभावत्वावच्छिन्नानधिकरणताया वृक्षे सत्त्वाद्वृक्षत्वहेतुकस्थलेऽव्याप्तिसम्भवे आत्मत्वस्य हेतुत्वानुसरणं निरर्थकं, न च कपिसंयोग—वृक्षत्वान्यतराभावाभावो नान्यतरस्वरूपोऽपि तु वृक्षत्वस्वरूप एवेति वाच्यम् । 'कपिचरणं तादृशान्यतराभावाभाववदित्यादिप्रत्ययानुपपत्तेरिति चेन्न ।

वृक्षत्व—कपिसंयोगान्यतराभावाभावस्यातिरिक्ताभावस्वरूपत्वाभ्युपगमात्, एवञ्च तस्यान्यतरस्वरूपत्वेऽनुगतत्वासम्भवात् न साध्याभावस्य कपिसंयोगस्य प्रतियोगितावच्छेदकत्वं तादृशान्यतराभावत्वे सम्भवतीत्यतो वृक्षत्वरूपहेतुं परित्यज्यात्मत्वं हेतुरुक्तः ।

दीधितिः

**साध्याभावानां कपिसंयोगानां गुणानामधिकरणस्यात्मनस्तत्प्रतियोगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वात्।**

जागदीशी

समवेतसामान्याभावस्य, द्रव्यमात्रसमवेताभावस्य चानधिकरणत्वाद्वृक्षत्वादेरपि हेतुतायामव्याप्तिः सम्भवत्येव,—

तथाऽपि—सत्ता–द्रव्यत्वयोरेव समवेताभाव–द्रव्यमात्रसमवेताभावयोरभावत्वं, लाघवात्, न तु कपिसंयोगा[द्या]त्मकसमवेतमात्रस्य तथात्वं, गौरवादित्याशयः।

गुणसामान्याभावस्य संयोग[स्वरूपाभाव]प्रतियोगित्वमाविष्कर्त्तुं—'गुणाना'मित्युक्तम्।

❀तत्प्रतियोगिवेति❀।—कपिसंयोगीयप्रतियोगितावच्छेदकेत्यर्थः।

विवृतिः

**अनधिकरणत्वादित्यस्य—वृक्षादेरिति** पूर्वेणान्वयः।

समाधत्ते—**तथापीति। सत्ता—द्रव्यत्वयोरेवेति**। तथा च क्रमेण समवेताभावाभावोऽत्र सत्तास्वरूपः, द्रव्यमात्रसमवेताभावाभावश्च द्रव्यत्वस्वरूप एवेति भावः।

**लाघवादिति।** सत्ता-द्रव्यत्वयोर्जातित्वेन लाघवादित्यर्थः, तथात्वं = समवेताभावाभावत्वं, द्रव्यमात्रसमवेताभावाभावत्वं वा, **गौरवादिति।** समवेतस्य नानात्वादित्याशयः।

एवञ्च साध्याभावकपिसंयोगस्वरूपत्वं न सत्तारूपसमवेताभावाभावस्य, द्रव्यत्वरूपद्रव्यमात्रसमवेताभावाभावस्य वेति—न कपिसंयोगरूपसाध्याभावप्रतियोगित्वं समवेताभावादौ सम्भवति, अतो गुणाभावादेरेव तादृशकपिसंयोगप्रतियोगितया तदधिकरणत्वस्योत्पत्तिकालावच्छेदेन वृक्षादौ सत्त्वात् साध्याभावो न लक्षणघटकः, अतो वृक्षत्वहेतुं परित्यज्यात्मत्वस्य हेतुत्वमभिहितमिति तात्पर्यम्।

**गुणानामित्युक्तिं** समर्थयते—**गुणसामान्याभावस्येति।** संयोगस्वरूपाभावप्रतियोगित्वं = कपिसंयोगरूपसाध्याभावप्रतियोगित्वं, **गुणानामिति।** तथा च साध्याभावकपिसंयोगस्वरूपत्वं यदि गुणस्वरूपाभावस्य सम्भवति,—तदैव कपिसंयोगरूपाभावप्रतियोगितावच्छेदकत्वमपि गुणसामान्याभावत्वस्य सम्भवतीति भावः।

**कपिसंयोगीयेति।** साध्याभाव-कपिसंयोग-निरूपितप्रतियोगितावच्छेदकेत्यर्थः।

जागदीशी

न च गुणसामान्याभावस्याभावो द्रव्यत्वमेव, लाघवात्, न तु गुणो, गौरवादतः संयोगप्रतियोगित्वं न गुणसामान्यभावस्येति वाच्यम्; घटादावुत्पत्तिदशायां गुणसामान्याभावस्यैव सत्त्वेन द्रव्यत्वस्य तदभावत्वासम्भवात्,—

अभावाभावस्य प्रतियोगित्वनियमाच्चेति भावः।

विवृतिः

ननु गुणसामान्याभावाभावो न गुणः, तेषामानन्त्येन गौरवात्, लाघवात् गुणसामान्याभावाभावो द्रव्यत्वमेव, तस्य च कपिसंयोगरूपसाध्याभावभिन्नतया कपिसंयोगप्रतियोगित्वं न गुणसामान्याभावे सम्भवतीति कुतोऽव्याप्तिरित्याशङ्कते—न चेति। 'वाच्य'मित्यनेनान्वयः। लाघवादिति। द्रव्यत्वस्य जातित्वेनेत्याशयः। गौरवादिति। गुणानामानन्त्येन गौरवं स्पष्टमेवेत्याशयः। संयोगप्रतियोगित्वं = कपिसंयोगप्रतियोगित्वं।

समाधत्ते—घटादाविति। तथा च गुणसामान्याभावाभावस्य द्रव्यत्वस्वरूपत्वे 'उत्पत्तिकालीनघटो गुणसामान्याभावाभावाभाववा'निति प्रतीत्यपलापापत्तेः, उत्पत्तिकालेऽपि घटादौ द्रव्यत्वस्य सत्त्वात्, अतः गुणसामान्याभावाभावो गुण एव, तस्य चोत्पत्तिकाले घटादावसत्त्वेन तादृशप्रतीतिः सम्भवत्येवेत्याशय इति केचित्।

अन्ये तु"—'उत्पत्तिकालीनघटो गुणसामान्याभावाभाववान्' इति प्रतीतिवारणाय गुणसामान्याभावाभावस्य द्रव्यत्वस्वरूपत्वं न सम्भवति, तथात्वे तस्योत्पत्तिकालदशायामपि घटादौ सत्त्वेन तादृशप्रतीत्यापत्तेर्दुर्वारत्वादित्यपि" वदन्ति।

ननूत्पत्तिकालीनघटे गुणसामान्याभावाभावाभावो नाङ्गीक्रियत एव, गुणसामान्याभावमात्रस्यैव तत्राभ्युपेयत्वात्,

एवं—गुणसामान्याभावस्याव्याप्यवृत्तित्वे तदभावोऽपि घटादाविष्ट एवातो गुणसामान्याभावाभावस्य द्रव्यत्वस्वरूपत्वेऽपि न क्षतिरित्यत आह—अभावाभावस्येति।

प्रतियोगित्वनियमादिति। "अभावाभावत्वमेव वस्तुनिष्ठप्रतियोगित्व"मिति प्रतियोगित्वलक्षणं गुणेऽव्याप्तं, गुणसामान्याभावाभावत्वस्य भवन्मते गुणे विरहात्,—

अतिव्याप्तं च द्रव्यत्वे, गुणाभावाभावत्वस्य द्रव्यत्वे सत्त्वात्—अतः गुणाभावाभावो गुणस्वरूप एवेति न्यायसिद्धान्तोऽवसेयः।

दीधितिः

मैवम् ; ———

यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तदनवच्छेदकत्वस्योक्तत्वात् ॥१३॥

जागदीशी

❀यादृशेति❀। तथा च गुणसामान्याभावनिष्ठप्रतियोगिताया अवच्छेदकं यद्गुणसामान्याभावत्वं हेतुमतस्तदवच्छिन्नानधिकरणत्वेऽपि,—कपिसंयोगाभावत्वस्य तादृशप्रतियोगितानवच्छेदकत्वात्तद्रूपेण[1] साध्यतायामात्मत्वहेतौ नाव्याप्तिः।

'द्रव्यत्वाभाववान् सत्त्वा' दित्यादौ तु द्रव्यत्वाभावत्वावच्छिन्नानधि-

विवृतिः

तथा च 'कपिसंयोगाभाववान् आत्मत्वा'दित्यत्र तृतीयकल्पेऽव्याप्तिः, आत्मत्वरूपहेतोरधिकरण आत्मनि वर्त्तमानस्य कपिसंयोगाभावाभावस्य कपिसंयोगस्वरूपस्य गुणात्मकस्य,—प्रतियोगितावच्छेदकत्वं गुणस्वरूपाभावप्रतियोगितावच्छेदके गुणाभावत्वे, तदवच्छिन्नस्यानधिकरणतायाः हेत्वधिकरणे आत्मनि सत्त्वात्—साध्याभावस्य कपिसंयोगस्य लक्षणघटतया -तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके कपिसंयोगाभावत्वे सत्त्वादिति परमार्थः।

नन्विति पूर्वपक्षस्य समाधानं दीधितौ—**मैवमिति। यादृशेति।** स्वनिरूपितयादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावीयतादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यर्थः पर्यवसितः।

निरुक्तनिवेशे सन्निहितां 'कपिसंयोगाभाववान् आत्मत्वा'दित्यत्राव्याप्तिमादौ वारयति—**तथा चेति।** हेतुमतः=हेत्वधिकरणस्य आत्मनः, तदवच्छिन्नानधिकरणत्वेऽपि=गुणसामान्याभावत्वावच्छिन्नानधिकरणत्वेऽपि, तादृशप्रतियोगितानवच्छेदकत्वात्= कपिसंयोगाभावत्वावच्छिन्नप्रतियोगितानवच्छेदकत्वात्, तद्रूपेण=कपिसंयोगाभावत्वेन रूपेण, 'यादृशप्रतियोगिता'पदेन गुणसामान्याभावनिष्ठप्रतियोगिताया धर्त्तुं शक्यत्वेऽपि तादृशप्रतियोगितावच्छेदकं गुणसामान्याभावत्वमेव न तु कपिसंयोगसामान्याभावत्वमिति न 'कपिसंयोगाभाववानात्मत्वा'दित्यत्राव्याप्तिरित्यर्थः।

---

१. 'ताद्रूप्येणे'ति क्वचित्पाठः।

जागदीशी

करणं यद्धेतुमत् तन्निष्ठाभावस्य तादृशप्रतियोगितावच्छेदकमेव द्रव्यत्वाभावत्वमतो नातिव्याप्तिरिति भावः ।

[न[१] च 'वह्निमान् तत्पर्वतत्वा'दित्यादौ तत्तद्वह्निसंयोगसम्बन्धेन साध्यतायामव्याप्तिः, तत्सम्बन्धावच्छिन्नघटाद्यभावप्रतियोगिनस्तेन सम्बन्धेनाधिकरणाप्रसिद्धेरिति वाच्यम्;—

यत्प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपितस्वरूपसम्बन्धेन—'यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभाववत्त्वं हेतुमतस्तेन सम्बन्धेन तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात्,—

घटत्वावच्छिन्नाधिकरणतासामान्यस्यैव तत्तद्वह्निनिपितसंयोगसम्बन्धावच्छिन्नाधिकरणतानिरूपितस्वरूपसम्बन्धेनाभावस्य हेतुमति सत्त्वेन तादृशसम्बन्धेन घटाद्यभावस्यैव प्रतियोगिव्यधिकरणत्वसम्भवात्;

निरुक्ताधिकरणत्वाऽभावत्वञ्च हेतुमतो निरवच्छिन्नविशेषणतयैव वाच्यमतः कपिसंयोगाधिकरणत्वाभावस्य वृक्षवृत्तित्वेऽपि तत्साध्यके एतद्वृक्षत्वादिहेतौ नाव्याप्तिः । ]

विवृतिः

द्वितीयकल्पोक्तदूषणमुद्धरति—द्रव्यत्वाभाववानिति । यद्धेतुमत् = द्रव्यं, तन्निष्ठाभावस्य = तादृशद्रव्यनिष्ठाभावस्य, तादृशप्रतियोगितावच्छेदकमेव = द्रव्यत्वाभावत्वावच्छिन्नप्रतियोगितावच्छेदकमेव,

नातिव्याप्तिरितीति । तथा च नित्यवृत्तित्वविशिष्टाभावाधिकरणत्वस्य द्रव्ये सत्वात् 'यादृशप्रतियोगिता'पदेन द्रव्यत्वाभावत्वावच्छिन्नप्रतियोगिताया एव धर्त्तुं शक्यतया तादृशप्रतियोगितावच्छेदकत्वस्य द्रव्यत्वाभावत्वरूपसाध्यतावच्छेदके सत्त्वादिति भावः ।

एवं 'कपिसंयोगि एतद्वृक्षत्वा'दित्यत्रापि कपिसंयोगत्वावच्छिन्नाधिकरणताया एतद्वृक्षे सत्त्वात् 'यादृशप्रतियोगिता'पदेन कपिसंयोगत्वावच्छिन्नप्रतियोगिताया धर्त्तुमशक्यतया घटत्वावच्छिन्नप्रतियोगितां 'यादृशप्रतियोगिता'पदेनोपादाय तदनवच्छेदकतायाः कपिसंयोगत्वरूपसाध्यतावच्छेदके सत्त्वात् प्रथमकल्पोक्ताऽव्याप्तिरपि नास्तीत्यपि बोध्यम् । [ न चेत्यादि नाव्याप्तिरित्यन्तः पाठोऽग्रे एवोचित इति नात्र व्याख्यातः, प्राचीनपुस्तकेषु तथैव क्रमस्यादृतत्वात् ]

१. [ ] अयं पाठो बहुषु पुस्तकेषु न दृश्यते, क्वचिच्च हस्तलिखितेऽपि दृश्यते ।

जागदीशी

अत्र च प्रतियोगितावच्छेदकधर्मावच्छिन्नत्वं साध्यतावच्छेदकताघटकसम्बन्धेनैव ग्राह्यं,—

तेनाय:पिण्डस्यापि कालिकादिसम्बन्धेन यद्धूमत्वविशिष्टं तृणादिकं संयोगेन तस्याधिकरणत्वेऽपि,—'धूमवान् वह्ने'रित्यादौ नातिव्याप्तिः।

प्रतियोगितावच्छेदकताघटकसम्बन्धेन तदवच्छिन्नत्वनिवेशे तु—'प्रतियोगितानवच्छेदकत्व'मित्यत्रावच्छेदकत्वं साध्यतावच्छेदकताघटकसम्बन्धेनैव ग्राह्यम्,—

अन्यथा विषयितासम्बन्धेन रूपत्वावच्छिन्नस्य ज्ञानादेः पृथिव्यादौ

विवृतिः

**अत्र चेति।** निरुक्तप्रतियोगिवैयधिकरण्ये चेत्यर्थः। घटकत्वं सप्तम्यर्थः, अन्वयश्चास्या'वच्छिन्नत्व'मित्यनेन। प्रतियोगितावच्छेदकधर्मावच्छिन्नत्वं = प्रतियोगितावच्छेदकधर्मवैशिष्ट्यम्,

**नातिव्याप्तिरिति।** सम्बन्धसामान्येन प्रतियोगितावच्छेदकवैशिष्ट्योक्तौ 'धूमवान् वह्ने'रित्यत्र संयोगेन धूमाभावस्य लक्षणघटकत्वमेव न सम्भवति, कालिकेन तदीयप्रतियोगितावच्छेदकधूमत्वविशिष्टस्य वह्न्यादेरधिकरणताया अयोगोलके सत्त्वात्, साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकवैशिष्ट्याभिधाने च साध्यतावच्छेदकताघटकीभूतसमवायसम्बन्धेन संयोगेन धूमाभावप्रतियोगितावच्छेदकधूमत्वविशिष्टस्य धूमस्यानधिकरणताया अयोगोलके सत्त्वेन धूमाभावस्य लक्षणघटकत्वान्नातिव्याप्तिरिति समुदितार्थः।

ननु प्रतियोगितावच्छेदकताघटकसम्बन्धेनैव प्रतियोगितावच्छेदकवैशिष्ट्यमुच्यतां कालिकेन धूमत्वविशिष्टस्य संयोगेनाभावस्य वह्न्यधिकरणावृत्तितया समवायेन धूमत्वविशिष्टाभावस्यैव तथात्वेन समवायस्यैव प्रतियोगितावच्छेदकताघटकसम्बन्धतया तेन च सम्बन्धेन धूमत्वविशिष्टस्य धूमस्यानधिकरणताया वह्न्यधिकरणेऽयोगोलकेऽक्षततया,—धूमाभावस्य लक्षणघटकत्वात्, तावतापि 'धूमवान्वह्ने'रित्यत्र नातिव्याप्तिरित्याह—**प्रतियोगितेति।**

इत्यत्रावच्छेदकत्वं=एतद्घटकीभूतावच्छेदकत्वं, **अन्यथेति।** प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वाप्रवेश इत्यर्थः। **विषयितासम्बन्धेनेति।** तथा च प्रतियोगितावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकवैशिष्ट्यमात्राभिधाने 'रूपवान् पृथिवीत्वा'दित्यत्र विषयितासम्बन्धेन रूपत्ववद्-

जागदीशी

समवायेनाभावस्य सत्त्वात्,—'रूपवान् पृथिवीत्वा'दित्यादावव्याप्ति-प्रसङ्गात् ।

वस्तुतः—साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नं यत्प्रतियोगितावच्छेदकत्वं तन्निरूपितस्वरूपसम्बन्धेनैव निरुक्तप्रतियोगितावच्छेदकत्वस्याऽभावः साध्यतावच्छेदकधर्मे वक्तव्यः,—

तेन 'वह्निमान् धूमा'दित्यादौ यत्र वह्नित्वादिनिरूपितसमवायादिसम्बन्धेन वह्नित्वादेः साध्यतावच्छेदकत्वं, तत्र तादृशसम्बन्धावच्छिन्नस्य

विवृतिः

भावप्रतियोगितावच्छेदकताघटकविषयितासम्बन्धेन प्रतियोगितावच्छेदकरूपत्वविशिष्टस्य ज्ञानस्य समवायेनानधिकरणीभूतपृथिवीवृत्तितादृशरूपत्ववदभावप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदके रूपत्वे सत्त्वादव्याप्तिरतः—'साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नप्रतियोगित्वावच्छेदकत्वं' वक्तव्यम् ।

तदुक्तौ च,—विषयितया रूपत्ववदभावप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताघटकीभूतसमवायानवच्छिन्नतया घटत्वनिष्ठायाः तादृशावच्छेदकताया अभावस्य साध्यतावच्छेदके रूपत्वे सत्त्वान्नाव्याप्तिरिति,—लाघवात् प्रतियोगितावच्छेदकवैशिष्ट्यं साध्यतावच्छेदकताघटकसम्बन्धेनैव वक्तव्यमित्यभिमानः ।

प्रतियोगितावच्छेदकवैशिष्ट्यं,—प्रतियोगितावच्छेदकताघटकसम्बन्धेनैव वक्तव्यं, प्रतियोगितावच्छेदकता च न साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्ना ग्राह्याऽपि तु तादृशप्रतियोगितावच्छेदकत्वाभावः साध्यतावच्छेदके साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको वक्तव्यः ।

तावतैव 'रूपवान् पृथिवीत्वा'दित्यत्र नाव्याप्तिः, विषयित्वसम्बन्धावच्छिन्ना या—रूपत्ववदभावीयरूपत्वनिष्ठावच्छेदकता—तस्याः साध्यतावच्छेदकताघटकसमवायसम्बन्धावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपसम्बन्धेनाभावस्य तत्रैव साध्यतावच्छेदके रूपत्वे सत्त्वात्,—तादृशस्वरूपसम्बन्धस्य विषयित्वसम्बन्धावच्छिन्नावच्छेदकताव्यधिकरणसम्बन्धतया तेन सम्बन्धेन तदभावस्य केवलान्वयित्वादित्याह,—**वस्तुत इति ।**

**तेनेति ।** 'वस्तुत' इत्यादिकल्पानुसरणेनेत्यर्थः । 'तेने'त्यस्य 'न क्षति'रित्यनेनान्वयः । यत्र = स्थलविशेषे, वह्नित्वनिरूपितसमवायसम्बन्धेन = वह्नित्वप्रति-

जागदीशी

प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्याप्रसिद्धावपि न क्षतिरिति ध्येयम् ।

अत्र यादृशप्रतियोगितावच्छेदकधर्मे—तादृशप्रतियोगिताश्रयाधिक-

विवृतिः

योगिकसमवायसम्बन्धेन, । तथा च प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशे—वह्नित्वप्रतियोगिकसमवायसम्बन्धेन वह्नित्वविशिष्टस्य संयोगेन साध्यतायां धूमहेतावव्याप्तिः, घटत्वादिनिष्ठायां,–धूमाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकतायां,– साध्यतावच्छेदकताघटकीभूतवह्नित्वप्रतियोगिकसमवायसम्बन्धावच्छिन्नत्वाभावात्, तत्सम्बन्धावच्छिन्नायाः प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावप्रतियोगितावच्छेदकताया अप्रसिद्धेः ।

निरुक्तनिवेशे तु—समवायेन घटत्वविशिष्टस्य संयोगेनाभावस्य लक्षणघटकतया,—तदीयसमवायसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताया वह्नित्वप्रतियोगिकसमवायसम्बन्धावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपसम्बन्धेनाभावस्य साध्यतावच्छेदकीभूते वह्नित्वे सत्त्वान्नाव्याप्तिरिति भावः । न क्षतिः = निरुक्तस्थले नाव्याप्तिः ।

ननु पूर्वोक्तरीत्या धूमत्वाद्यखण्डधर्मावच्छिन्नाधिकरणत्वाप्रसिद्ध्या 'धूमवान् वह्ने'रित्यत्रातिव्याप्तिः, धूमत्वावच्छिन्नाधिकरणताया अप्रसिद्धतया 'स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभाव'पदेन धूमाभावरूपसाध्याभावस्य धर्तुमशक्यत्वादत आह— अत्रेति । 'निरुक्तप्रतियोगिवैयधिकरण्य'कल्प इत्यर्थः, यादृशेत्यादि । तथा च यादृशप्रतियोगितावच्छेदकधर्मे,—तादृशप्रतियोगिताव-

दीपिका

**यादृशप्रतियोगितावच्छेदकधर्म इति ।** अथैतत्कल्पे स्वाश्रयाधिकरणत्वादेरवश्यं साध्यतावच्छेदकसम्बन्धेन निवेशनीयतया वह्निप्रतियोगिकसंयोगेन वह्निसाध्यकधूमहेतावव्याप्तिः, घटाभावीयप्रतियोगितावच्छेदकघटत्वाश्रयाधिकरणतायाः साध्यतावच्छेदकीभूतवह्निप्रतियोगिकसंयोगसम्बन्धानवच्छिन्नत्वात्, वह्न्यभावीयप्रतियोगितावच्छेदकवह्नित्वाश्रयाधिकरणतायास्तथात्वेऽपि तदाश्रयव्यक्तिभिन्नत्वस्य हेत्वधिकरणेऽसत्त्वेन प्रतियोगिव्यधिकरणाभावाऽप्रसिद्धेः ।

न च साध्यतावच्छेदकसंसर्गातिरिक्तसम्बन्धावच्छिन्नत्व,—साध्यनिरूपितत्वोभयाभाववत्त्वाश्रयाधिकरणताया विवक्षणीयत्वान्न दोषः, घटाभावस्यैव प्रतियोगिव्य-

जागदीशी

रणीभूतयद्यद्व्यक्तिनिष्ठाधिकरणतानवच्छेदकत्वस्य, अधिकरणतावच्छेदकत्वस्य च,—द्वयोर्व्यतिरेकस्तत्तद्व्यक्तिभेदकूटवत्त्वमेव 'यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्व'मित्यस्यार्थो बोध्यः।

विवृतिः

च्छेदकाश्रयाधिकरणीभूतयद्यद्व्यक्तिनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वोभयाभावः, तत्तद्व्यक्तित्वावच्छिन्नभेदकूटवद्धेत्वधिकरणं भवति—तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति—प्रतियोगिवैयधिकरण्यघटितसमुदितलक्षणार्थः पर्यवसितः।

भवति हि 'धूमवान् वह्ने'रित्यत्र धूमाभाव एव लक्षणघटकः, धूमत्वरूपप्रतियोगितावच्छेदके धूमत्वाश्रयधूमाधिकरणतत्तत्पर्वतादिनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वस्य सत्त्वेऽपि,—सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वस्य तत्रासत्त्वेनोभयाभावस्याक्षतत्वात्, तादृशपर्वतादिव्यक्तित्वावच्छिन्नभेदकूटस्य वह्निरूपहेत्वधिकरणेऽयोगोलके विद्यमानत्वात्।

'वह्निमान् धूमा'दित्यादिसद्धेतुस्थले घटाभाव एव लक्षणघटकः, तदीयप्रतियोगितावच्छेदके घटत्वे,—घटत्वाश्रयाधिकरणतत्तद्व्यक्तिनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वसत्त्वेऽपि,—सामान्यतोऽधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वस्य तत्रासत्त्वात्, धूमाधिकरणे पर्वतादौ च तादृशघटाधिकरणतत्तद्व्यक्तित्वावच्छिन्नभेदकूटवत्त्वात्।

अत्र प्रतियोगितावच्छेदकाश्रयाधिकरणत्वं—साध्यतावच्छेदकसम्बन्धेन वक्तव्यम्, अन्यथा 'धूमवान् वह्ने'रित्यत्रातिव्याप्त्यापत्तेः, धूमाभावप्रतियोगितावच्छेदके धूमत्वे

दीपिका

धिकरणत्वसम्भवादिति वाच्यम्। प्रमेयस्य वह्निप्रतियोगिकसंयोगेन साध्यत्वे धूमहेतावव्याप्तिप्रसङ्गात्, घटाधिकरणत्वादावुभयस्य सत्त्वेन प्रतियोगिव्यधिकरणाभावाऽप्रसिद्धेरिति चेन्न।

साध्यतावच्छेदकसम्बन्धेनाधिकरणतावद्वृत्तिसाध्यनिरूपितत्व–साध्यतावच्छेदकसंसर्गातिरिक्तसम्बन्धावच्छिन्नत्वोभयाभाववत्त्वाश्रयाधिकरणत्वादेर्विवक्षणीयत्वात्। घटाद्यभावीयप्रतियोगितावच्छेदकघटत्वाद्याश्रयाधिकरणतायामुभयाभावसत्त्वेन तस्यैव लक्षणघटकत्वसम्भवादिति ध्येयम्।

### जागदीशी

तेन—'धूमव'दित्यादिप्रतीतेरवश्यक्लृप्ताभिः पर्वतत्व-चत्वरत्वादितत्तद्धर्मविशिष्टतत्तद्धूमत्वावच्छिन्नाधिकरणता[व्यक्ति]भिरेवोपपत्तौ धूमत्वाद्यखण्डधर्मावच्छिन्नाधिकरणतायां मानाभावात्,—

—धूमादिसामान्याभावप्रतियोगितावच्छेदकं यद्धूमत्वादिकं तदवच्छिन्नाधिकरणत्वाप्रसिद्धावपि—'धूमवान् वह्ने'रित्यादौ नातिव्याप्तिः,—

### विवृतिः

धूमत्वाश्रयस्य कालिकेनाधिकरणीभूताऽयोगोलकनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वस्य सत्त्वेऽपि,—सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वाऽभावादुभयाभावस्याक्षततया, तादृशायोगोलकव्यक्तिभेदकूटवत्त्वस्य च हेत्वधिकरणेऽयोगोलकादावसत्त्वेन धूमाभावस्य लक्षणाघटकत्वात्।

एवं—यन्निष्ठाधिकरणतानिरूपितनिरूपकताऽपि—साध्यतावच्छेदकसम्बन्धावच्छिन्ना वक्तव्या, अन्यथा 'तज्ज्ञानान्यत्वविशिष्टसत्तावान् ज्ञानत्वा'दित्यत्रातिव्याप्तिः, विशिष्टसत्ताभावप्रतियोगितावच्छेदकवैशिष्ट्य-सत्तात्वाश्रयीभूतं यज्ज्ञानं, तन्निष्ठाधिकरणतानिरूपितविषयित्वसम्बन्धावच्छिन्ननिरूपकतानवच्छेदकत्वस्य वैशिष्ट्य-सत्तात्वे विरहेणोभयाभावसत्त्वात्तादृशज्ञानव्यक्तिभेदस्य हेतुमत्यसत्त्वात्।

एवं—सामान्यतोऽधिकरणतानिरूपितनिरूपकत्वमपि—साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम्, अन्यथा 'धूमवान् वह्ने'रित्यत्र धूमाभावप्रतियोगितावच्छेदकधूमत्वे स्वाश्रयाधिकरणपर्वतादिनिष्ठनिरूपकतानवच्छेदकत्वस्य, सामान्यतो ज्ञाननिष्ठविषयित्वसम्बन्धावच्छिन्ननिरूपकतावच्छेदकत्वस्य च द्वयोः सत्त्वेनोभयाभावासत्त्वात्साध्याभावस्य लक्षणाघटकतया तत्तद्व्यक्तित्वावच्छिन्नाभावमादायातिव्याप्तिः स्यात्। **तेनेति।** निरुक्तार्थकरणेनेत्यर्थः।

**अवश्यक्लृप्ताभिरित्यादिव्याख्यानं तु पूर्ववदनुसन्धेयम्।**

### दीपिका

**धूमत्वावच्छिन्नाधिकरणतायां मानाभावादिति।** अत्र धूमत्वनिष्ठैकत्वमधिकरणताविशिष्टान्यत्, 'धूमवानि'तिप्रतीतिमत्त्वादित्येवमर्थः, वैशिष्ट्यञ्च—स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, प्रतीतिमत्त्वञ्च,—स्वविषयाधिकरणतानिरूपितानिरूपकतावत्त्वसम्बन्धेन, निरूपकतावत्त्वञ्च—स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व—स्वावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन।

जागदीशी

धूमाधिकरणतत्तद्व्यक्तिभेदकूटवत्त्वमादायैव धूमसामान्याभावस्य प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यसम्भवादिति ध्येयम्।

नन्वत्र प्रतियोगित्वादिकं नातिरिक्तः पदार्थः, 'प्रतियोगित्वादिकन्तु स्वरूपसम्बन्धविशेष' इत्याद्युत्तरग्रन्थविरोधात्,—

——किन्तु स्वरूपसम्बन्धविशेषः;

स च यदि प्रतियोगिस्वरूपः, तदा 'वह्निमान् धूमा' दित्यादौ सर्वत्राऽसम्भवः,—

घटादिस्वरूपस्यैव घटाद्यभावप्रतियोगित्वस्य घटत्वावच्छिन्नवत् द्रव्यत्व-समवेतत्व-ज्ञेयत्वावच्छिन्नतया तादृशावच्छेदकीभूतज्ञेयत्वावच्छिन्नस्य हेतुमति सत्त्वात् प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः।

न च प्रतियोगितावच्छेदकरूपमेव प्रतियोगित्वमित्यदोषः,—

—समवायेन वह्नेः साध्यत्वे धूमादावतिव्याप्तिप्रसङ्गात्, समवाया-

विवृतिः

शङ्कते,—**नन्विति**। **अत्रेति**। यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्व-मित्यत्रेत्यर्थः। **नातिरिक्तः पदार्थः**=न सप्तपदार्थातिरिक्तः, तत्र हेतुमाह—**प्रतियोगित्वादिकन्त्विति**। प्रतियोगिस्वरूपत्वे दोषमाह—**स चेति**। असम्भवं योजयति,—**घटादिस्वरूपस्यैवेति**। तथा च 'वह्निमान् धूमा'दित्यादौ सर्वत्र घट-पटादेः कस्याप्यभावो न लक्षणघटकः, घटाद्यभावीयप्रतियोगिताया घटादि-स्वरूपत्वे तस्याः समवेतस्वरूपत्वं ज्ञेयत्वरूपत्वञ्चावश्यं वक्तव्यम्। घटादेः समवेतत्वात्, ज्ञेयत्वाच, एवञ्च समवेतस्वरूपाया, ज्ञेयस्वरूपायाश्च घटाभावप्रतियोगिताया यदवच्छेदकं समवेतत्वं, ज्ञेयत्वं च–तदवच्छिन्नाधिकरणताया हेत्वधिकरणे पर्वतादौ सत्त्वादतः निरुक्तासम्भवभयेन प्रतियोगित्वं न प्रतियोगिस्वरूपं वक्तव्य-मित्यभिप्रायः।

ननु प्रतियोगित्वं प्रतियोगितावच्छेदकस्वरूपमेव वक्तव्यं, तावतैव 'वह्निमान्धूमा'दित्यादौ नासम्भवः, घटाद्यभावप्रतियोगित्वस्य घटत्वस्वरूपस्य समवेतत्व-ज्ञेयत्वाद्यात्मकस्य यदवच्छेदकं घटत्वादिकं,—तदवच्छिन्नानधिकरणत्वस्य हेतुमति पर्वतादौ सत्त्वादित्याशङ्क्य समाधत्ते,-**समवायेनेति**। धूमादौ=संयोगेन धूमादिहेतौ, **अतिव्याप्तिप्रसङ्गादिति**। समवायेन वह्निसाध्यकधूमहेतावतिप्रसङ्गादित्यर्थः। अतिप्रसङ्गं योजयति—**समवायेति**। तथा च समवायेन वह्न्यभावीयप्रतियोगित्वं

जागदीशी

ऽवच्छिन्नवह्न्यभावस्य वह्नित्वस्वरूपं यत् प्रतियोगित्वं—समवायवत् संयोगस्यापि तदवच्छेदकसम्बन्धतया–स्वावच्छेदकीभूततादृशसम्बन्धेन साधनवतः प्रतियोग्यनधिकरणत्वाभावात्।

प्रतियोगितावच्छेदकीभूतयत्किञ्चित्सम्बन्धेन प्रतियोग्यनधिकरणत्वोक्त्या तद्वारणे तु,–संयोगेन वह्निसाध्यके धूमादावव्याप्तिः,—

समवायावच्छिन्नवह्न्यभावस्यैव समवायेन प्रतियोगिव्यधिकरणस्य वह्नित्वस्वरूपं यत् प्रतियोगित्वं तस्यैव संयोगसम्बन्धेनाप्यवच्छिन्नत्वादिति चेत्,—

—अत्र वदन्ति,—

प्रतियोगिस्वरूपं, तदवच्छेदकस्वरूपं वा यत्प्रतियोगित्वं, तदपि कस्य

विवृतिः

यथा वह्निस्वरूपं, तथा संयोगेन वह्न्यभावप्रतियोगित्वमपि वह्निस्वरूपं वक्तव्यं, तत्तत्सम्बन्धावच्छिन्नाभावीयवह्नित्वस्वरूपप्रतियोगिताया भेदविरहात्, एवञ्च समवायेन वह्न्यभावीयवह्नित्वरूपप्रतियोगिताया अवच्छेदकीभूतसंयोगसम्बन्धेन वह्नित्वावच्छिन्नाधिकरणताया धूमाधिकरणे पर्वतादौ सत्त्वेन समवायेन वह्न्यभावरूपसाध्याभावस्य लक्षणाघटकत्वादतिव्याप्तिरित्याशयः।

ननु प्रतियोगितावच्छेदकीभूतयत्किञ्चित्सम्बन्धेन प्रतियोग्यनधिकरणत्वमेव हेत्वधिकरणे वक्तव्यम्, उक्तस्थले समवायावच्छिन्नवह्न्यभावप्रतियोगिताया वह्नित्वाऽभिन्नाया अवच्छेदकसंसर्गत्वस्य संयोगे सत्त्वेऽपि,—तादृशप्रयोगितावच्छेदकीभूतयत्किञ्चित्समवायसम्बन्धेन वह्न्यधिकरणतायाः पर्वतादवसत्त्वात्,–समवायेन वह्न्यभावस्य लक्षणघटकतयैव नातिव्याप्तिरित्याह–**प्रतियोगितेति**। तद्वारणे तु=समवायेन वह्निसाध्यकधूमहेतावतिव्याप्तिवारणे तु, **अव्याप्तिरिति**। तथा च 'समवायेन वह्निर्नास्ती'त्यभावीयवह्नित्वरूपप्रतियोगिताया साध्यतावच्छेदकसंयोगावच्छिन्नतया तदीयप्रतियोगितावच्छेदकयत्किञ्चित्समवायसम्बन्धेन वह्निरूपप्रतियोग्यनधिकरणत्वस्य हेतुमति पर्वतादौ सत्त्वात्साध्याभावस्य लक्षणघटकत्वेन 'वह्निमान् धूमा'दित्यत्राव्याप्तिरित्यकामेनापि–स्वप्रतियोगितावच्छेदकीभूतो, यो यः सम्बन्धः, तावदन्यतमसम्बन्धेन प्रतियोग्यनधिकरणत्वस्य वक्तव्यतया—पूर्वोक्तातिव्याप्तेर्वज्रलेपत्वात् प्रतियोगितावच्छेदकरूपमपि प्रतियोगित्वं भवितुं नार्हतीत्याशयः।

उत्तरयति,—**अत्रेति**। निरुक्तपूर्वपक्षे सतीत्यर्थः, तदपि = तादृशप्रतियोगि-

जागदीशी

चिदभावस्य—केन चिदपि धर्मेण सम्बन्धेन वाऽवच्छिन्नं, व्यवहारबलात्, न तु सर्वेण सम्बन्धेन, धर्मेण वा,—

'समवायावच्छिन्नवह्न्यभावप्रतियोगित्वं संयोगावच्छिन्न'मित्यादिव्यवहाराभावात्,—

तथा च यदभावीययत्प्रतियोगितावच्छेदकसम्बन्धेन यदभावीययत्प्रतियोगितानिरूपितावच्छेदकीभूतधर्मावच्छिन्नासम्बन्धित्वं हेतुमतः, तदभावीयतत्प्रतियोगितानिरूपितावच्छेदकताशून्यत्वं साध्यतावच्छेदके निवेश्यमित्यदोषः,

विवृतिः

त्वमपि । कस्य चिदभावस्य=यत्किञ्चिदभावस्य, **केन चिदिति** । यत्किञ्चिद्धर्मेणेत्यर्थः, **सम्बन्धेनेति** । 'केन चि'दित्यनेन सम्बन्धात्,—यत्किञ्चित्सम्बन्धेनेत्यर्थः । सर्वेण धर्मेण = समवेतत्व-ज्ञेयत्वादिना, सर्वेण सम्बन्धेन = समवायेन, संयोगादिना वा । समवायावच्छिन्नवह्नित्वरूपप्रतियोगित्वस्य संयोगानवच्छिन्नत्वे युक्तिमाह—**समवायेति** ।

ननु तथापि कथमसम्भवादिवारणं, समवेताभाव-घटाभावयोः समवेतात्मकप्रतियोगिताकत्वेनैक्यात्, 'घटाद्यभाव'पदेन समवेताद्यभावमादाय तत्प्रतियोगितावच्छेदकसमवेतत्वाद्यवच्छिन्नाधिकरणताया हेतुमति सत्त्वादत आह—**तथा चेति** । **यदभावीयेति** । यत्किञ्चिदभावनिरूपितं यद्-यत्किञ्चित्प्रतियोगित्वं तदवच्छेदकसम्बन्धावच्छिन्ना या तादृशयत्किञ्चिदभावनिरूपिततादृशयत्किञ्चित्प्रतियोगितावच्छेदकधर्मावच्छिन्नाधेयता,—तन्निरूपिताधिकरणतावदन्यत्वं हेत्वधिकरणस्य; तादृशतदभावीयतत्प्रतियोगितानिरूपितावच्छेदकत्वाभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति समुदितार्थः, एवञ्च 'वह्निमान् धूमा'दित्यादौ घटाभावीयं यत् संयोगावच्छिन्नघटत्वावच्छिन्नघटाद्यात्मकं प्रतियोगित्वं, तदवच्छेदकसंयोगसम्बन्धावच्छिन्ना या घटाभावीयघटाद्यात्मकप्रतियोगिताऽवच्छेदकीभूतघटत्वावच्छिन्ना निरूपकता,—तन्निरूपिताधिकरणतावद्भिन्नत्वस्य हेतुमति पर्वतादौ सत्त्वेन,—तादृशघटाभावीयप्रतियोगितावच्छेदकताया घटत्वनिष्ठाया अभावस्य वह्नित्वरूपसाध्यतावच्छेदके सत्त्वान्नाऽसम्भवो, न वा समवायेन वह्निसाध्यकधूमहेतावतिव्याप्तिः,—

'समवायेन वह्निर्नास्ती'त्यभावनिरूपितायाः समवायावच्छिन्नवह्नित्वाद्यात्मकप्रतियोगिताया अवच्छेदकं यद्वह्नित्वं,—तदवच्छिन्नस्य वह्नेः समवायेनाधिकरणताया हेतुमत्पर्वतादावसत्त्वात्,—समवायावच्छिन्नवह्न्यभावस्य लक्षणघटकत्वादिति ध्येयम् ।

जागदीशी

—'यत्प्रतियोगिते'त्यपहाय 'यादृशप्रतियोगिते'त्यभिधानादेव तादृशार्थलाभात्।

न च प्रतियोगितावच्छेदकरूपं यदि प्रतियोगित्वं, तदा 'यदभावीययादृशप्रतियोगितावच्छेदकसम्बन्धेन तदभावीयतादृशप्रतियोगित्वावच्छिन्नस्यानधिकरणत्वं हेतुमत' इत्येव सम्यक्, 'प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्व'प्रवेशो व्यर्थ इति वाच्यम्;

'वह्नि-धूमोभयवान् वह्ने'रित्यादावतिव्याप्त्यापत्तेः, हेतुमन्मात्रस्यैव वह्नि-धूमोभयत्वावच्छिन्नाभावप्रतियोगित्वावच्छिन्नाधिकरणत्वादित्यस्मद्गुरुचरणाः ॥१३॥

विवृतिः

निरुक्ताऽर्थे दीधितिकृतां सम्मतिमाह— **यत्प्रतियोगितेत्यपहायेति**। तादृशार्थलाभात् = निरुक्तार्थलाभात्।

ननु यदि प्रतियोगित्वं,—प्रतियोगितावच्छेदकरूपं, तदा तदभावनिरूपितं यत् यत्किञ्चित्प्रतियोगित्वं,–तदवच्छिन्नानधिकरणत्वमेव हेत्वधिकरणे निवेश्यतां, तावतैव 'विशिष्टसत्तावान् जाते'रित्यत्रातिव्याप्तिवारणं सम्भवति, जात्यधिकरण–गुणवृत्तिविशिष्टसत्ताभावप्रतियोगित्वं यद् वैशिष्ट्य-सत्तात्वरूपं; तदवच्छिन्नाधिकरणद्रव्यान्यत्वस्य हेत्वधिकरणे गुणे सत्त्वेन, साध्याभावस्य लक्षणघटकत्वादिति—व्यर्थं 'तादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्व'निवेशनमित्याशङ्कते— **न चेति**।

उत्तरयति— **वह्नि-धूमोभयवानिति**। **अतिव्याप्त्यापत्तेरिति**। प्रतियोगिताया अव्यासज्यवृत्तितया वह्नि-धूमोभयत्वरूपं यद्वह्नि-धूमोभयाभावप्रतियोगित्वं,—प्रतियोगितात्वेन तदवच्छिन्नस्य वह्नेरधिकरणताया,—वह्निमत्ययोगोलकादौ सत्त्वेन,साध्याभावस्य लक्षणाघटकत्वात्, 'वह्नि-धूमोभयवान् वह्ने'रित्यत्रातिव्याप्त्यापत्तेरित्यर्थः। तादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वविवक्षणे तु,-वह्नि-धूमोभयत्वरूपं यत् तादृशोभयाभावप्रतियोगितावच्छेदकमुभयत्वत्वेन रूपेण तस्य व्यासज्यवृत्तितया,—तेन रूपेण तदवच्छिन्नस्य वह्नि-धूमोभयस्यानधिकरणताया हेतुमत्ययोगोलके सत्त्वादेव नातिव्याप्तिरित्यवसेयम् ॥१३॥

'हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणत्वं' 'साध्यतावच्छेदकसम्बन्धावच्छिन्नं च प्रतियोगित्व'मित्युक्तौ,–साध्यसामानाधिकरण्यघटकसाध्याधिकरणताया हेतुनिष्ठवृत्तितायाश्च,–सम्बन्धविशेषनियन्त्रितत्वं न सम्भवति, तयोः सम्बन्धविशेषानिय-

दीधितिः

अत्र च ग्राह्यसामानाधिकरण्ये हेतोर्यादृशः——

जागदीशी

❀ ग्राह्यसामानाधिकरण्य इति ❀ ।—परामर्शविषयसाध्यसामानाधिकरण्य इत्यर्थः । "सम्बन्धविशेषेणैव साध्य-साधनयोः सामानाधिकरण्यज्ञानादनुमितिस्तज्ज्ञानप्रतिबन्धकतयैव विरोधस्य हेत्वाभासत्वमिति" मतेनेदम् ।

विवृतिः

न्त्रितत्वे तु—साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभाववद्धेतुरूपविरोधस्य हेत्वाभासत्वमेव न घटते, तादृशवृत्तित्वाभाववद्धेतुज्ञानस्य सम्बन्धविशेषानियन्त्रितसाध्यसामानाधिकरण्यज्ञानात्मकनिरुक्तव्याप्तिबुद्धावप्रतिबन्धकत्वात्, वक्ष्यते च—अनुमितितत्कारणज्ञानान्यतरप्रतिबन्धकज्ञानविषयस्यैव हेत्वाभासत्वम्, अतः—साध्यसामानाधिकरण्यघटकहेतुनिष्ठवृत्तित्वं साध्याधिकरणत्वञ्चावश्यं सम्बन्धविशेषनियन्त्रितमभ्युपगन्तव्यमित्याशयेनाह दीधितौ,—**अत्र चेति** । एतल्लक्षणघटकीभूते चेत्यर्थः, ग्राह्यसामानाधिकरण्ये=परामर्शादिविषयसामानाधिकरण्ये, घटकत्वं सप्तम्यर्थः, अस्य च 'हेतोः साध्यस्य चे'त्यनेनान्वयः ।

हेतोः=हेतुनिष्ठवृत्तित्वस्य, [—साध्यस्य च [शि० पृ० १५५]=साध्याधिकरणताघटकसाध्यनिष्ठनिरूपकत्वस्य च, यादृशः सम्बन्धः= यद्रूपावच्छिन्नः संसर्गः, प्रविष्टः=अवच्छेदकतया प्रविष्टः, **तेन सम्बन्धेनेति** । [शि० पृ० १५५] तद्रूपावच्छिन्नहेतुनिष्ठवृत्तितावच्छेदकसम्बन्धेनेत्यर्थः । तत्सम्बन्धावच्छिन्नायाः=साध्याधिकरणताघटकसाध्यनिष्ठनिरूपकताघटकसम्बन्धावच्छिन्नायाः, तथा च हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणवृत्त्यभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्न प्रतियोगिताया अनवच्छेदकसाध्यतावच्छेदकमेवैतल्लक्षणघटकमिति भावः । ]

अत्र ग्राह्यत्वं न सामान्यतो ज्ञानविषयत्वमात्रमपि तु परामर्शाद्यात्मकज्ञानविषयत्वमित्याह—**परामर्शेति** । सम्बन्धविशेषेणैव = साध्यतावच्छेदकसाधनतावच्छेदकसम्बन्धेनैव ।

**विरोधस्येति** । साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभाववद्धेतुस्वरूपविरोधस्येत्यर्थः । **हेत्वाभासत्वमितीति** । अनुमितितत्कारणान्यतरविरोधिन एव हेत्वाभासत्वादिति भावः, इदं= 'अत्र चे'त्याद्यभिधानं ।

जागदीशी

यदि च,—येन केनापि सम्बन्धेन साध्य-साधनयोः सामानाधिकरण्यज्ञानादनुमितिः, स्वव्यापकसाध्यसम्बन्धितामात्रं वा व्याप्तिः, व्यापकत्वदले साध्य-साधनयोः सम्बन्धविशेषप्रवेशादेवातिप्रसङ्गभङ्गादिति विभाव्यते,—

विवृतिः

ननु साध्यासामानाधिकरण्यं न विरोधः, अपि तु साध्यव्यापकीभूताभावप्रतियोगिहेतुस्वरूप एव सः, तस्य चानुमितिविरोधितयैव हेत्वाभासत्वमिति सम्बन्धविशेषनियन्त्रितसाध्यसामानाधिकरण्यज्ञानं नानुमितिहेतुः, येन केनापि-सम्बन्धेन तादृशसामाधिकरण्यज्ञानादनुमित्युत्पादादित्याशङ्कते—**यदि चेति।** सामानाधिकरण्यज्ञानात् = हेतुव्यापकसाध्यसामानाधिकरण्यात्मकव्याप्तिज्ञानात्। साध्यसम्बन्धमात्रस्य व्याप्तित्वे लाघवादाह—**स्वव्यापकेति॥** स्वं = हेतुः, तद्व्यापकीभूतं यत्—निरुक्तप्रतियोगिव्यधिकरणतद्वन्निष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकाश्रयीभूतं साध्यं, तस्य यः सम्बन्धः, तद्वत्वं हेतौ 'व्याप्ति'रिति समुदितार्थः।

**मात्र**पदेन साध्यसामानाधिकरण्यस्य–सम्बन्धविशेषनियन्त्रितस्य–व्यवच्छेदः, स च सम्बन्धः सामानाधिकरण्यरूपोऽतिरिक्तो वेत्यन्यदेतत्।

नन्वेवं सम्बन्धविशेषानियन्त्रितसामानाधिकरण्यज्ञानस्य निरुक्तसाध्यसम्बन्धिताज्ञानस्य वाऽनुमितिहेतुत्वेऽनुमित्यादौ साध्यादेः संसर्गभाननियामकाभावात्-एकसम्बन्धेन सामानाधिकरण्यज्ञानात् सम्बन्धान्तरेणानुमित्यापत्तिः स्यादत आह—**व्यापकत्वदल इति।** तथा च व्यापकताघटकहेतुमत्वं येन सम्बन्धेन, तेन सम्बन्धेन हेतुमत्त्वाज्ञानात्—तद्घटकीभूतहेत्वधिकरणवृत्त्यभावीयप्रतियोगिता च यत्सम्बन्धावच्छिन्ना तेन सम्बन्धेन साध्यानुमितेः फलतया नोक्तापत्तिरूपातिप्रसङ्ग इति भावः।

केचित्तु—"ननु समवायेन गोत्वसाध्यकसमवायेनाश्वत्वहेतावतिव्याप्तिः, कालिकेनाश्वत्वाधिकरणे कालिकेन गोत्वस्य सत्त्वेनाश्वत्वव्यापकताया गोत्वे सत्त्वादत आह—**व्यापकत्वदल इति।** तथा च हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणत्वघटितं, साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वघटितं च व्यापकत्वं वक्तव्यमिति नोक्तातिप्रसङ्ग"—इत्यपि वदन्ति।

**सम्बन्धविशेषप्रवेशादेव** = साध्यतावच्छेदक-साधनतावच्छेदकसम्बन्धयोः प्रवेशादेव।

**अतिप्रसङ्ग-भङ्गादिति।** निरुक्तरीत्याऽनुमित्यापत्तिरूपातिप्रसङ्गभङ्गादित्यर्थः।

जागदीशी

तदा—परामर्शेन साधनस्य, अनुमित्या च साध्यस्य–ग्राह्यं यत् पक्षतावच्छेदकेन सार्द्धं सामानाधिकरण्यं,–तत्र प्रविष्टो यादृशः सम्बन्ध इत्यर्थो बोध्यः।

'धूमवान् वह्ने'रित्यादौ महानसीयसंयोगेन सद्धेतौ संयोगमात्रेण हेतुमत्तामादायाव्याप्तिः,—

विवृतिः

उत्तरमाह,— **तदेति**। अत्र 'परामर्शेने'ति तृतीयार्थोऽभेदः, तस्य च ग्राह्यपदार्थैकदेशे ज्ञानेऽन्वयः, एवमग्रेऽपि, 'साधनस्ये'त्यत्र षष्ठ्यर्थो निरूपितत्वं, अन्वयश्चास्य 'सामानाधिकरण्य'मित्यनेन। 'पक्षतावच्छेदक'पदोत्तरतृतीयाया सामानाधिकरण्यान्वयि निष्ठत्वमर्थः, तथाच परामर्शात्मकं यज्ज्ञानं तद्विषयीभूतं यत् पक्षतावच्छेदकादिनिष्ठं साधननिरूपितं सामानाधिकरण्यं, यच्चानुमित्यात्मकज्ञानविषयीभूतं पक्षतावच्छेदकनिष्ठसाध्यनिरूपितं सामानाधिकरण्यमित्यर्थः।

**तत्रेति**। सामानाधिकरण्य इत्यर्थः। घटकत्वं सप्तम्यर्थः, तथा च निरुक्तसामानाधिकरण्यघटकीभूतायाः साधनाधिकरणतायाः, साध्याधिकरणतायाश्चावच्छेदकतया प्रविष्टो यद्रूपावच्छिन्नः संसर्ग—इति पर्यवसितार्थः, 'संयोगेन पर्वतो वह्निव्याप्यधूमवानि'ति परामर्शे संयोगघटितसामानाधिकरण्यसम्बन्धेनैव धर्मिपारतन्त्र्येण धूमादेः पर्वतत्वे भानं, 'संयोगेन पर्वतो वह्निमा'नित्यनुमितावपि संयोगघटितसामानाधिकरण्यसम्बन्धेनैव धर्मिपारतन्त्र्येण वह्न्यादेः पर्वतत्वे भानं, नत्वन्येन सम्बन्धेनेत्याशयेनेदं।

'यः सम्बन्धः प्रविष्ट'—इत्यनुक्त्वा—'यादृशः सम्बन्धः—प्रविष्टत्युक्तौ—हेतुतावच्छेदकसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गेणैव हेतुमत्त्वस्य पर्यवसितत्वे प्रयोजनं दर्शयति—

**—धूमवान् वह्नेरित्यादाविति**। तथा च हेतुतावच्छेदकताश्रयसम्बन्धेन हेत्वधिकरणत्वविवक्षणे संयोगेन धूमसाध्यकमहानसीयसंयोगेन वह्निरूपसद्धेतौ केवलसंयोगेन वह्न्यधिकरणेऽयोगोलके संयोगेन धूमाभावरूपसाध्याभावस्य सत्त्वादव्याप्तिः।

एवं,–समवायेन द्रव्यत्वसाध्यकघटानुयोगिकसमवायेन सत्तारूपसद्धेतौ,—केवलसमवायेन सत्ताधिकरणे गुणादौ समवायेन द्रव्यत्वाभावरूपसाध्याभावस्य सत्त्वादव्याप्तिरतः—हेतुतावच्छेदकसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गेणैव हेत्वधिकरणत्वं विवक्षणीयं।

दीधितिः

**सम्बन्धः प्रविष्टस्तेन सम्बन्धेन यो हेतुमान्, तत्र वर्त्तमानत्वमभावस्य, साध्यस्य च यादृशः सम्बन्धः प्रविष्टस्तत्सम्बन्धावच्छिन्नायाश्च प्रतियोगिताया अनवच्छेदकत्वं बोध्यम् ।**

जागदीशी

एवं—द्रव्यत्वसाध्यके घटानुयोगिकसमवायेन सत्त्वादिहेतौ समवायमात्रेण हेतुमत्तामादायाऽपीत्यतो—'यत्सम्बन्ध'—इत्यपहाय—'यादृशः सम्बन्ध'—इत्युक्तम् ।

❀ साध्यस्य चेति ❀ । 'ग्राह्यसामानाधिकरण्ये प्रविष्ट'इति

विवृतिः

तथा विवक्षणे तु—महानसीयत्व—संयोगत्व—धर्मद्वयावच्छिन्नमहानसीयसंयोगेन वह्न्यधिकरणे महानसे, धूमाभावस्य, घटानुयोगिकत्व—समवायत्वधर्मद्वयावच्छिन्नघटानुयोगिकसमवायेन सत्ताधिकरणे घटे द्रव्यत्वाभावस्य चासत्त्वान्न धूमसाध्यकमहानसीयसंयोगेन वह्निहेतौ द्रव्यत्वसाध्यकघटानुयोगिकसमवायेन सत्ताहेतावप्यव्याप्तिरिति भावः ।

**यादृश इत्युक्तमिति** । इदमुपलक्षणम्, 'वह्निमान्धूमा'दित्यत्रापि संयोगसमवायान्यतरसम्बन्धेन धूमाधिकरणे धूमावयवे,—संयोगेन वह्न्यभावमादायाव्याप्तिः, अतो 'यादृशः सम्बन्धः प्रविष्ट'इत्युक्तमित्यपि बोध्यम् ।

'साध्यतावच्छेदकसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसाध्यतावच्छेदकसंसर्गावच्छिन्नप्रतियोगित्व'प्रवेशप्रयोजनमाह—

दीपिका

**यादृशः सम्बन्ध इत्युक्तमिति** । तथा च—'हेतुतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिहेतुतावच्छेदकावच्छिन्ननिरूपकताकाधिकरणे'त्यादिरीत्या व्याप्तिलक्षणार्थो बोध्यः, वृत्तित्वञ्च—स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ।

एवं—साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगितानवच्छेदकत्वमपि 'साध्यतावच्छेदके' बोध्यम्, अत्रापि वृत्तित्वं—स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ।

---

१ 'तद्वत्तामादायाऽपी'ति क्वचित्पाठो दृश्यते ।

दीधितिः

**तेन—धूमसमवायिनिष्ठाभावस्य संयोगावच्छिन्नप्रतियोगितायाः, धूमसंयोगिनिष्ठाभावस्य च समवायावच्छिन्नप्रतियोगिताया अवच्छेदकत्वेऽपि वह्नित्वस्य—न क्षतिः ॥१४॥**

जागदीशी

त्यन्वयः । धूमाधिकरणे तत्तत्संयोगेन वह्न्यभावसत्त्वात्—'वह्निमान् धूमा' दित्यादावव्याप्तिरतोऽत्रापि—'यादृश'—इत्युक्तम् ।

'तेन सम्बन्धेन यो हेतुमा' नित्यस्य फलमाह,—❀धूमसमवायीति❀ । ❀प्रतियोगिताया इति❀ ।—'अवच्छेदकत्वेऽपि वह्नित्वस्य न क्षति'-रित्यन्वयः । 'साध्यस्य चे' त्यादेः फलमाह,—❀धूमसंयोगीत्यादि❀ ॥१३॥

ननु तादात्म्येन गवादेः साध्यतायां सास्नादावव्याप्तिस्तत्र साधन-

विवृतिः

**—धूमाधिकरण इति ।** संयोगेन वह्निसाध्यकसंयोगेन धूमहेतौ संयोगेन धूमाधिकरणे पर्वते,—महानसीयसंयोगेन वह्न्यभावसत्त्वादव्याप्तिवारणाय 'साध्यतावच्छेदकताश्रयसंसर्गावच्छिन्नत्वं' प्रतियोगितायामनिवेश्य—पूर्वोक्तरीत्या 'साध्यतावच्छेदकसंबन्धावच्छिन्नत्व'मेव प्रतियोगितायां निवेश्यं,—

तथा निवेशे तु—संयोगत्व-विशिष्टसंयोगसम्बन्धेन वह्न्यभावस्य धूमाधिकरणे पर्वतेऽसत्त्वान्नाव्याप्तिरित्याशयः ।

**यादृश इत्युक्तमिति ।** इदमुपलक्षणम् ,—समवाय-संयोगान्यतरसम्बन्धेन वह्निसाध्यकधूमहेतौ केवलसमवायेन धूमाधिकरणे पर्वते वह्न्यभावमादायाव्याप्तिवारणार्थं 'यादृश'इत्युक्तमित्यपि बोध्यम् ।

**दीधितौ-तेनेति ।** हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणत्वप्रवेशेन, साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताप्रवेशेन चेत्यर्थः । अस्य च 'न क्षति'रित्येनान्वयः ।

तथा च समवायेन धूमाधिकरणे धूमावयवे संयोगेन वह्न्यभावप्रतियोगितावच्छेदकत्वस्य, संयोगेन धूमाधिकरणे पर्वते समवायेन वह्न्यभावप्रतियोगितावच्छेदकत्वस्य च वह्नित्वरूपे साध्यतावच्छेदके सत्त्वेऽपि,—संयोगेन धूमाधिकरणे संयोगेन वह्न्यभावस्यासत्त्वान्न 'वह्निमान्धूमा'दित्यादावव्याप्तिरित्यर्थः ॥ १४ ॥

'यद्वे'त्यादिकल्पान्तरोत्थितौ बीजमाह—**नन्विति । गवादे**रित्यादिना—कपिसंयोग्यादिपरिग्रहः, **सास्नादावित्यादिना**—एतद्वृक्षत्वादिपरिग्रहः । साधन-

दीधितिः

**यद्वा,—साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वं हेतुमतो वक्तव्यम्।**

जागदीशी

वह्निष्ठान्योन्याभावप्रतियोगितायाः साध्यतावच्छेदक-तादात्म्य-सम्बन्धाव-च्छिन्नत्वे'भानाभावस्य स्वयमेव 'बौद्धाधिकारटिप्पण्या'मुक्तत्वात्,—

एवं—'धनी चैत्रत्वा'दित्यादौ वृत्त्यनियामक-स्वामित्वादि-सम्बन्धेन धनादेः साध्यतायामपि तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेरत आह,—❀यद्वेति❀।

यत्तु—"प्रतियोगितावच्छेदकसम्बन्धेन तद्वैयधिकरण्यं प्रवेश्य,—पुनः 'प्रतियोगितायाः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्व'विवक्षायां गौरवमतो 'यद्वे'त्यादिकल्प" इति,—

विवृतिः

वह्निष्ठाभावप्रतियोगितायाः=सास्नादिमन्निष्ठघटाद्यन्योन्याभावप्रतियोगितायाः, स्वयमेव = दीधितिकृतैव,—**उक्तत्वादिति** । अन्योन्याभावत्वस्याखण्डोपाधित्वादित्याशयः।

नन्वखण्डोपाधेरपसिद्धान्तकवलिततया तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमेवान्योन्याभावत्वं वक्तव्यं, तथा च प्रतियोगितायां तादात्म्यसम्बन्धावच्छिन्नत्वमवश्यमेवाङ्गीकर्तव्यमित्यत आह—**एवमिति**। तथा च स्वामित्वसम्बन्धस्य वृत्त्यनियात्मकतया तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः सर्वसम्मतत्वेन स्वामित्व-सम्बन्धेन धनसाध्यकचैत्रत्वहेतौ साध्यतावच्छेदकीभूत—स्वामित्व—सम्बन्धावच्छिन्न-प्रतियोगिताकाभावाऽप्रसिद्ध्याऽव्याप्त्यापत्तेरतो दीधितौ—'यद्वे'त्यादिकमभिहित-मिति भावः।

'यद्वे'त्यादिग्रन्थोत्थितौ बीजान्तरं प्रदर्शयतां मतं दूषयितुमुपन्यस्यति—**यत्त्विति**। तद्वैयधिकरण्यं = प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं, **पुनरिति**। प्रतियोगितावच्छेदकसम्बन्धस्यैव साध्यतावच्छेदकसम्बन्धस्वरूपत्वादित्याशयः। **गौरवमिति**। साध्यतावच्छेदकसम्बन्धस्य द्विधा प्रवेशेन गौरवमिति भावः।

---

१. साध्यताघटक-तादात्म्य-सम्बन्धावच्छिन्नत्व' इति लिखित-प्राचीनपुस्तके पाठः।

दीधितिः

**तथा च सम्बन्धभेदेन प्रतियोगिता न विशेषणीया,**

जागदीशी

**—तन्न,—सम्बन्धान्तरावच्छिन्नतत्तदनन्तप्रतियोगितावच्छेदकभेद-कूटघटितत्वेन 'यद्वे'त्यादिकल्पस्यैव गुरुतरत्वादित्याहुः।**

**सम्बन्धभेदेन = साध्यतावच्छेदकसम्बन्धभेदेन।**

**न चोक्तमतद्वय एव पर्वताद्यनुयोगिकसंयोगादिना—**

विवृतिः

दूषयति—**तन्नेति। सम्बन्धान्तरेति।** तत्तत्सम्बन्धावच्छिन्नप्रतियोगिता-वच्छेदकं यद्यत्—तत्तद्व्यक्तित्वावच्छिन्नभेदकूटवत्साध्यतावच्छेदकघटितत्वेनेत्यर्थः। एकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकस्य सम्बन्धान्तरावच्छिन्नप्रतियोगिताव-च्छेदकभिन्नतया व्यभिचारिण्यतिव्याप्तिवारणाय 'भेदकूट'निवेशनमिति विभावनीयम्।

ननु 'स्वप्रतियोगितावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नानधि-करणहेत्वधिकरणवृत्त्यभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदक-साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यरूप'प्रथमकल्पाभिमत'व्याप्ति'लक्षणे पर्व-ताद्यनुयोगिकसंयोगेन वह्न्यादेः साध्यतायां तत्तद्धूमहेतावव्याप्तिः,—

—घट-पटादेः कस्याप्यभावस्य लक्षणाघटकत्वात्, संयोगेन घटाद्यभावप्रति-योगितावच्छेदकसंयोगसम्बन्धेन स्वप्रतियोगितावच्छेदकघटत्वावच्छिन्नानधिकरणत्वस्य तत्तद्धूमाधिकरणे पर्वतादौ सत्त्वेऽपि,—तदीयघटादिनिष्ठप्रतियोगितायां साध्यताव-च्छेदकीभूतपर्वताद्यनुयोगिकसंयोगसम्बन्धावच्छिन्नत्वविरहात्,—तेन सम्बन्धेन घटादेरधिकरणस्यैवाप्रसिद्धेः,

एवं—साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरण-हेत्वधिकरणवृत्त्यभावीयप्रतियोगितावच्छेदकतत्तत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेद-कभेदकूटवत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यरूप—'यद्वा'कल्पाभिमतव्या-प्तिलक्षणतोऽपि तत्राव्याप्तिः,—

—संयोगेन घटाद्यभावीयप्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नस्य साध्यतावच्छेद-कीभूतपर्वताद्यनुयोगिकसंयोगसम्बन्धेनाधिकरणाप्रसिद्ध्या कस्याप्यभावस्य लक्षणा-घटकत्वात्–पर्वताद्यनुयोगिकसंयोगेन धूमाद्यभावप्रतियोगिनो धूमादेरधिकरणत्वस्यैव हेतुमति पर्वतादौ सत्त्वादित्याशङ्कते—**न चेति।** उक्तमतद्वये = निरुक्तार्थकमतद्वये,

---

१ 'तत्तुच्छ'मिति कलिकातामुद्रितपाठः।

जागदीशी

वह्नयादेः साध्यतायां तत्तद्धूमेऽव्याप्तिः,—

तादृशप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिनो यदधिकरणं तदन्यत्वस्य,—

—साध्यतावच्छेदकसम्बन्धेन यत्प्रतियोगिसम्बन्धि, तदन्यत्वस्य च,—

—हेतुमत्यप्रसिद्धेरिति वाच्यम्;

तादृशप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपितविशेषणताविशेषेण,—

—साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपितविशेषणताविशेषेण वा,—

—तादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वसामान्याभावस्योक्तत्वात्,—

अन्यथा कालिकादिसम्बन्धेन सर्व्वस्यैव हेतुमतः प्रतियोग्यधिकरणतावत्त्वात् प्रतियोग्यनधिकरणहेत्वधिकरणाप्रसिद्धेः ।

विवृतिः

तादृशप्रतियोगितावच्छेदकसम्बन्धेन = पर्वताद्यनुयोगिकसंयोगसम्बन्धेन, प्रतियोगिनः = धूमादेः ।

समाधत्ते—तादृशेति । प्रथमकल्पाभिप्रायेणेदं, तथा च—'स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधिकरणताप्रतियोगिकस्वरूपसम्बन्धेन,—यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वसामान्याभाववद्धेत्वधिकरणवृत्त्यभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नतादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं' प्रथमकल्पाभिमतलक्षणस्यार्थः, ।

भवति हि—पर्वताद्यनुयोगिकसंयोगसम्बन्धेन घटाद्यभाव एव लक्षणघटकः, तदीयप्रतियोगितावच्छेदकपर्वताद्यनुयोगिकसंयोगावच्छिन्नवह्नयाद्यधिकरणताप्रतियोगिकस्वरूपस्य घटत्वावच्छिन्नाधिकरणताव्यधिकरणसम्बन्धतया,—तेन सम्बन्धेन घटाभावप्रतियोगितावच्छेदकघटत्वावच्छिन्नाधिकरणत्वसामान्याभावस्य हेतुमति पर्वतादौ सत्त्वात् ।

साध्यतेति । द्वितीयकल्पाभिप्रायेणेदं, तथा च 'साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणताप्रतियोगिकस्वरूपसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वसामान्याभाववद्धेत्वधिकरणवृत्त्यभावीयप्रतियोगितावच्छेदकतत्तत्सम्बन्धाव-

दीधितिः

**एवं स्थिते,—सामानाधिकरण्यादौ 'सम्बन्धित्वं' निवेशनीयं, न त्वधिकरणत्वं,**

जागदीशी

**ननु सम्बन्धविशेषेण साध्य-साधनयोः सामानाधिकरण्यप्रवेशे तादात्म्येन हेतु-साध्यभावेऽव्याप्तिः, तादृशसम्बन्धेन हेतु-साध्ययोरधिकरणाप्रसिद्धेरत आह,—❀एवं स्थित इति❀।—सम्बन्धविशेषस्यात्र निवेशे स्थित इत्यर्थः। ❀सामानाधिकरण्यादाविति❀। 'आदि' पदेन हेतुसामानाधिकरण्यप्रविष्टहेत्वधिकरणत्वस्य परिग्रहः।**

विवृतिः

च्छिन्नप्रतियोगितावच्छेदकभेदकूटवत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं 'यद्वे' त्यादिद्वितीयकल्पाभिमतलक्षणार्थः ।

भवति हि,—संयोगेन घटाद्यभाव एवैतन्मते लक्षणघटकः, साध्यतावच्छेदकपर्वताद्यनुयोगिकसंयोगावच्छिन्नवह्न्याद्यधिकरणताप्रतियोगिकस्वरूपसम्बन्धस्य घटाभावप्रतियोगितावच्छेदकघटत्वावच्छिन्नाधिकरणताव्यधिकरणसंसर्गतया तेन सम्बन्धेन तादृशघटत्वावच्छिन्नाधिकरणत्वसामान्याभावस्य केवलान्वयितया हेतुमत्यपि पर्वतादौ तस्य सत्त्वात्,

न च 'सामान्याभाव'निवेशनमनर्थकं, तादृशाधिकरणत्वनिष्ठप्रतियोगिताकाभावस्यैव सम्यक्त्वादिति वाच्यम् । संयोगसम्बन्धावच्छिन्नाधिकरणताप्रतियोगिकस्वरूपसम्बन्धेन महानसादिनिष्ठवह्न्यधिकरणत्वाभावस्य हेतुमति पर्वतादौ सत्त्वात्,—वह्न्यभावस्य लक्षणघटकतया 'वह्निमान् धूमा'दित्यत्राव्याप्त्यापत्तेरिति दिक् ।

**नन्विति** । सम्बन्धविशेषेण = साध्यतावच्छेदकसम्बन्धेन,—साधनतावच्छेदकसम्बन्धेन च, **हेतु-साध्यभावेति** । तादात्म्येन वह्निमतः साध्यत्वे, तादात्म्येन धूमवतो हेतुत्वे चेत्यर्थः ।

अव्याप्तिमुपपादयति—**तादृशसम्बन्धेनेति** । तादात्म्यसम्बन्धेनेत्यर्थः । **अधिकरणाप्रसिद्धेरिति** ॥ तादात्म्यस्य वृत्त्यनियामकतया तेन सम्बन्धेन सम्ब-

दीपिका

**तादात्म्येन हेतुसाध्यकभाव इति** । हेतु-साध्ययोर्द्वन्द्वं कृत्वा भावशब्देन समासाद्धेतुभावः, साध्यभावश्चेति लभ्यते । तादात्म्येन हेतुभावः=तादात्म्येन हेतुत्वं, तादात्म्येन साध्यभावस्तादात्म्येन साध्यत्वं तत्रेत्यर्थः, 'तादात्म्येन वह्निमांस्तादात्म्येन धूमवत' इत्यत्रेति यावत् ।

दीधितिः

**तथा च धर्म्मिणोऽपि व्याप्यत्वं, व्यापकत्वञ्च निर्वहति,–तथा हि,–तादात्म्येन सम्बन्धेन धूमवतः सम्बन्धिनि महानसे वर्त्तमानो योऽन्योन्याभावस्तस्य तादात्म्यसम्बन्धावच्छिन्ना या प्रतियोगिता,–तदनवच्छेदकवह्निमत्त्वावच्छिन्नस्य वह्निमतस्तादात्म्येन सम्बन्धिनि महानसे,–धूमवतस्तादात्म्येन सम्बन्धित्वम्।**

जागदीशी

प्रयोजनमाह,—❀ तथा चेति ❀। ❀ धर्मिणोऽपीति ❀। तादात्म्येन व्याप्यत्वं, व्यापकत्वञ्च निर्वहतीत्यर्थः, अन्यथा तादात्म्येन हेतोः साध्यस्य चाधिकरणाप्रसिद्ध्या न तन्निर्वाह इति भावः।

❀ योऽन्योन्याभाव इति ❀।—'योऽभाव'—इत्येव वक्तुमुचितम्, अन्योन्याभावत्वनिवेशे वैयर्थ्यादिति ध्येयम्। ❀ तदनवच्छेदकवह्निमत्त्वेति ❀।—वह्निमत्त्वं = वह्न्यधिकरणत्वं, तच्चाधिकरणव्यक्तीनां भेदेऽप्यभिन्नमित्याशयेनेदम्।

"अत्र साध्य–साधनयोरिव तदीयसम्बन्धयोरपि भेदेन व्याप्तेर्भेदात्,—

विवृतिः

न्धित्वस्यैव स्वीकरणीयतयेति भावः। **प्रयोजनमाहेति**। 'हेत्वधिकरणत्व'स्थाने 'हेतुसम्बन्धित्व'निवेशस्य, सामानाधिकरण्येऽपि 'साध्यसम्बन्धित्वादि'निवेशस्य च प्रयोजनमाहेत्यर्थः। **व्याप्यत्वं, व्यापकत्वं चेति**। धूमवतो व्याप्यत्वं, वह्निमतश्च व्यापकत्वमित्यर्थः।

**अन्यथेति**। अधिकरणत्वस्थाने सम्बन्धित्वानिवेश इत्यर्थः। न तन्निर्वाहः = न व्याप्यत्व-व्यापकत्वयोर्निर्वाहः, **वैयर्थ्यादिति**। अभावे तादात्म्यावच्छिन्नप्रतियोगिताकत्वकथनादेव तस्यान्योन्याभावत्वसिद्धेरिति हृदयम्।

ननु वह्निमत्त्वं यदि वह्निस्वरूपं, तदा 'तत्तद्व्यक्तिमान्न'त्यभावमादाय सर्वस्या एव वह्निव्यक्तेर्हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतया कुतो धर्मिणो व्यापकत्वसम्भव इत्यत आह— **वह्निमत्त्वं चेति**।

ननु तथापि वह्न्यधिकरणतायाः प्रत्येकपर्वतादिनिष्ठाया भिन्नतया तद्दोषतादवस्थ्यमत आह— **तच्चेति**। तथा च वह्न्यधिकरणत्वमेकमेव, अतो न तत्तद्व्यक्त्यवच्छिन्नान्योन्याभावमादाय दोषः। **अत्रेति**। निरुक्त'सम्बन्धित्व'निवेशकल्प

दीधितिः

एवं—धर्मिणो धर्मव्याप्यत्व–व्यापकत्वे बोध्ये ।

अत एव—जलादीनां पृथिवीत्वाभावव्याप्यत्वं तत्र-तत्रोक्तं सङ्गच्छते ॥१४॥

जागदीशी

तादात्म्येन हेतु-साध्यकस्थले हेतुमन्निष्ठाभावाप्रतियोगिसाध्यतादात्म्यमेव व्याप्तिर्वक्तुमुचिता,—लाघवादिति" वदन्ति ।

ॐएवमितिॐ ।—सामानाधिकरण्यादौ सम्बन्धित्वनिवेशे कृत इत्यर्थः । ॐधर्मिण इतिॐ ।—धर्मिणो = धूमवतः, धर्म्मस्य = वह्नेर्व्याप्यत्वम् , धर्म्मिणो = वह्निमतः, धर्म्मस्य = धूमस्य, व्यापकत्वञ्चेत्यर्थः । तथा च,–'गौः सास्नावत्त्वात्,' 'वह्निमान् धूमवत' इत्यादौ तादात्म्यसम्बन्धेन व्यापकता, व्याप्यताऽपि सङ्गच्छत इति भावः ।

ननु तादात्म्येन धर्म्मिणो धर्मव्याप्यतायामपसिद्धान्त इत्यत आह,–ॐ अत एवेति ॐ ।—धर्मिणो धर्मव्याप्यत्वादेवेत्यर्थः । तत्र-तत्र = व्यतिरेक्यादिग्रन्थे ॥ १४ ॥

ननु समवायेन जलादौ पृथिवीत्वाभावव्याप्यत्वपरतयैव तद्ग्रन्थ-

विवृतिः

इत्यर्थः । तादात्म्येन हेतुसाध्यकस्थले = तादात्म्येन वह्निमत्साध्यकतादात्म्येन धूमवद्धेतुकस्थले, वक्तुमुचितेति । साध्य-साधनयोरभिन्नत्वादित्याशयः ।

शब्दाभेदस्योपादेयत्वमते नैषा युक्तिः साधीयसीत्यतो वदन्तीत्युक्तम् ।

सङ्गच्छत इति । तथा च हेतुसम्बन्धित्वनिवेशाद्धर्मिणो व्यापकत्वं धर्मस्य सम्भवति, न त्वधिकरणत्वनिवेशात् , एवं–साध्यसम्बन्धित्वनिवेशादेव धर्मिणो धर्मव्याप्यत्वं सम्भवति, न त्वधिकरणत्वघटितसामानाधिकरण्यनिवेशादिति भावः 'पृथ्वीत्वाभाववान् जला'दित्यत्र जलस्य समवायेनापि पृथिवीत्वाभावव्याप्यत्वं सम्भवति,—इति तदनुरोधेन तादात्म्येन व्याप्यत्वस्वीकारो न सङ्गच्छतेऽतो–'यथा चे'त्यादि–ग्रन्थोत्थितौ बीजं प्रदर्शयति—नन्विति । तद्ग्रन्थसङ्गतिः = व्यतिरेक्यादिग्रन्थसङ्गतिः ।

दीपिका

तादात्म्येन हेतुसाध्यकस्थल इति । नन्वत्र हेतुनिष्ठाऽभावाऽप्रतियोगित्वनिवेशेनैव सामञ्जस्ये कृतं 'हेतुमन्निष्ठे'त्याद्यनुसरणेनेति चेन्न । तादात्म्येन द्रव्यस्यसाध्यतास्थले घट-पटोभयहेतुकेऽतिव्याप्त्यापत्तेः,हेतुमन्निष्ठाभावाप्रतियोगित्वस्य द्रव्ये सत्त्वात्, अस्मन्मते च विरुद्धधर्मस्य तादात्म्येनाप्यधिकरणत्वानङ्गीकारान्नातिव्याप्तिरिति· ध्येयम् ।

दीधितिः

यथा च यादृशेन सम्बन्धेन हेतोर्व्याप्यता गृहीता, तादृशेन सम्बन्धेन,—तस्य पक्षविशिष्टत्वज्ञाने, यादृशेन सम्बन्धेन च साध्यस्य व्यापकत्वमवगतं तादृशेनैव साध्य-पक्षयोर्विशिष्टानुमितिः ।

जागदीशी

सङ्गतिरित्याशङ्क्य,—पृथिव्यादौ जलादिभेदसाधनार्थं तदुपन्यासो न स्यात्, व्यापकताघटकसम्बन्धावच्छिन्नव्यापकाभावेन व्याप्यताघटकसम्बन्धावच्छिन्नव्याप्याभावस्यैव सिद्धेरित्यन्वयिदृष्टान्तपूर्वकं परिहरति,—
❀ यथा चेति ❀ ।

❀पक्षविशिष्टेति❀ ।—पक्षविषयकेत्यर्थः, प्राचां मते पक्षविशेष्यकज्ञानस्येव पक्षप्रकारकज्ञानस्यापि—

विवृतिः

पृथिव्यादाविति । तथा च जलस्य समवायेन हेतुत्वे पृथिवीत्वाभावाभावेन पृथिवीत्वेन जलात्यन्ताभावस्यैव सिद्धिर्भविष्यति, न तु जलभेदस्य, तत्सिद्ध्यर्थमेव जले तादात्म्येन पृथिवीत्वाभावव्याप्यत्वमङ्गीकर्तव्यमित्याशयः । तदुपन्यासः= व्यतिरेकिग्रन्थे 'पृथिवीत्वाभाववान् जला'दित्यनुमानोपन्यासः, अन्वयिदृष्टान्तपूर्वकम् = अन्वयिदृष्टान्तं प्रदर्श्य ।

दीधितौ—यथा चेति । यादृशेन = यद्रूपावच्छिन्नेन , तादृशेन = तद्रूपावच्छिन्नेन, तस्य = हेतोः, पक्षविशिष्टत्वज्ञाने = 'साध्यव्याप्यो हेतुः पक्षे' 'साध्याव्याप्यहेतुमान् पक्ष' इत्याकारकज्ञाने ।

साध्यपक्षयोर्विशिष्टानुमितिरिति । 'साध्यवान् पक्षः', 'पक्षे वा साध्य'-मित्याकारिकाऽनुमितिरित्यर्थः । तेनेति । निरुक्तसम्बन्धित्वादिनिवेशनेनेत्यर्थः । वह्निधीः = वह्न्यनुमितिः, । तथैवेति । 'यथे'त्यनेन सम्बध्यते, तथा च यथा वह्निव्याप्यतया गृहीतस्य हेतोर्धूमादेर्व्याप्यताघटकसंयोगेन पक्षे—पर्वतादौ—ज्ञानाद्धूमादिव्यापकतया गृहीतस्य साध्यीभूतवह्न्यादेः पक्षरूपपर्वतादावनुमितिः, तथाऽन्वयिनि गृहीतवह्निनिष्ठधूमादिव्यापकताघटकसंयोगसम्बन्धेन साध्यस्य वह्न्यादेर्ह्रदादावभावज्ञाने सति वह्निव्याप्यतया गृहीतस्य धूमादेर्व्याप्यताघटकसंयोगसम्बन्धेनाभावस्तत्र ह्रदादौ सिध्यतीति समुदितार्थः, । प्राचां मत इति । पक्षविशेष्यकज्ञानस्य = 'साध्यव्याप्यहेतुमान् पक्ष' इत्याकारकज्ञानस्य, पक्षप्रकारकज्ञानस्य = 'साध्यव्याप्योहेतुः पक्षे' इति ज्ञानस्य ।

दीधितिः

तेन न धूमावयवे संयोगेन, न वा समवायेन पर्वते वह्निधीः,

—तथैवावगतव्यापकताघटकसम्बन्धेन व्यापकस्याभावग्रहे गृहीतव्याप्यताघटकसम्बन्धेन व्याप्यस्याभावः सिध्यतीति,

कथमन्यथा 'समवायेन वह्निविरहिणि महानसे संयोगेन, संयोगेन वा वह्निविरहिणि स्वावयवे,—धूमः समवायेन न निवर्त्तते,

—निवर्त्तते च,—संयोगेन वह्निविरहिणि स्वावयवे संयोगेनेति'नियम उपपद्यते,?

तथा च तादात्म्यसम्बन्धेन जलादीनां व्याप्यत्वग्रहाद्व्यापक-

जागदीशी

———————कारणत्वात् ।

❀धूमावयव इति❀ ।—'न' 'वह्निधी'रित्यन्वयः ।

[ 'धूमावयवे समवायेन तादृशधूमवत्त्वग्रहेपि न वह्न्यनुमितिः, पर्वते च संयोगेन धूमवत्त्वग्रहेऽपि न समवायेन वह्न्यनुमितिरित्यर्थः । ❀कथमिति❀ ।—'नियम उपपद्यत' इति परेणान्वयः ।]

❀महानसे संयोगेनेति❀ ।—'न निवर्त्तते' इत्यन्वयः, न संयोगावच्छिन्नस्वाभावोऽनुमितौ भासत इति तदर्थः । ❀निवर्त्तते चेति❀ ।—'धूम' इति पूर्वेणान्वयः । ❀तादात्म्येनैवेति❀ ।—समवायेन व्याप्यता-

विवृतिः

**कारणत्वादिति ।** पक्षःसाध्यवानित्याकारकानुमितौ पक्षविशेष्यकज्ञानस्य, पक्षे साध्यमित्याकारकानुमितौ च पक्षप्रकारकज्ञानस्य कारणत्वादित्यर्थः । **तादृशधूमवत्त्वग्रहेपीति ।** वह्निव्याप्यधूमवत्वग्रहेऽपीत्यर्थः, एवमग्रेऽपि ।

दीधितौ—**अन्यथेति ।** व्यापकताघटकसम्बन्धेन व्यापकाभावेन व्याप्यताघटकसम्बन्धेन व्याप्याभावानभ्युपगम इत्यर्थः । **स्वावयवइति ।** धूमावयव इत्यर्थः एवमग्रेऽपि । नियमः = व्याप्तिः ।

निरुक्तग्रन्थं व्याचष्टे = **कथमिति इति ।** स्वाभावः = धूमाभावः, **भासत इति ॥** विषयो भवतीत्यर्थः ।

**समवायेनेति ।** जलस्य समवायेन पृथिवीत्वाभावव्याप्यतायामित्यर्थः ।

१. [] एतदन्तर्गतः पाठो हस्तलिखिते नास्ति ।

दीधितिः

निवृत्त्या,—तादात्म्येनैव तेषामभावः सिध्यति, स एव चान्योन्याभावः,

इत्थमेव च 'तादात्म्याद्वृक्षशिंशपयोर्व्याप्तिनिश्चय' इति सङ्गच्छते ॥ १५ ॥

अत एव————

जागदीशी

यान्तु समवायेन जलस्यात्यन्ताभाव एव सिध्येदिति,—जलभेदसाधनार्थं तद्ग्रन्थावतारो न स्यादिति भावः।

नन्वेतावताऽपि तादात्म्यसम्बन्धावच्छिन्नजलाभावः सिद्धो, न तु जलान्योन्याभाव इति तद्दोषतादवस्थ्यमत आह,—ॐस एव चेतिॐ। धर्मिणो धर्मव्याप्यत्वे प्राचां संवादमुपन्यस्य धर्मिणो धर्मव्यापकत्वे तमाह—ॐइत्थमेव चेतिॐ।

[ [1]'तादात्म्येन व्याप्तेर्व्यवस्थापनेनैवेत्यर्थः। तथा च 'वृक्षः शिंशपाया' [2]इत्यत्र व्याप्तेर्निश्चयः प्रामाणिक इति भावः ] ॥१५॥

धर्मिणो धर्मव्यापकत्वे युक्तिमप्याह,—ॐअत एवेतिॐ।—धर्मिणो

विवृतिः

तद्ग्रन्थावतारः=व्यतिरेक्यादिग्रन्थावतारः, **स एवेति**। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकजलाभाव एवेत्यर्थः। **धर्मिण इति**। धूमवत इत्यर्थः, धर्मव्याप्यत्वे=वह्न्यादिव्याप्यत्वे। धर्मिणः=गवादेः, धर्मव्यापकत्वे=सास्नाव्यापकत्वे। **शिंशपाया इति**। वृक्षविशेषादित्यर्थः। **व्याप्तेर्निश्चय इति**। हेत्वधिकरणत्वस्थाने हेतुसम्बन्धित्वस्य, साध्यसामानाधिकरण्यघटकाधिकरणत्वादिस्थानेऽपि च सम्बन्धित्वस्य निवेशादेव तादात्म्येन व्याप्तेर्निश्चयः सम्भवतीति भावः।

दीधितौ—**अत एवेति**। गोत्वत्वाद्यग्रहदशायां = गोत्वत्वाज्ञानकाले, **यत्र**

१ [ ] एतदन्तर्गतः पाठो हस्तलिखिते काशीमुद्रिते च नास्ति।

२ 'वृक्षः शिंशपाया' इति हि प्रयोगः, तत्र वृक्षस्तादात्म्येन साध्यं, शिंशपातादात्म्येन हेतुः।

दीधितिः

——गोत्वत्वाद्यग्रहदशायां,–'यत्र सास्नादिः सा गौ'रिति——

जागदीशी

धर्मव्यापकत्वादेवेत्यर्थः । [ननु] 'इयं गौ'रित्यनुमितिर्गवेतरावृत्तित्वरूपायाः शुद्धगोत्वनिरूपितव्याप्तेर्ज्ञानात्समवायेन निरवच्छिन्नगोत्वसाध्यिकैव भविष्यति, साध्यवदन्यावृत्तित्वरूपाया अपि व्याप्तेरनुमितिहेतुत्वस्याग्रे वाच्यत्वादतस्तादृशानुमित्यनुरोधाद्धर्मिणो धर्मव्यापकत्वस्वीकारोऽनुचित इत्यत उक्तं,—❀ गोत्वत्वेति ❀ ।—गोत्वत्वं = गवेतरावृत्तित्वं, तथा च गवेतरावृत्तित्वरूपाया गोत्वव्याप्तेरज्ञानदशायामुत्पन्नाया 'इयं गौ'रित्यनुमितेर्गोत्वविधेयत्वासम्भवाद्गोविधेयकत्वमेवेति,–तदनुरोधादवश्यं धर्मिणो धर्मव्यापकत्वं वाच्यमिति भावः ।

ननु तादात्म्येन गोः साध्यत्वेऽपि,–'गोत्वं हेतुमन्निष्ठाभावप्रतियोगिता-

विवृतिः

**सास्नादिरिति ।** 'गौः सास्नाया' इत्यत्र गोत्वत्वाज्ञानकाले तादात्म्येन गव्येव सास्नाव्यापकत्वमङ्गीकर्त्तव्यमित्याशयः । सास्नादिना=सास्नादिहेतुना, 'तादात्म्येन गौः सिध्यती'ति परेणान्वयः । तादात्म्येन गोर्व्यतिरेकात् = तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकगोभेदात्, सास्नादिव्यतिरेकः = सास्नाद्यत्यन्ताभावः ।

'गोत्वत्वाद्यग्रहदशाया'मित्युक्तेर्बीजमाह = **नन्विति । शुद्धगोत्वनिरूपितव्याप्तेरिति ।** गवेतरावृतित्वरूपव्याप्तौ गोत्वजातेरनुल्लेखादिति भावः । **गोत्वसाध्यकैवेति ।** 'इयं गौ'रित्यनुमितिरिति पूर्वेणान्वयः । निरवच्छिन्नगोत्वनिष्ठविधेयताकैवेत्यर्थः ।

ननु गवेतरावृत्तित्वरूपव्याप्तिज्ञानस्यानुमितिहेतुत्वमप्रामाणिकमित्यत आह— **साध्यवदन्येति ।** गोत्वस्य साध्यत्वे गवेतरावृत्तित्वस्यैव साध्यवदन्यावृत्तित्वस्वरूपत्वादित्याशयः । अग्रे = केवलान्वयिग्रन्थे; तादृशानुमित्यनुरोधात् = 'इयं गौ'रित्यनुमित्यनुरोधात्, धर्मिणः = गवादेः, धर्मव्यापकत्वस्वीकारः = सास्नादिव्यापकत्वस्वीकारः ।

'गोत्वत्वाद्यग्रहदशाया'मित्यस्याशयमाह- **तथा चेति । गोत्वविधेयकत्वेति ।** गोत्वविधेयकत्वप्रयोजकगोत्वनिरूपितव्याप्तिज्ञानाभावात् गोत्वविधेयकत्वासम्भवादित्यर्थः । तदनुरोधात् = तदानीन्तनोत्पन्नेयं गौरित्यनुमितेर्गोविधेयकत्वानुरोधात् ।

'आदि'पदप्रयोजनप्रदर्शनाय शङ्कते— **नन्विति ।** गोत्वं = गोत्वरूपसाध्यताव-

जागदीशी

नवच्छेदक'मित्याकारकव्याप्तिधियोऽनुमितिहेतुत्वात्तत्र च धर्मितावच्छेदकविधयैव गोत्वत्वग्रहस्यापेक्षितत्वात्तदग्रहे गोविधेयकानुमितिरप्यनुपपन्नेत्यत आह,-ॐआदीतिॐ [शि. १६६. पृ.] ।—आदिना पक्षधर्मतापरिग्रहः, तथा च गवेतरावृत्तित्वरूपव्याप्तेः साक्षाव्यापकता[वच्छेदकता]ग्रहे धर्मितावच्छेदकतयोपस्थितिध्रौव्येऽपि तद्विशिष्टस्य यत्र न पक्षधर्मताधीस्तत्रैव—'अयं गौ'रित्यनुमितेर्गोविधेयकत्वमावश्यकमिति,—तदनुरोधेनैव तादात्म्येन व्यापकत्वं वाच्यमित्याशयः ।

विवृतिः

च्छेदकम्, इत्याकारकधियः = गोत्वधर्मिताकप्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वप्रकारकज्ञानस्य, **अनुमितिहेतुत्वादिति** । व्यापकतावच्छेदकत्वज्ञानस्यानुमितिहेतुत्वमतेनेदम् । अन्यथा तु 'इत्याकारकधिय' इत्यस्य तादृशप्रतियोगितानवच्छेदकगोत्वावच्छिन्नसम्बन्धिस्वरूपसामानाधिकरण्यज्ञानस्येत्येव व्याख्यानं समुचितमिति ध्येयम् ।

**अपेक्षितत्वादिति** । तथा च तादृशगोत्वधर्मितात्मकावच्छेद्यबुद्धाववच्छेदकज्ञानस्य हेतुत्वात्,—गोत्वत्वरूपधर्मितावच्छेदकज्ञानं विना तादृशगोत्वधर्मिताकज्ञानानुदयेन,—कारणाभावाद्गोत्वत्वाग्रहकाले गोसाध्यकानुमितिरपि न सम्भवतीति भावः । तदग्रहे = गोत्वत्वाग्रहे, **पक्षधर्मतापरिग्रह इति** । गोत्वत्वप्रकारकपक्षधर्मत्वाग्रहदशायामित्यर्थो वाच्य—इति भावः । गवेतरावृत्तित्वरूपव्याप्तेः = गोत्वत्वात्मिकायाः । साक्षाव्यापकतावच्छेदकत्वग्रहे = 'गोत्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदक'मित्याकारकग्रहे, तद्विशिष्टस्य = गोत्वत्वविशिष्टस्य, यत्र = यस्मिन्धर्मिणि, तत्रैव = तस्मिन्धर्मिण्येव ।

**गोविधेयकत्वमिति** । अयं भावः—'गोत्वं साक्षादिमन्निष्ठाभावप्रतियोगितानवच्छेदक'मित्याकारकज्ञाने गोत्वत्वस्य गवेतरावृत्तित्वरूपस्य गोत्वनिरूपितव्याप्तिस्वरूपस्य ज्ञानस्यापेक्षितत्वेऽपि,—तादृशगोत्वत्वज्ञानं न गोत्वविधेयकानुमितौ कारणं, व्याप्तिविशिष्टस्य पक्षधर्मताज्ञानस्यैवानुमितिहेतुत्वात्, एवञ्च यदा तादृशगोत्वत्वरूपव्याप्तिविशिष्टस्य गोत्वस्य पक्षे ज्ञानं न भवति, तदा 'इयं गौः' इत्यनुमितिर्गोत्वसाध्यिका न भवितुमर्हति, तदनुमितिकारणस्याभावादिति तदानी—मुत्पन्नाया इयङ्गौरित्यनुमितेर्गोसाध्यकत्वमेवावश्यमङ्गीकर्त्तव्यमिति ।

इदमत्रालोचनीयं,—'गोत्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदक'मित्याका-

जागदीशी

यत्तु—"शुद्धगोत्वावच्छिन्नविधेयकानुमितिं प्रति निरवच्छिन्नगोत्वनिष्ठविशेष्यताकमेव प्रतियोगितानवच्छेदकत्वज्ञानं हेतुरतो गोत्वत्वाग्रहेऽपि गोत्वे सास्नादिव्यापकतावच्छेदकत्वग्रहसम्भवात् गोसाध्यकानुमितेर्नानुपपत्तिः, अभावलौकिकप्रत्यक्ष एवाधिकरणतावच्छेदकरूपेण तदुपस्थितेर्हेतुत्वादिति" मतं,——

तत्तुच्छं, व्यभिचारज्ञानाप्रतिबध्यतया तादृशव्यापकताग्रहस्यानु-

विवृतिः

रकज्ञाने धर्मितावच्छेदकविधया गोत्वत्वज्ञानस्यापेक्षितत्वेऽपि हेतुमन्निष्ठप्रतियोगिव्यधिकरणघटाद्यभावप्रतियोगितासामान्ये,—शुद्धगोत्वावच्छिन्नत्वघटितोभयाभावसत्त्वात्—गोत्वावच्छिन्नहेतुव्याप्यकताया अक्षतत्वेन तादृशव्यापकताज्ञानात्, तादृशहेतुव्यापकसाध्यसम्बन्धित्वरूपसाध्यसामानाधिकरण्यज्ञानाद्वा,—गोत्वत्वाग्रहकालेऽपीयङ्गौरित्याकारिकाऽनुमितिस्तादात्म्येन गोसाध्यिकैव भविष्यतीत्यादिपदोपादानप्रयोजनोपवर्णनं सूक्ष्मदर्शिभिर्विवेचनीयमिति ।

गोत्वत्वाज्ञानकाले तादात्म्येन गोसाध्यकानुमितिमुपपादयतां मतं दूषयितुमुपन्यस्यति—**यत्त्विति** । शुद्धगोत्वावच्छिन्नविधेयकानुमितिं प्रति=तादात्म्यसम्बन्धावच्छिन्नगोनिष्ठविधेयताकानुमितिं प्रति, निरवच्छिन्नगोत्वनिष्ठविशेष्यताकं=गोत्वत्वानवच्छिन्नविशेष्यताकम्, प्रतियोगितानवच्छेदकत्वज्ञानं=प्रतियोगितानवच्छेदकत्वप्रकारकज्ञानं, 'गोवृत्ति सास्नादिमन्निष्ठाभावप्रतियोगितानवच्छेदक'मित्याकारकं ज्ञानमिति यावत् ।

एतेन 'गोत्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदक'मित्याकारकज्ञाने धर्मितावच्छेदकविधया गोत्वत्वग्रहस्यापेक्षितत्वात्,—गोत्वत्वाग्रहकाले तादृशानुमित्युपपादनं न सम्भवतीत्यपि निरस्तम् ।

गोत्वत्वाग्रहेपि=गोत्वत्वज्ञानविरहदशायामपि, । **गोत्व इति** । गोवृत्तित्वेन-गोत्व इत्यर्थः । सास्नादिव्यापकतावच्छेदकत्वग्रहात्=सास्नादिमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वग्रहसम्भवात् । गोसाध्यकानुमितेः=तादात्म्येन गोसाध्यकानुमितेः ।

दूषयति—**तत्तुच्छमिति** । **व्यभिचारज्ञानेति** । 'गोत्वं सास्नादिमन्निष्ठाभावप्रतियोगितावच्छेदक'मित्याकारकव्यभिचारज्ञानाप्रतिबध्यतयेत्यर्थः । तादृशव्यापकताग्रहस्य='गोवृत्ति सास्नादिमन्निष्ठाभावप्रतियोगितानवच्छेदक'मित्याकारक-

जागदीशी

मित्यहेतुत्वादन्यथा तुल्ययुक्त्या शुद्धगोत्वविधेयकानुमितिं प्रति निरवच्छि-न्नगोत्व [निष्ठ] विशेष्यताकस्य,–प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावाप्रति-योगित्वज्ञानस्य,–हेतुत्वा'दयं गौ'रित्यनुमितेर्गोत्वत्वाद्यनुपस्थितावपि गोत्व-रूपधर्मसाध्यकत्वस्य दुर्वारत्वापत्तेरिति दिक् ।

प्राञ्चस्तु—"गोतादात्म्यस्य सास्नाव्यापकत्वग्रहादेव गोस्तादात्म्येन सिद्धिसम्भवान्न तदनुरोधेन गोस्तादात्म्येन व्यापकत्वस्वीकारो युक्तः, सम्बन्धगतव्यापकत्वग्रहादेव सम्बन्धिनोऽनुमितेर्मिश्रादिसम्मतत्वादत उक्तं,—*गोत्वत्वाद्यग्रहदशायामिति* [ शि. पृ. १६६. ] ।—गोता-दात्म्यत्वाद्यग्रहदशायामिति तदर्थ"—इत्याहुः ।

विवृतिः

व्यापकतावच्छेदकत्वग्रहस्य, **अनुमित्यहेतुत्वादिति** । न च'गोवृत्ति सास्ना-दिमन्निष्ठाभावप्रतियोगितावच्छेदक'मित्याकारकव्यभिचारज्ञानस्य— तादृशव्यापक-तावच्छेदकत्वज्ञानप्रतिबन्धकतया व्यभिचारग्रहप्रतिबध्यत्वेन निरुक्तज्ञानमप्यनुमितौ-कारणं स्यादिति वाच्यम् । साध्यतावच्छेदकधर्मिकनिरुक्तप्रतियोगितावच्छेदकत्व-ग्रहस्यैव व्यभिचारज्ञानतया—गोवृत्ति सास्नादिमन्निष्ठाभावप्रतियोगितावच्छेदक'-मित्याकारकज्ञानस्य 'व्यभिचारज्ञान'पदेन धर्तुमशक्यत्वादिति भावः ।

**अन्यथेति** । व्यभिचारज्ञानाप्रतिबध्यज्ञानस्याप्यनुमितिहेतुत्व इत्यर्थः । **तुल्ययुक्त्येति** । तथा च व्यभिचारज्ञानाप्रतिबध्यज्ञानं यद्यनुमितिकारणं स्यात्तदा गोत्वत्वाग्रहकालेप्ययं गौरित्यनुमितिर्गोत्वसाध्यिकाऽपि भवितुमर्हति । 'गोवृत्तिः—सास्नादिमन्निष्ठाभावाप्रतियोगी'त्याकारकव्यापकताज्ञाने गोत्वत्वग्रह-स्यानपेक्षणादित्ययं गौरित्यनुमितेस्तादात्म्येन गोविधेयकत्वव्यवस्थापनं दुरुपपादं स्यात् ।

**प्राञ्चस्त्विति** । सास्नाव्यापकत्वग्रहात्=सास्नादिमन्निष्ठाभावाप्रतियोगित्व-ग्रहात् । तदनुरोधेन=अयं गौरित्यनुमित्यनुरोधेन,

ननु सम्बन्धे व्यापकत्वग्रहे सम्बन्धस्यैवानुमितिर्भवतु न तु सम्बन्धिन इत्यत आह—**सम्बन्धगतेति** ।

ननु गोत्वत्वाग्रहकाले 'गोतादात्म्यं, सास्नादिमन्निष्ठाभावाप्रतियोगी'त्याकारक-ग्रहादियं गौरित्यनुमितिर्गोसाध्यिकैव भविष्यतीति—किमनुरोधेन धर्मिणो व्यापकत्वं स्वीकार्यमित्यत आह—**गोत्वत्वेति**। तदर्थः = 'गोत्वत्वाद्यग्रहदशाया'मित्यस्यार्थः।

दीधितिः

**तादात्म्येन गोर्व्यापकत्वग्रहे,–सास्नादिना तादात्म्येन गौः,–**

जागदीशी

—तच्चिन्त्यम् ।

[“गोत्वत्वाद्यग्रहदशायामित्यस्य’,–‘गोत्वत्वेनाग्रहो यस्मा’दिति व्युत्पत्त्या गोत्वबाधनिश्चयदशायामित्यर्थः, तथा च तदानीमयं गौरित्यनुमित्यर्थं धर्मिणो धर्मव्यापकत्वमवश्यं स्वीकार्य्यमित्यपि” वदन्ति । ][1]

❀गौरिति❀ ।—‘सिध्यती’ति परेणान्वयः ।

विवृतिः

तथा च गोतादात्म्यत्वाज्ञानकाले गोतादात्म्ये तादृशव्यापकत्वग्रहस्यासम्भवात् तदानीमियं गौरित्यनुमित्युपपत्त्यर्थं धर्मिणो गवादेस्तादात्म्येन व्यापकत्वमवश्यमङ्गीकर्तव्यमित्याशयः ।

अत्र गोतादात्म्यत्वाग्रहकाले गोसाध्यकानुमितेरप्युत्पादो न सम्भवति, केवल हेतुव्यापकत्वज्ञानस्यानुमित्यहेतुतया सास्नादिव्यापकस्य गवादेस्तादात्म्येन सम्बन्धित्वरूपसामानाधिकरण्यज्ञानस्यैवानुमितिहेतुत्वं वाच्यं, तथा च निरुक्तव्याप्तिज्ञाने-तादात्म्यत्वेन तादात्म्यस्य भानात् निरुक्तानुमितेः पूर्वमवश्यं तादात्म्यत्वग्रहस्यावश्यकत्वादित्यस्वरस ‘आहु’रित्युक्त्या सूचितः ।

मतान्तरमाह—**गोत्वत्वेति** । अग्रहः=गोत्वत्वप्रकारकज्ञानविरहः, गोत्वबाधनिश्चयदशायां=‘गोत्वाभाववानय’मित्याकारकभ्रमात्मकनिश्चयदशायाम्, इत्यर्थ इति । तथा च ‘गोत्वत्वाद्यग्रह’ इत्यस्य ‘गोत्वाभाववानय’मित्याकारकबाधनिश्चयपरतया तद्दशायामयं गौरित्यनुमितिर्न गोत्वप्रकारिका भवितुमर्हति, इदन्त्वावच्छिन्नविशेष्यक गोत्वप्रकारकबुद्धौ निरुक्तबाधनिश्चयस्य प्रतिबन्धकत्वादतः तादृशबाधनिश्चयकाले उत्पन्नाया अयं गौरित्यनुमितेस्तादात्म्येन गोविधेयकत्वमेव स्वीकार्यमिति भावः ।

‘वदन्ती’त्यस्वरससूचनाय—तद्बीजन्तु–निरुक्तेदन्त्वावच्छिन्नविशेष्यकगोत्वाभावप्रकारकनिश्चयकालेऽपीदन्त्वावच्छिन्नविशेष्यकतादात्म्येन गोप्रकारकानुमितेरुत्पादो न सम्भवति, अनुभवबलाद्भिन्नप्रकारकज्ञानस्यापि प्रतिबन्धकत्वमभ्युपगन्तव्यं, गोभेदस्य गोत्वाभावात्मकतया गोभेदनिश्चयसत्त्वे यथा गोस्तादात्म्येन ज्ञानं न सम्भवति, तथा धर्मिणि गोत्वाभावनिश्चयसत्त्वेपि धर्मिणि तादात्म्येन गोप्रकारकबुद्धिर्न सम्भवति,—इति ॥१६॥

१ [ ] एतदन्तर्गतः पाठो लिखितपुस्तके नास्ति ।

दीधितिः

तादात्म्येन गोर्व्यतिरेकाच्च सास्नादिव्यतिरेकः—सिध्यति ॥१६॥

एवञ्च संयोगेन गगनादेरपि द्रव्यत्वव्यापकत्वम् ।

वृत्तिनियामकसंयोगमात्रस्याभावप्रतियोगितावच्छेदकसम्बन्धरूपत्वे,——

जागदीशी

❀गोर्व्यतिरेकादिति❀ । 'तादात्म्येने'त्यनुषज्यते ॥ १६ ॥

❀एवञ्चेति❀ ।—सामानाधिकरण्यादौ सम्बन्धिनिवेशे चेत्यर्थः । संयोगत्वेन संयोगमात्रस्य प्रतियोगितावच्छेदकसम्बन्धत्वे वृत्त्यनियामकसंयोगस्यापि तत्त्वं सर्वजनसिद्धमतो 'मात्र'पदम् ।❀सम्बन्धरूपत्वे इति❀। अन्यथा तादृशसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या गगनादेः पृथिवीत्वादिव्यापकत्वं दुर्घटमेव स्यादिति भावः ।

विवृतिः

**सामानाधिकरण्यादाविति** । आदिना—हेत्वधिकरणत्वादिपरिग्रहः । **मात्रपदमिति** । तथा च 'मात्र'पदेन वृत्त्यनियामकसंयोगेन घटाद्यभावमादाय गगनादेर्द्रव्यत्वव्यापकत्वं सङ्क्रमनीयमिति सूचितं, अन्यथा संयोगेन घटाद्यभावप्रतियोगितावच्छेदकसंसर्गतायाः संयोगत्वविशिष्टतया वृत्त्यनियामकसंयोगे सत्त्वेऽपि,—तदीयप्रतियोगितायाः साध्यतावच्छेदकसंसगतावच्छेदकतापर्याप्त्यधिकरणवृत्त्यनियामकसंयोगत्वविशिष्टसंयोगानवच्छिन्नतया,— तादृशसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या गगनादेर्द्रव्यत्वव्यापकत्वस्य दुर्घटत्वापत्तिरिति हृदयम् ।

**अन्यथेति** । वृत्त्यनियामकसंयोगस्य प्रतियोगितानवच्छेदकत्व इत्यर्थः । **तादृशेति** । तथा च वृत्त्यनियामकसंयोगावच्छिन्नाभावानभ्युपगमे,—प्रतियोगितावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नासम्बन्धि-हेतुसम्बन्धि-वृत्त्यभावनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताघटितप्रथमकल्पोक्तरीत्या व्यापकत्वं गगनादेर्न सम्भवति, साध्यतावच्छेदकीभूतवृत्त्यनियामकसंयोगावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेरतस्तत्सम्बन्धावच्छिन्नप्रतियोगित्वं स्वीकृत्यैव तेन सम्बन्धेन घटाद्यभावमादाय गगनादेर्द्रव्यत्वव्यापकत्वं सम्पादनीयमित्याशयः ।

'साध्यतावच्छेदके'त्यादिना प्रकारान्तरेण गगनादेर्व्यापकत्वव्यवस्थापने हेतुमाह—

दीधितिः

**साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वाभिधाने वा, —— पृथिवीत्वादिव्यापकत्वमपि,**

जागदीशी

तादृशसम्बन्धस्य प्रतियोगितानवच्छेदकत्वेऽपि द्वितीयकल्पानुसारेण व्यापकत्वं सम्पादयति,—❀साध्यतावच्छेदकसम्बन्धेनेति❀ ।—तथा च सम्बन्धान्तरावच्छिन्नघटाद्यभावमादायैव लक्षणसमन्वय इति भावः । 'द्रव्यत्वस्य गगनासंयुक्तविभ्वन्तरे तद्व्यभिचाराद्धेत्वन्तरमाह,—❀पृथिवी-त्वादीति❀ । ❀व्यापकत्वमपीति❀ ।—'गगनादे'रिति पूर्वेणान्वयः ।

[[1] 'ननूत्पत्तिकाले जन्यस्य,–प्रलयकाले नित्यस्य,–पृथिवीमात्रस्य गगना-

विवृतिः

**तादृशसम्बन्धस्येति** । वृत्त्यनियामकसंयोगस्येत्यर्थः । **प्रतियोगितानवच्छेद-कत्वेऽपीति** । तथा च साध्यतावच्छेदकवृत्त्यनियामकसंयोगावच्छिन्नप्रतियोगिता-काभावाऽप्रसिद्ध्या न प्रथमकल्पोक्तरीत्या गगनादेर्व्यापकत्वमिति भावः ।

द्वितीयकल्पानुसारेण='साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छि-न्नासम्बन्धि—हेतुसम्बन्धि–वृत्त्यभावनिरूपितस्वप्रतियोगितावच्छेदकसम्बन्धावच्छि-न्नप्रतियोगिताघटित'द्वितीयकल्पानुसारेण, सम्बन्धान्तरावच्छिन्नघटाद्यभावं = सम-वायाद्यवच्छिन्नघटाद्यभावम् । **लक्षणसमन्वय इति** । 'गगनवान् द्रव्यत्वा'दित्यत्र समवायेन घटाभावस्य साध्यतावच्छेदकीभूतवृत्त्यनियामकसंयोगेन स्वप्रतियोगिता-वच्छेदकघटत्वावच्छिन्नासम्बन्धि—द्रव्यत्वरूपहेतुसम्बन्धि–घटादिवृत्तितया तदीय-समवायावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य गगनत्वे सत्त्वाद्गगनस्य वृत्त्यनियामक-संयोगेन द्रव्यत्वव्यापकताया अक्षतत्वाल्लक्षणसमन्वय इत्यर्थः ।

ननु तादृशसम्बन्धेन गगनस्य द्रव्यत्वव्यापकत्वसम्भवे पुनस्तस्य पृथिवीत्वा-दिव्यापकत्वाभिधानमसङ्गतमित्यत आह—**द्रव्यत्वस्येति** । तथा च द्रव्यत्वस्य गगनासंयुक्त आत्मन्यपि सत्त्वेन तत्र च वृत्त्यनियामकेनापि संयोगेन गगनस्या-सत्त्वात्तादृशसम्बन्धेन गगनसाध्यकद्रव्यत्वहेतोर्व्यभिचारितया,—गगनस्य तेन सम्बन्धेन द्रव्यत्वव्यापकत्वं कथमपि न सम्भवतीत्यतः–पृथिवीत्वस्य हेतुत्वमभिहित-मिति तात्पर्यम् ।

**नन्विति** । जन्यपृथिव्यां, नित्यपृथिव्याञ्च गगनाभावसत्त्वं प्रदर्शयति–उत्पत्ति-

१. [ ] एतदन्तर्गतः पाठो काशीमुद्रिते लिखिते च नास्ति ।

दीधितिः

—तदभाववतोऽपि पृथिव्यादेः संयोगेन तत्सम्बन्धित्वात्,
सिद्धिरपि तस्य तथैव,
—न तु वृत्तिनियामकसम्बन्धेन,
तेनासम्बन्धित्वात् ———

जागदीशी

भावसत्त्वात्कथं तस्य पृथिवीत्वव्यापकत्वमत आह,—॥तदभाववतोऽपीति॥।—गगनादेरभाववतोऽपि। ॥संयोगेनेति॥।—वृत्त्यनियामकसंयोगेन,।—तत्सम्बन्धित्वात्= गगनादिसम्बन्धित्वात्। ]

नन्वेवं निरुक्तव्याप्तिज्ञानाद्घटो गगनवानित्यनुमितिः प्रमा स्यादत आह,—॥सिद्धिरपीति॥। तथैव= वृत्त्यनियामकसंयोगेनैव, तथा च तादृशसम्बन्धेन गगनानुमितेः प्रमात्वमिष्टमेवेति भावः।

॥तेनासम्बन्धित्वादिति॥।—येन सम्बन्धेन साध्य-साधनसामानाधिकरण्यं परामर्शे भासते, तेनैव सम्बन्धेन साध्यानुमितेः फलत्वादिति

विवृतिः

काल इति। गगनादिसम्बन्धित्वादिति। तथा च वृत्त्यनियामकसंयोगरूपसाध्यतावच्छेदकसम्बन्धेन गगनसम्बन्धित्वस्य पृथिव्यादौ सत्त्वान्न गगनाभावः पृथिव्यां प्रतियोगिव्यधिकरण इति भावः।

'घटो गगनवा'नित्यनुमितिर्दीधितिकृतामपि सम्मतेति प्रदर्शयति—
—तथा चेति।

ननु वृत्त्यनियामकसंयोगेन निरुक्तव्यापकसामानाधिकरण्यज्ञानाद्वृत्तिनियामकसंयोगेनापि 'घटो गगनवा'नित्यनुमितिः स्यादित्यत आह दीधितौ—तेनासम्बन्धित्वादिति। वृत्तिनियामकसंयोगेन गगनसम्बन्धित्वरूपसाध्यसामानाधिकरण्यविरहादित्यर्थः।

ननु वृत्तिनियामकसंयोगेन गगनसम्बन्धित्वविरहेऽपि वृत्त्यनियामकसंयोगेन गगनसम्बन्धित्वज्ञानाद्वृत्तिनियामकसंयोगेनापि गगनानुमितिः स्यादतो भावमाह—येन सम्बन्धेनेति। भासत इति। तथा च वृत्तिनियामकसंयोगेन गगनसम्बन्धित्वरूपसामानाधिकरण्यस्य परामर्शाविषयतया,—तेन सम्बन्धेन गगनानुमितिर्न सम्भवत्येव, सामानाधिकरण्यघटकसाध्यसम्बन्धस्यैवानुमितिविधेयतावच्छेदकसंसर्गतया भानोपगमादिति भावः।

दीधितिः

**—अव्यापकत्वाच्च,**

जागदीशी

भावः । सामानाधिकरण्यधियो हेतुत्वस्य, तदंशे सम्बन्धविशेषनिवेशस्य वाऽनङ्गीकारमतेऽप्याह,—❀ अव्यापकत्वाच्चेति ❀ ।—'तेने'त्यनुषज्यते, तथा च यादृशसम्बन्धेन साध्यस्य हेतुव्यापकत्वं गृह्यते, तेनैव सम्बन्धेन साध्यसिद्धिः फलमतो—वृत्तिनियामकसम्बन्धेन साध्यस्य हेतुव्यापकत्वाऽसम्भवादेव न तेन [1]सम्बन्धेन साध्यस्य प्रमानुमितिरिति भावः ।

ननु वृत्तिनियामकसंयोगेनापि गगनस्य पृथिवीत्वादिव्यापकत्वं दुर्वारं, तादृशसम्बन्धेन गगनसम्बन्ध्यप्रसिद्ध्या गगनाभावस्य प्रतियोगिव्यधिकरणत्वाभावात् , तादृशाभावान्तरप्रतियोगित्वस्य च गगनादावसत्त्वादत

विवृतिः

ननु सामानाधिकरण्यघटितव्याप्तिज्ञाने सामानाधिकरण्यज्ञानस्य हेतुतयाऽनुमितावपि तस्य हेतुत्वमावश्यकमित्यत आह—**तदंश इति** । सामानाधिकरण्यघटके साध्ये, हेतौ चेत्यर्थः । सम्बन्धविशेषनिवेशस्य = साध्यतावच्छेदकसम्बन्धस्य, हेतुतावच्छेदकसम्बन्धस्य चेत्यर्थः ।

**अनङ्गीकारमत इति** । तथा च येन केनापि सम्बन्धेन सामानाधिकरण्यज्ञानस्यानुमितिहेतुतयाऽनुमितौ सम्बन्धभाननियामकाभावाद्वृत्त्यनियामकसंयोगेन गगनसम्बन्धित्वज्ञानादपि वृत्तिनियामकसंयोगेन गगनानुमितिः स्यादिति भावः ।

ननु वृत्तिनियामकसंयोगेन गगनादेरव्यापकत्वेऽपि,—तेन सम्बन्धेन गगनानुमितिः स्यादित्यतो भावमाह—**तथा चेति** । सामानाधिकरण्यज्ञानस्यानुमितिविधेयतावच्छेदकतया संसर्गभानाप्रयोजकत्वेऽपि,—व्यापकतावच्छेदकसम्बन्धस्यैवानुमितौ विधेयतावच्छेदकसंसर्गतया भानोपगमाद्वृत्तिनियामकसंयोगेन गगनादेः पृथिवीत्वाव्यापकतया न तेन सम्बन्धेन गगनानुमितेः सम्भव इत्यभिप्रायः । वृत्तिनियामकसंयोगेन व्यापकत्वभ्रमात्तेन सम्बन्धेन भ्रमानुमित्युत्पादेऽपि,—न प्रमानुमितिः कदा चिदपि सम्भवतीत्याशयेनाह—**न तेन सम्बन्धेनेति** । वृत्तिनियामकसंयोगसम्बन्धेनेत्यर्थः ।

'व्यक्तीभविष्यती'त्यादि ग्रन्थोत्थितौ बीजमाह—**नन्विति** । तादृशसम्बन्धेन= वृत्तिनियामकसंयोगसम्बन्धेन, **प्रतियोगिव्यधिकरणत्वाभावादिति** । 'वृत्ति-

---

१ 'सम्बन्धेने'ति पाठः क्वचिन्नोपलभ्यते ।

दीधितिः

व्यक्तीभविष्यति चेदमुपरिष्टात् ॥ १७ ॥

जागदीशी

आह,—※व्यक्तीत्यादि※ । इदं = वृत्तिनियामकसम्बन्धेन गगनादेरव्यापकत्वं, तथा च'निरुक्तप्रतियोगिप्रतियोगिकत्वे'त्यादिना वक्ष्यमाणं 'प्रतियोग्यसामानाधिकरण्यं''वृत्तिनियामकसम्बन्धेन गगनाभावेऽपि स्थास्यतीति भावः ॥ १७ ॥

विवृतिः

नियामकसंयोगेन 'गगनं नास्ती'त्यभावीयप्रतियोगितावच्छेदकवृत्तिनियामकसंयोगेन गगनस्य सम्बन्धित्वाप्रसिद्ध्याऽसम्बन्धित्वस्यापि वक्तुमशक्यत्वात् , तादृशसम्बन्धेन घटाभावोपादाने तु तदीयप्रतियोगितानवच्छेदकत्वस्य गगनत्वे सत्त्वेन,—प्रथमकल्पोक्तरीत्या वृत्तिनियामकसंयोगेनापि गगनादेर्व्यापकत्वं दुर्वारम् ।

एवं–समवायादिना गगनाभावोऽपि न लक्षणघटकः, साध्यतावच्छेदकवृत्तिनियामकसंयोगेन गगनत्वावच्छिन्नस्य सम्बन्धित्वाप्रसिद्ध्याऽसम्बन्धित्वासम्भवात् । समवायादिना घटाभावप्रतियोगितानवच्छेदकं च गगनत्वमिति द्वितीयकल्पोक्तरीत्यापि गगनादेर्व्यापकत्वं निराबाधमेवेत्याशयः ।

वृत्तिनियामकसंयोगावच्छिन्नप्रतियोगिताकगगनाभावे उत्तरग्रन्थोक्तं 'प्रतियोगिवैयधिकरण्यं' प्रदर्शयति—**तथा चेति** । साध्यतावच्छेदकवृत्तिनियामकसंयोगे पृथिवीत्वाधिकरणघटाद्यनुयोगिकत्वसत्त्वेऽपि गगनप्रतियोगिकत्वविरहेणोभयाभावसत्त्वाद्भवति गगनाभावस्तादृशसम्बन्धेन प्रतियोगिव्यधिकरण इत्याशयवानाह—**—गगनाभावेऽपीति** ॥ १७ ॥

'घटवान् महाकालत्वा'दित्यत्राव्याप्तिरित्युक्तिस्तु न सङ्गच्छते, कालिकेन महाकालत्वाधिकरणे घटादावतीततत्तद्घटव्यक्त्यभावस्य प्रतियोगिवैयधिकरण्यसम्भवेनाव्याप्तिविरहादतो—येन सम्बन्धेन यादृशस्य वस्तुनः साध्यत्वे येन सम्बन्धेन यादृशस्य महाकालत्वस्य हेतुत्वेऽव्याप्तिः सम्भवति, तादृशसाध्यकहेतावव्याप्तिमा-

दीपिका

"ननु वृत्तिनियामकसंयोगेन गगनादिसम्बन्धिनोऽप्रसिद्ध्या कथन्तेन सम्बन्धेन गगनाद्यभावस्य प्रतियोगिवैयधिकरण्यमित्यत आह—**व्यक्तीभविष्यतीति** । एवञ्च वक्ष्यमाणोभयाभावघटित—'प्रतियोगिवैयधिकरण्यं' तत्रापि सुलभमिति भावः" इति गदाधरभट्टाचार्या अपि व्याचक्रुः ।

१. 'प्रतियोगिवैयधिकरण्य' मिति पाठान्तरम् ।

दीधितिः

## नन्वष्टद्रव्यातिरिक्त—

जागदीशी

❀नन्विति❀ ।—

कालिकसम्बन्धेन गोत्वादौ साध्ये घटादिरूपकालोपाधिमात्रवृत्ति-घटत्वादिहेतौ नाव्याप्तिः ।

भिन्नकालीनतत्तद्व्यक्तित्वावच्छिन्नाभावस्यैव घटादौ प्रतियोगिवैय-धिकरण्यसम्भवादत उक्तम्,—❀अष्टद्रव्यातिरिक्तेति❀ ।

'पृथिव्यादिचतुर्द्रव्यातिरिक्ते'ति तु ज्यायः, गगनादेः कालत्वविरहा-देव तद्व्युदासादिति ध्येयम् ।

विवृतिः

शङ्कते—दीधितौ—**नन्विति** । तथा च पृथिव्यादिचतुर्द्रव्यातिरिक्तो यो द्रव्यात्मकः कालस्तन्मात्रवृत्तिधर्मस्य—महाकालत्वस्य—व्यापकत्वं,—कालिकसम्बन्धे-नाव्याप्यवृत्तेः कस्यापि पदार्थस्य न सम्भवतीति—तादृशसम्बन्धेन तादृशपदार्थ-साध्यकमहाकालत्वहेतौ व्याप्तिलक्षणाव्याप्तिरिति समुदितग्रन्थानामाशयः ।

'अष्टद्रव्यातिरिक्ते'त्यस्य व्यावृत्तिमाह—**कालिकसम्बन्धेनेति** । 'गोत्वादा'-वित्यादिना,—पटत्वादिपरिग्रहः,—

**घटत्वादिहेताविति** । 'गोत्ववान् घटत्वा'दित्यत्रेत्यर्थः । 'आदि'पदात्पटत्वा-दिपरिग्रहः ।

अव्याप्त्यभावमुपपादयति—**भिन्नकालीनेति** । घटासमानकालीनेत्यर्थः, तथा च घटासमानकालीनतत्तद्व्यक्त्यभावप्रतियोगितावच्छेदकतत्तद्व्यक्तित्वावच्छिन्नासम्ब-न्धित्वस्य हेतुमति घटे सत्त्वात्तादृशाभावमादाय तत्र लक्षणसमन्वयादव्याप्तिर्न सम्भवतीति भावः ।

**अष्टद्रव्येति** । घटस्य पृथिव्यात्मकाष्टद्रव्यस्वरूपतया तदतिरिक्तत्वाभावेन तन्मात्रवृत्तिधर्मस्य घटत्वस्य हेतुत्वं न सम्भवतीत्याशयः ।

**ज्याय इति** । पृथिव्यादिचतुर्द्रव्यातिरिक्तत्वमेव द्रव्यविशेषणं, न त्वष्टद्रव्याति-रिक्तत्वमित्यभिप्रायः । **व्युदासादिति** । गगनस्य पृथिव्यादिचतुर्द्रव्यातिरिक्त-त्वेऽपि तस्य कालत्वाभावेन तन्मात्रवृत्तिगगनत्वस्य हेतुत्वनिरासम्भवादित्यर्थः ।

दीपिका

**नन्वष्टद्रव्यातिरिक्तेति** । नन्वष्टद्रव्यातिरिक्तत्वं यदि प्रत्येकं क्षित्यादिभिन्नत्वं-

दीपिका

तदा 'काल'पदवैयर्थ्यं स्यात्।

यदि च द्रव्यविभाजकीभूतधर्मावच्छिन्नप्रतियोगिताकाष्टभेदपरं, तदा घटत्वस्यापि तथात्वेन व्यापकत्वस्यापि गोत्वादौ प्रसिद्धिसम्भव इति चेदत्र केचित्—प्रत्येकभेद एव तात्पर्यं, 'काल'पदन्तु कालिकविशेषणतालाभायेत्याहुः।

वस्तुतः—कालावृत्ति-द्रव्यविभाजकधर्मावच्छिन्नप्रतियोगिताकाष्टभेदवत्त्वं तदतिरिक्तत्वं, 'काल'पदं कालावृत्तित्वलाभायेति ध्येयम्।

एवं 'धर्म'पदमपि येन सम्बन्धेन कालमात्रवृत्तित्वं तेन सम्बन्धेन हेतुतालाभाय।

एवं 'महाकालत्वं' परित्यज्यैतादृशहेत्वनुसरणं महाकालत्व-तद्व्यक्तित्वादिनानाधर्मसंग्रहाय।

यत्तु 'महाकाल'पदशक्यतावच्छेदको निरुक्तकालमात्रवृत्तिधर्म इति तदनुसरणमिति तु न युक्तम्। "—'चतुर्द्रव्यातिरिक्त' इति ज्यायः—"

—इति जगदीशग्रन्थासङ्गतेरित्यस्मद्गुरुचरणाः।

नन्वष्टद्रव्यातिरिक्तेत्यत्राव्याप्यवृत्तिधर्मत्वावच्छेदेन तादृशकालमात्रवृत्तिधर्मव्यापकत्वाभावः साधनीयः।

तत्र व्यापकत्वं—किं कालिकसम्बन्धेन प्रतियोगिव्यधिकरणनिरुक्तमहाकालत्वसमानाधिकरणाभावप्रतियोगित्वाऽभावरूपं? किं वा प्रतियोगिवैयधिकरण्याघटितनिरुक्तस्वप्रतियोगिमत्ताबुद्धिविरोधिताघटकसम्बन्धेन निरुक्तमहाकालत्वसमानाधिकरणाभावप्रतियोगित्वाभावरूपं?

नाद्यः—निरुक्तप्रतियोगित्वाभावरूपव्यापकत्वाऽप्रसिद्धेः साध्याप्रसिद्धिप्रसङ्गात्, नापि द्वितीयः—अव्याप्यवृत्तिधर्मे निरुक्तकालत्वसमानाधिकरणाभावप्रतियोगित्वाभावरूपव्यापकत्वाभावस्येष्टत्वेन सिद्धसाधनापत्तेः। न च व्यापकत्वसम्बन्धेन निरुक्तकालत्वाभावः साधनीयः, क्रियात्वादिरूपधर्मस्य तादृशव्यापकत्वरूपसम्बन्धप्रसिद्धेः, महाकालत्वादेश्च व्यधिकरणतया तादृशः सम्बन्धः प्रसिद्ध इति न कोऽपि दोष इति वाच्यम्। निरुक्तव्यापकतासम्बन्धो यदि प्रतियोगिवैयधिकरण्यघटितस्तदा निरुक्तकालत्वादिधर्मस्य व्यधिकरणतया प्रमेयत्वादावपि तदभावसत्त्वादव्याप्यवृत्तिपदवैयर्थ्यापत्तेः। यदि च प्रतियोगिवैयधिकरण्याघटितस्तदा निरुक्तयुक्त्या सिद्धसाधनापत्तेरिति चेत्—

अत्र केचित्,—अव्याप्यवृत्तितावच्छेदकधर्मं पक्षीकृत्य प्रतियोगिवैयधिकरण्यघटितव्यापकतावच्छेदकत्व,— तदघटितव्यापकतावच्छेदकत्वैतदुभयसाधारणैकरूपेण संसर्गत्वमादाय निरुक्तकालत्वाभावः प्रवेशनीयः।

दीधितिः

**—द्रव्यात्मककालमात्रवृत्तिधर्म्मस्य,—**

जागदीशी

कर्मात्मकखण्डकालस्यापि भिन्नकालीनतत्तद्द्रव्यक्तित्वावच्छिन्नाभाव-प्रतियोग्यनधिकरणत्वप्रसिद्ध्या तन्मात्रवृत्तिस्पन्दत्वादिहेतौ नाव्याप्तिरत-श्चरम—'द्रव्य'—पदम् ।

तथाविधकालत्वादावप्युक्तदिशा नाव्याप्तिरतो—'मात्र'—पदम् ।

विवृतिः

'द्रव्यात्मके'त्यस्य व्यावृत्तिमाह—**कर्मात्मकेति** । **स्पन्दत्वादिहेताविति** । कालिकेन गोत्वत्वसाध्यकस्पन्दत्वहेतावित्यर्थः ।

**नाव्याप्तिरिति** । 'द्रव्यात्मके'त्यनुक्तौ,—'पृथिव्यादिचतुर्द्रव्यातिरिक्त'पदेन स्पन्दमादाय,—तन्मात्रवृत्तिस्पन्दत्वस्वरूपहेतोरधिकरणे स्पन्दे—कालिकसम्बन्धेन तदसमानकालीनव्यक्त्यभावस्य प्रतियोगिव्यधिकरणतया लक्षणघटकत्वसम्भवान्ना-ऽव्याप्तिरित्यर्थः । **चरम-द्रव्यपदमिति** । स्पन्दस्य द्रव्यानात्मकतया,—तन्मात्र-वृत्तिधर्मस्य स्पन्दत्वस्य, हेतुत्वमेव न सम्भवतीति भावः ।

'मात्र'पदप्रयोजनमाह—**तथाविधकालत्वादाविति** । पृथिव्यादिचतु-र्द्रव्यातिरिक्तद्रव्यात्मक-महाकालवृत्ति-कालत्वादावित्यर्थः । **आदि**पदात्कालव्यक्तित्व परिग्रहः । **उक्तदिशेति** । पूर्वोक्त'भिन्नकालीने'त्यादिरीत्येत्यर्थः । **नाव्या-प्तिरिति** । तादृशकालत्वाधिकरणे घटादौ, घटाद्यसमानकालीनतत्तद्व्यक्त्यभावस्य कालिकेन प्रतियोगिव्यधिकरणत्वसम्भवान्नाव्याप्तिरित्यर्थः । **मात्रपदमिति** । काल-त्वस्य,—तथाविध-द्रव्येतर-घटादिवृत्तित्वेन,—तथाविधद्रव्यमात्रावृत्तित्वात्तस्य हेतु-त्वमेव न सम्भवतीत्याशयः ।

दीपिका

संसर्गतावच्छेदकरूपञ्च — स्वनिष्ठनिरूपकत्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणत्व-निष्ठावच्छेदकतानिरूपिताऽधिकरण-निष्ठावच्छेदकतानिरूपितनिरूपितत्व-निष्ठाऽवच्छेदक-ताभिन्ना सती,—स्वप्रतियोगिमत्त्वबुद्धिविरोधिताघटकसम्बन्धावाच्छिन्नत्व-निष्ठावच्छेद-कताभिन्ना सती,—स्वप्रतियोगितावच्छेदकावाच्छिन्नाऽधिकरणत्वसम्बन्धावच्छिन्न-स्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकताभिन्ना सती,—वृत्तिता-त्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिता वृत्तितानिष्ठावच्छेदकता,—तन्नि-रूपिताऽभावनिष्ठावच्छेदकतानिरूपितप्रतियोगितानिष्ठावच्छेदकतानिरूपितावच्छेदकता-त्व-निष्ठावच्छेदकताकसंसर्गताकस्वनिष्ठप्रतियोगिताकावच्छेदकताकभेदवत्त्वम् ।

दीधितिः

**—विशेषणताविशेषेण—**

जागदीशी

स्वरूपसम्बन्धेन हेतुतालाभाय,—'धर्म'—पदम्,

—अन्यथा कालिकादिसम्बन्धेन महाकालत्वाद्यधिकरणघटादौ प्रतियोगि-व्यधिकरणातीत-तत्तद्व्यक्तित्वावच्छिन्नाऽभावप्रसिद्ध्या नाऽव्याप्तिरिति ध्येयम् ।

तादृशधर्मस्य महाकालत्वादेः समवायादिना व्यापकत्वं संयोगाद्यव्याप्यवृत्तेः सुघटमित्यत उक्तं,—*विशेषणतेति* ।—कालिकविशेषणतेत्यर्थः ।

विवृतिः

'धर्म'पदप्रयोजनमाह—**स्वरूपसम्बन्धेनेति** । **अन्यथेति** । स्वरूपसम्बन्धेन निरुक्तधर्मस्य—महाकालत्वस्य—हेतुत्वानभ्युपगम इत्यर्थः । **तत्तद्व्यक्तित्वावच्छिन्नेति** । विषयित्व-विषयत्वान्यसम्बन्धेन विभिन्नकालीनयोराधाराधेयभावानभ्युपगमादिति भावः ।

हेतुघटकप्रत्येकपदानां व्यावृत्तिमुक्त्वा,—साध्यघटकप्रत्येकपदानां व्यावृत्तिं प्रदर्शयितुं,—प्रथमं प्रथमोपस्थित'विशेषणताविशेष'पदव्यावृत्तिमाह—

**तादृशधर्मस्येति** । पृथिव्यादिचतुर्द्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मस्येत्यर्थः । **समवायादिनेति** । **आदि**पदात्स्वरूपादिपरिग्रहः । 'संयोगाद्यव्याप्यवृत्ते'रित्यत्राप्यादिपदं संयोगाभावसङ्ग्राहकम्, एवञ्च समवायेन संयोगसाध्यकमहाकालत्वहेतौ, स्वरूपेण वा संयोगाभावसाध्यकमहाकालत्वहेतौ, महाकालत्वसमानाधिकरणसमवायादिना प्रतियोगिव्यधिकरणघटाद्यभावीयप्रतियोगितानवच्छेदकत्वस्य संयोगत्वादौ सत्त्वादव्याप्यवृत्तिसंयोगादेर्महाकालत्वव्यापकत्वं सुघटं स्यादित्याशयेनाह—**उक्तमिति** ।

**कालिकविशेषणतेति** । तथा च कालिकेन संयोगादेः साध्यत्वे, तेन सम्बन्धेन प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या भवत्यव्याप्तिरिति भावः ।

दीपिका

इत्थञ्च,—स्वनिष्ठनिरूपकताकाऽधिकरणतावन्निरूपितस्वप्रतियोगिमत्त्वबुद्धिविरोधिताघटकसम्बन्धावच्छिन्नवृत्तितावदभावप्रतियोगितावच्छेदकतासम्बन्धेन 'स्ववान्ने'त्याकारकभेदस्य,—

स्वनिष्ठनिरूपकताकाऽधिकरणतावन्निरूपितस्वप्रतियोगितावच्छेदकावच्छिन्नाऽ-

दीधितिः

## —अव्याप्यवृत्ति किमपि—

जागदीशी

व्याप्यवृत्ति-प्रमेयत्वादेः प्रतियोगिवैयधिकरण्याघटितमेव कालिक-सम्बन्धावच्छिन्नव्यापकत्वं सम्भवत्यत उक्तम्,—॥अव्याप्यवृत्तीति॥। तादृशसाध्यं,—घटादिकं, द्रव्यत्वादिकञ्च, तद्वतोऽपि—कालस्य,—तदनधिकरणदेशावच्छेदेन कालिकसम्बन्धावच्छिन्नतदभाववत्त्वात्;

विवृतिः

'अव्याप्यवृत्ति'पदव्यावृत्तिमाह—**व्याप्यवृत्तीति**। प्रतियोगिवैयधिकरण्याघटितं = हेतुसमानाधिकरणाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताघटितं, कालिकसम्बन्धावच्छिन्नव्यापकत्वं = कालिकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदकधर्मवत्त्वरूपं, **सम्भवतीति**। न च कालिकेन प्रमेयत्वसाध्यकमहाकालत्वहेतौ,—गगनादेः कालिकेन वृत्तिमत्त्वमते,—महाकालत्वसमानाधिकरणकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या प्रतियोगिवैयधिकरण्याघटितमपि 'व्यापकत्वं' कालिकेन प्रमेयत्वादौ दुर्घटमिति वाच्यम्।

व्याप्यवृत्तिसाध्यकस्थलीयलक्षणे— 'साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिता'पदेन साध्यतावच्छेदकसंसर्गातिरिक्तसम्बन्धावच्छिन्नत्व,—साध्यतावच्छेदकव्यापकनिष्ठत्वोभयाभाववत्प्रतियोगिताया एव विवक्षिततया,—समवायेन घटाभावमादायैव मेयत्वादौ महाकालत्वव्यापकत्वस्य सम्पादनीयत्वादिति ध्येयम्।

**अत उक्तमिति**। तथा च प्रमेयत्वस्य केनापि प्रकारेणाव्याप्यवृत्तित्वाऽसम्भवा'दव्याप्यवृत्ति'पदेन तस्य धर्त्तुमशक्यत्वादिति भावः।

ननु तर्हि कालिकेनाव्याप्यवृत्तेः कस्य पदार्थस्य साध्यत्वमभिमतमित्याकाङ्क्षायामाह—**साध्यमिति**। **घटादिकमिति**। 'आदिना'पटादेः परिग्रहः, निरुक्तसाध्यस्याऽव्याप्यवृत्तित्वमुपपादयति—**तद्वतोऽपीति**। घटादिमतो, द्रव्यत्वादिमतश्चेत्यर्थः।

कालस्य = खण्डकालस्य, तदनधिकरणदेशावच्छेदेन = घटाद्यनधिकरणदेशावच्छेदेन, द्रव्यत्वाद्यनधिकरणदेशावच्छेदेन च, तदभाववत्त्वात् = घटाद्यभावस्य,

दीपिका

धिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धावच्छिन्नवृत्तितावदभावप्रतियोगितावच्छेदकत्वसम्बन्धेन 'स्ववान्ने'त्याकारकभेदस्य च,—

—संग्रहान्नाऽसिद्धिर्न वा व्याप्यवृत्तिदलवैयर्थ्य"—मित्याहुः।

दीधितिः

**—व्यापकं न स्यात्,**

**स्वावच्छेदकसम्बन्धेन प्रतियोगिनोऽसम्बन्धिनि**

जागदीशी

न ह्येवम्विधो वाच्यत्वादिः, तदनधिकरणदेशाप्रसिद्ध्या तदवच्छेदेन कालिकसम्बन्धावच्छिन्नवाच्यत्वाभावस्य दैशिकविशेषणतया कालेऽसम्भवादिति भावः। ❀न स्यादिति❀।—तथा च 'कालो घटवान्महाकालत्वा'दित्यादौ व्याप्तिलक्षणाऽव्याप्तिरिति भावः॥

प्रथमविवक्षानुसारेण दोषं सङ्क्रमयति,—❀स्वावच्छेदकेति❀।

विवृतिः

द्रव्यत्वाद्यभावस्य च सत्त्वात्, तथा च स्वाधिकरणवृत्त्यभावप्रतियोगितया घटादिकं द्रव्यत्वादिकञ्चाव्याप्यवृत्त्येवेति भावः।

ननु निरुक्तरीत्या प्रमेयत्व-वाच्यत्वादिकमप्यव्याप्यवृत्ति स्यादित्यत आह—**नह्येवमिति। तदधिकरणदेशाप्रसिद्ध्येति।** वाच्यत्वादेः केवलान्वयित्वादितिभावः। **कालेऽसम्भवादिति।** न च कालिकसम्बन्धेन वाच्यत्वानधिकरणगगनाद्यवच्छेदेन काले कालिकसम्बन्धावच्छिन्नवाच्यत्वाभावः सम्भवतीति वाच्यम्। तदनधिकरणत्वघटकाधिकरणताया अव्याप्यवृत्तिताघटकसंसर्गातिरिक्तसम्बन्धसामान्येन विवक्षितत्वात्, अन्यथा निरुक्तरीत्या सर्वस्यैवाव्याप्यवृत्तितया साध्यघटक'मव्याप्यवृत्ति'पदं निरर्थकं स्यादिति ध्येयम्।

'नन्वि'त्यादिग्रन्थस्य तात्पर्यमाह—**तथा चेति। प्रथमविवक्षानुसारेणेति।** प्रतियोगितावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नासम्बन्धिहेतुसम्बन्धिवृत्त्यभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताघटितलक्षणाऽनुसारेणेत्यर्थः। दोषम् = अव्यापकत्वं।

**सङ्क्रमयतीति।** तथा च समवायेन पटत्वावच्छिन्नासंबन्धिमहाकालवृत्तिसम-

दीपिका

वस्तुतोऽष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मत्वावच्छेदेनाव्याप्यवृत्तितावच्छेदकघटत्वाद्यवच्छिन्नविधेयताकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतानतिरिक्तवृत्तिधर्माभावस्यैव साधनीयत्वान्नोक्तदोषः, तादृशजनकतानतिरिक्तवृत्तिधर्मप्रसिद्धिश्च क्रियात्वादावेव, हेतुस्तु कालिकसम्बन्धावच्छिन्नप्रतियोगिताविशिष्टान्यत्वरूपः, प्रतियोगितावैशिष्ट्यञ्च:—स्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतावद्भिन्नवृत्तित्वसम्बन्धेनेत्यस्मद्गुरुचरणाः।

दीधितिः

**काले वर्त्तमानस्याभावस्य प्रतियोगितायां,—तत्सम्बन्धावच्छिन्नत्वस्य,—तेन सम्बन्धेन यत्प्रतियोगिसम्बन्धि तदन्यत्वस्य च——कालेऽसम्भवात्।**

जागदीशी

प्रतियोगितावच्छेदकसम्बन्धेनेत्यर्थः। काले = महाकाले, तत्सम्बन्धावच्छिन्नत्वस्य = साध्यतावच्छेदकीभूतकालिकसम्बन्धावच्छिन्नत्वस्य, 'असम्भवा'दिति परेणान्वयः।

द्वितीयविवक्षानुसारेणाह,—❀ तेन सम्बन्धेनेति ❀।—साध्यतावच्छेदकीभूतकालिकसम्बन्धेनेत्यर्थः।

ननु—

विवृतिः

वायावच्छिन्नघटाभावस्य प्रसिद्धत्वेऽपि, तदीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाप्रसिद्ध्या प्रथमकल्पोक्तरीत्या घटादेर्न महाकालत्वव्यापकत्वमिति भावः।

**द्वितीयविवक्षानुसारेणेति**। साध्यतावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नासम्बन्धि-हेतुसम्बन्धि-वृत्त्यभावनिरूपितप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताघटितलक्षणानुसारेणेत्यर्थः। समवायादिना पटाद्यभावस्य प्रसिद्धावपि,—कालिकेन तदीयप्रतियोगितावच्छेदकपटत्वावच्छिन्नाऽसम्बन्धित्वस्य महाकालेऽसत्त्वात्साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नासम्बन्धित्वघटितं निरुक्तव्यापकत्वमप्रसिद्धमित्याशयः।

'प्रतियोगिव्यधिकरणाभाव'प्रसिद्धिमाशङ्कते—**नन्विति**। महाकालान्यत्व-

दीपिका

केचित्तु——अव्याप्यवृत्तितावच्छेदकधर्मत्वावच्छेदेन महाकालानुयोगिकानुमितीयकालिकसम्बन्धावच्छिन्नविधेयतावच्छेदकत्वाभावः साधनीयः। हेतुश्च—महाकालत्वलिङ्गकप्रमीयानुमितिजनकतावच्छेदकीभूतपक्ष-विषयतानिरूपितहेतु-विषयतानिरूपितवृत्तित्व-विषयतानिरूपिताधिकरणत्व-विषयतानिरूपितावच्छिन्नत्व-विषयतानिरूपितप्रतियोगित्व-विषयतानिरूपितावच्छेदकत्व-विषयतानिरूपिताभाव-विषयतानिरूपितविषयत्वाऽभाव इत्याहुः।

जागदीशी

—महाकालान्यत्वविशिष्टघटाभाव एव महाकाले प्रतियोगिव्यधिकरणः सुलभः—

—न चात्र 'विशेषणताविशेष'पदेन महाकालनिरूपितविशेषणताया एव विवक्षितत्वात्तादृशसम्बन्धेन निरुक्तप्रतियोगिवैयधिकरण्याप्रसिद्ध्यैवोक्ताऽभावस्यापि प्रतियोगिवैयधिकरण्यासम्भव इति वाच्यम्;—

विवृतिः

विशिष्टघटाभावः = स्वरूपेण महाकालभेदाधिकरणनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तितावद्घटाभावः, स च द्रव्यत्वसाध्यकस्थले प्रतियोगिव्यधिकरणः।

घटसाध्यकस्थले तु,–महाकालान्यत्वविशिष्टद्रव्यत्वाभाव एव तथा, अन्यथा महाकालान्यत्वविशिष्टघटाभावस्य साध्यतावच्छेदकघटत्व–तदितर-महाकालान्यत्ववैशिष्ट्योभयधर्मावच्छिन्नप्रतियोगिताकतया लक्षणाघटकत्वेन,—घटसाध्यकस्थले तस्य प्रतियोगिव्यधिकरणत्वोक्तेरसङ्गतत्वापत्तिरित्यस्मद्गुरुचरणाः।

सुलभ इति। तादृशघटस्य महाकालातिरिक्तकाल एव सत्त्वेन,—तादृशघटाभावप्रतियोगितावच्छेदकमहाकालान्यत्वविशिष्टघटत्वावच्छिन्नासम्बन्धित्वस्य महाकालेऽसत्त्वादिति भावः।

ननु—'नन्वि'त्यादिग्रन्थघटक'विशेषणताविशेष'पदस्य महाकालानुयोगिककालिकसम्बन्धपरत्वमेवोच्यतां, तावतैव महाकालान्यत्वविशिष्टघटाभावो न प्रतियोगिव्यधिकरणः, तदीयप्रतियोगितावच्छेदकीभूतमहाकालान्यत्वविशिष्टघटत्वावच्छिन्नस्य साध्यतावच्छेदकमहाकालानुयोगिककालिकसम्बन्धेनाधिकरणाऽप्रसिद्धेरिति–कुतः प्रतियोगिव्यधिकरणाभावप्रसिद्धिरित्याशङ्कते–**न चेति**। 'वाच्य'मिति परेणान्वयः। अत्र = 'नन्वि'त्यादिग्रन्थे,

दीपिका

**महाकालान्यत्वेति**। ननु महाकालान्यत्वविशिष्टघटाऽभावप्रतियोगितायां साध्यतावच्छेदक-तदितरोभयधर्मावच्छिन्नत्वस्य सत्त्वात्तादृशाभावस्य कथं लक्षणघटकत्वं, यदि च महाकालान्यत्ववैशिष्ट्यं घटत्वविशेषणमुच्यते, तदा घटत्वनिष्ठावच्छेदकताया निरवच्छिन्नत्वाभावेन पुनरपि लक्षणघटकत्वं तस्य न सम्भवतीति चेदत्र केचित्—घटत्वस्य नानात्वेन तैजसघटत्वावच्छिन्नसाध्यकस्थले महाकालाऽन्यत्वविशिष्टपार्थिवघटत्वावच्छिन्नाऽभावस्य, पार्थिवघटत्वावच्छिन्नसाध्यकस्थले तु महाकालान्यत्वविशिष्टतैजसघटत्वावच्छिन्नाऽभावस्य लक्षणघटकत्वसम्भव इति न कोऽपि दोष–इत्याहुः।

जागदीशी

—तथा सति 'कालमात्रवृत्तिधर्मस्य तादृशविशेषणतया—
—किमपि व्यापकं न स्या'दित्यस्यैव सम्यक्त्वे—'अष्टद्रव्यातिरिक्तत्वा'ऽभिधानस्य सन्दर्भविरोधापत्तेः,—

—'स्वरूपसम्बन्धेन गगनादेर्वृत्तित्वे तु' इत्यग्रिमग्रन्थविरोधप्रसङ्गाच्च ।

कालिकसम्बन्धेन गगनादेर्वृत्तिमत्त्वेऽपि तादृशसम्बन्धसामान्ये,—महाकालान्यत्वविशिष्टघटत्वावच्छिन्नप्रतियोगिताकत्वविरहात्तादृशघटत्वावच्छिन्नाभावस्यैव निरुक्तक्रमेण प्रतियोगिव्यधिकरणत्वसम्भवेन

विवृतिः

समाधत्ते—**तथा सतीति** । 'विशेषणताविशेष'पदेन महाकालानुयोगिककालिकसम्बन्धस्य विवक्षितत्वे सतीत्यर्थः । **अष्टद्रव्येति** । तथा च महाकालानुयोगिककालिकेन गोत्वसाध्यकघटत्वादिहेतोर्व्यभिचारितया लक्षणागमनेऽपि क्षत्यभावा'दष्टद्रव्यातिरिक्ते'त्याद्यभिधानमसङ्गतं स्यादिति भावः । सन्दर्भविरोधापत्तेः=ग्रन्थविरोधापत्तेः, यद्यपि—धर्मस्य किमपि व्यापकं न स्या'—दित्येव सम्यक्, कालपदस्य, वृत्तिपदस्यापि न किमपि प्रयोजनं, तथापि—कालपद-वृत्तिपदयोः पूर्वमपि व्यावृत्तेरनभिधानादिदानीमपि तदनुक्तौ न न्यूनतेति ध्येयम् ।

ननु—'नन्वि'त्यादिग्रन्थस्य,—'कालमात्रवृत्तिधर्मस्य तादृशविशेषणताविशेषेणाव्याप्यवृत्ति किमपि व्यापकं न स्या'दित्यर्थ एव तात्पर्यमस्त्विति न ग्रन्थविरोध इत्यतो 'विशेषणताविशेष' पदस्य महाकालानुयोगिककालिकसम्बन्धपरत्वे दोषान्तरमाह—**स्वरूपसम्बन्धेनेति** । कालिकसम्बन्धेनेत्यर्थः, तादृशसम्बन्धसामान्ये=महाकालानुयोगिककालिकसम्बन्धसामान्ये, निरुक्तक्रमेण=सम्बन्धधर्मिकोभयाभाव-

दीपिका

**तथा सति कालमात्रवृत्तिधर्मस्येति** । नन्वत्र 'धर्मस्य किमपि व्यापकं न स्या'दित्यस्यैव सम्यक्त्वे 'काल'पदं, 'वृत्ति' पदञ्च व्यर्थमिति कथं नोक्तमिति चेदत्र केचित्,—अव्याप्यवृत्तिधर्मे निरुक्तसम्बन्धेन व्यापकत्वाभावः साधयितुमशक्यः । किन्त्वव्याप्यवृत्तितावच्छेदकधर्मावच्छिन्नव्यापकतात्वावच्छेदेन निरुक्तकालिकसम्बन्धावच्छिन्नत्वाभावः साधनीयः । निरुक्तानुगतहेत्वनुभवबलात्,—कालवृत्तिर्यो यो धर्मस्तत्तद्धर्मव्यापकतैव च पक्षः, व्यापकतायाः—व्यापकस्य—व्याप्यस्य च भेदेन भिन्नत्वात्, इत्थञ्च—'काला'दिपदानुपादाने गगनस्यापि तादृशत्वात्तस्य व्यापकत्वाऽप्रसिद्ध्या—वाक्यस्याऽयोग्यत्वापत्तेः । तदुपादाने तु गगनस्य तादृशत्वाभावान्नानुपपत्तिरित्याहुः ।

जागदीशी

पूर्वमतस्यैव सम्यक्त्वादिति चेन्न,

—'इदानीं महाकालान्यत्वविशिष्टो घटः', 'कालोऽयं महाकालान्यत्वविशिष्टघटवा'नित्यादिप्रतीत्या महाकालस्यापि तत्तत्कालोपाध्यवच्छेदेन महाकालान्यत्वविशिष्टघटवत्त्वात्,—

विवृतिः

घटितलक्षणोक्तरीत्या, **पूर्वमतस्यैवेति** । गगनादेः कालिकसम्बन्धेन वृत्तिमत्त्वमते कालिकसम्बन्धसामान्ये,—गगनप्रतियोगिकत्व,— महाकालानुयोगिकत्वयोर्द्वयोरेव सत्त्वाद्गगनाभावोऽपि 'घटवान्महाकालत्वा'दित्यत्र न प्रतियोगिव्यधिकरणोऽतः सम्बन्धधर्मिकोभयाभावघटितलक्षणं परित्यज्य प्रतियोगिताधर्मिकोभयाभावघटितलक्षणमभिहितं दीधितिकृता,

—'विशेषणताविशेष'पदस्य महाकालानुयोगिककालिकसम्बन्धपरत्वे तु—तादृशकालिकसम्बन्धे, — महाकालान्यत्वविशिष्टघटत्वावच्छिन्नप्रतियोगिकत्वविरहेणोभयाभावसत्त्वान्महाकालान्यत्वविशिष्टघटाभावस्यैव सम्बन्धधर्मिकोभयाभावघटितलक्षणोक्तरीत्या प्रतियोगिव्यधिकरणत्वसम्भवेनोक्तलक्षणस्यैव निर्दोषतया प्रतियोगिताधर्मिकोभयाभावघटितलक्षणानुसरणस्य निर्बीजत्वापत्तेरिति भावः ।

'नन्वि'त्याद्याशङ्कां समाधत्ते—**नेति** । 'नन्विदानीं महाकालान्यत्वविशिष्टो घट' इति प्रतीतेरेतत्कालनिरूपितवृत्तित्वमात्रविषयकतया,—तत्तत्कालाभिन्ने महाकालेऽपि तादृशघटस्य वृत्तित्वमात्रं सिध्यतु, न त्वधिकरणत्वं, तथा च विशिष्टसत्ताया गुणवृत्तित्वेऽपि,—गुणस्य विशिष्टसत्ताभावाधिकरणतावत्,—महाकालान्यत्वविशिष्टघटस्य महाकालवृत्तित्वेऽपि,— तस्य तादृशघटाभावाधिकरणत्वे न किमपि बाधकमतस्तत्तत्कालस्य महाकालान्यत्वविशिष्टघटाधिकरणत्वावगाहिनीं प्रतीतिं प्रदर्शयति—

—**कालोऽयमिति** । तथा च निरुक्तप्रतीत्या तत्तत्कालाभिन्ने महाकाले, महाकालान्यत्वविशिष्टघटाधिकरणत्वसिद्धौ तत्र न तदभावः सम्भवतीति भावः,

तत्तत्कालोपाध्यवच्छेदेन=महाकालान्यत्वविशिष्टघटाधिकरणकालोपाध्यवच्छेदेन,

दीपिका

परे तु—"स्वाश्रयमात्रानुयोगिकसम्बन्धेनाव्याप्यवृत्तिधर्मे स्वव्यापकत्वाभावस्य साध्यतायामेव तात्पर्यं, स्वम् = उभयावृत्तिधर्मः । इत्थञ्च तादृशधर्मलाभायैव कालादि-पदं ।

'महाकालानुयोगिके'त्यत्र 'महाकाल'पदमनुगतस्वत्वलाभाय, अत एव तात्पर्यनाम्नि ग्रन्थे 'स्वविषय'पदं स्वरूपेणैव प्रवेश्य व्याप्तिर्वाच्ये'ति मथुरानाथेन प्रोक्त"—मित्याहुः ।

जागदीशी

—अन्यथोक्तप्रतीत्या खण्डकाल एव विशिष्टघटत्वावगाहने वस्तुमात्रस्यैव महाकालेऽसत्त्वप्रसङ्गात्, 'इदानीं' 'तदानी'मित्यादिप्रतीतिव्यतिरेकेण महाकालविषयिण्याः प्रतीतेः स्वरसतः कुत्राप्यसत्त्वात्।

न चैवं खण्डकालस्याधिकरणत्वे मानाभावः,—'पटध्वंसविशिष्टः कालः पटवदन्य' इत्यादिप्रतीतेः प्रमात्वानुरोधेनैव खण्डकालस्यापि तथात्वादिति सिद्धान्तानुसारी पन्थाः।

[1]अपरे तु—"महानसीयवह्नित्वेन,-वह्नि-घटोभयत्वेन वा,-अवच्छिन्नप्रतियोगिताकस्य धूमसामानाधिकरण्याभावस्य प्रतियोगितावच्छेदकत्वं वह्नित्वेऽप्यस्तीत्यव्याप्तिभिया-ऽवश्यं साध्यतावच्छेदकत्वाऽघटको यः साध्य-

विवृतिः

वस्तुमात्रस्य महाकालेऽसत्त्वे हेतुमाह—**इदानीमिति**। महाकालविषयिण्याः प्रतीतेः = 'महाकाले घटः', 'महाकालो घटवान्वे'त्यादिप्रतीतेः, स्वरसतः = स्वभावतः, कुत्रापि = कस्मिन्नपि समये, एतावता—'महाकालान्यत्वविशिष्टघटस्य महाकाले सत्त्वान्न महाकालान्यत्वविशिष्टघटाभावोऽपि महाकाले प्रतियोगिव्यधिकरण'—इति समाहितम्।

न'न्विदानीं घटः' 'तदानीं घट'इत्यादिप्रतीत्याऽपि यदि घटाधिकरणत्वं महाकाले सिध्यति, तदा तत्तत्खण्डकालस्याधिकरणत्वमेव मा स्वीक्रियतामित्याशयेन शङ्कते—**न चैवमिति**। 'मानाभाव'इति परेणान्वयः। एवं = निरुक्तप्रतीतेर्महाकालनिष्ठाऽधिकरणत्वावगाहित्वे,

निरस्यति—**पटध्वंसविशिष्ट इति**। **प्रमात्वानुरोधेनैवेति**। तथा च निरुक्तप्रतीतिविषयस्य पटध्वंसाधिकरणकालस्य, पटाधिकरणकालस्य च महाकालस्वरूपत्वे, महाकाले महाकालभेदासत्त्वेन—पटाधिकरणकालभेदावगाहिन्या उक्तप्रतीतेर्भ्रमत्वं स्यादतः,—पटाधिकरणकालात्पटध्वंसाधिकरणकालस्यातिरिक्ततया खण्डकालस्याप्यधिकरणत्वं स्वीकरणीयमिति भावः। तथात्वात् = अधिकरणत्वात्।

"—साध्यतावच्छेदकभिन्नसाध्यवृत्तिधर्मानवच्छिन्नत्वस्य महानसीयवह्न्यभावादिवारणायावश्यं हेतुमन्निष्ठाभावप्रतियोगितायां निवेशनीयतया तत एव महाकालान्यत्वविशिष्टघटाभावस्यापि घटसाध्यकस्थले लक्षणाघटकत्वं सम्भवतीति—"केषांचिन्मतं दूषयितुमुपन्यस्यति—**परे त्विति**। एतन्मतं पूर्वमेव [१२१.] प्रपञ्चितमस्माभिः,

१. 'परं तु' इति मुद्रितपुस्तकेषु पाठो दृश्यते।

जागदीशी

—वृत्तिधर्मस्तदनवच्छिन्ना हेतुसमानाधिकरणाभावस्य प्रतियोगिता—लक्षणे निवेशनीया,—

—प्रत्येकमुभयत्र पर्य्याप्तिसम्बन्धेनासतो धर्मस्य तादृशसम्बन्धेनोभयवृत्तित्वासम्भवेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणभिन्नत्वस्य निवेशायोगात्,

एवञ्च प्रकृते महाकालान्यत्वविशिष्टघटत्वाद्यवच्छिन्नाभावस्य प्रतियोगितायाः साध्यतावच्छेदकाघटकेन महाकालान्यत्ववैशिष्ट्यरूपसाध्यनिष्ठधर्मेणाऽवच्छिन्नत्वात्तादृशप्रतियोगिताकाभावमादाय न प्रतियोगिव्यधिकरणाभावस्य प्रसिद्धिसम्भावनाऽपीति—"प्राहुः,—

—तच्चिन्त्यम् ,—

—'प्रमेयवान् वाच्यत्वा'दित्यादौ हेतुसमानाधिकरण-तादृशप्रतियोगिताकाभावाऽप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् ।

वस्तुतो—'यादृशप्रतियोगितावच्छेदकविशिष्टस्यानधिकरणत्वं हेतुमत' इत्यत्रावच्छेदकवैशिष्ट्यमवश्यं,—साध्यतावच्छेदकताघटकसम्बन्धेनैव वाच्यम् ,—

—अन्यथा तप्ताय:पिण्डस्यापि कालिकसम्बन्धेन[1] धूमत्वविशिष्टस्य वह्न्यादेः संयोगसम्बन्धेनाऽधिकरणतया 'धूमवान्वह्ने'रित्यादावतिव्याप्त्यापत्तेः,

विवृतिः

महाकाले महाकालान्यत्वविशिष्टघटवत्त्वानभ्युपगमेऽपि न क्षतिरित्याह——वस्तुत इति । अन्यथेति । सम्बन्धसामान्येन यादृशप्रतियोगितावच्छेदकवैशिष्ट्याभिधान इत्यर्थः । अतिव्याप्त्यापत्तेरिति । धूमाभावरूपसाध्याभावस्य

दीपिका

**अन्यथा तप्ताऽयःपिण्डस्यापीति ।** ननु घटाऽभावीयप्रतियोगिताऽवच्छेदकघटत्वादेः कालिकादिसम्बन्धेन वैशिष्ट्यावच्छिन्नं यद्वह्न्यादिकं संयोगेन तदधिकरणताया अयःपिण्डे सत्त्वात्प्रतियोगिव्यधिकरणाऽभावाऽप्रसिद्धयैव नातिव्याप्तिरिति चेन्न । तदयःपिण्डाऽसंयुक्तपदार्थस्यासमानकालीना या क्रिया तद्वतोऽभावमादायैवातिव्याप्तिसम्भवादिति ध्येयम् ।

---

१. 'यद्धूमत्वविशिष्टं वह्न्यादिकं संयोगसम्बन्धेन तदधिकरणतये'ति मुद्रितपुस्तकेषु पठ्यते ।

जागदीशी

इत्थञ्च यत्र समवायेन घटत्वविशिष्टस्य कालिकसम्बन्धेन साध्यता, तत्र महाकालान्यत्वविशिष्टघटत्वावच्छिन्नाभावस्य साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नत्वमप्रसिद्धं—

—स्वरूप—समवायाभ्यामेव तत्र तथात्वात्,—

विवृतिः

लक्षणाघटकत्वादतिव्याप्तिरित्यर्थः । न च 'गुणवान्महाकालत्वा'दित्यत्र कालिकेन स्वप्रतियोगितावच्छेदकविशिष्टस्य समवायेनाधिकरणताया महाकाले सत्त्वात्प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽव्याप्तिसम्भवेऽतिव्याप्त्यभिधानमसङ्गतमिति वाच्यम् । विषयितया गगनविशिष्टज्ञानाभावस्यैव तत्र लक्षणघटकत्वसम्भवात् सम्बन्धसामान्येनैव गगनविशिष्टस्य समवायेनाधिकरणताया महाकाले विरहादिति भावः ।

**इत्थञ्चेति ।** निरुक्तातिव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकवैशिष्ट्यविवक्षणे चेत्यर्थः । **अप्रसिद्धमिति ।** साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतापर्याप्त्यधिकरणसमवायत्वविशिष्टसमवायेन महाकालान्यत्ववैशिष्ट्य—घटत्वयोरवच्छिन्नत्वमप्रसिद्धमित्यर्थः । **स्वरूप-समवाभ्यामिति ।** स्वरूपेण समवायेन चेत्यर्थः । यथाश्रुतार्थस्तु न सङ्गच्छते, तादृशोभयसम्बन्धेन कस्याऽपि प्रतियोगितावच्छेदकावच्छिन्नत्वाप्रसिद्धेः । **तथात्वादिति ।** स्वरूपेण महाकालान्यत्ववैशिष्ट्यावच्छिन्नत्वात्, समवायेन च घटत्वावच्छिन्नत्वादित्यर्थः ।

दीपिका

**स्वरूप-समवायाभ्यामिति ।** अत्र 'स्वप्रतियोगिव्यधिकरण'पदेन स्वप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वे सति साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति यदधिकरणत्वं तदभावो विवक्षणीयः । प्रथमं वृत्तित्वं,—स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, द्वितीयं वृत्तित्वञ्च,—स्वनिरूपितनिरूपकतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ।

अन्यथा तद्धर्मावच्छिन्नप्रतियोगितैव तद्धर्मावच्छिन्नस्य सम्बन्ध' इति मते यत्र प्रतियोगितासम्बन्धेन वह्निः साध्यत्वं, वह्नित्वस्य च समवायेन साध्यतावच्छेदकत्वं, वह्निसामान्याभावत्वकालिकसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकसमवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावत्वान्यतरस्य हेतुता, तत्र सम्बन्ध-

जागदीशी

—विशिष्टनिरूपितसमवायस्यानभ्युपगमात्,—

—[ अतः ] तादृशाभावमादाय न प्रसिद्धिसम्भव इति ध्येयम् ।

विवृतिः

एतेन,—केवलस्वरूपेण, केवलसमवायेन च महाकालान्यत्ववैशिष्ट्य-घटत्वोभयावच्छिन्नत्वाऽप्रसिद्धिरित्यपि—समाहितम् ।

ननु महाकालान्यत्ववैशिष्ट्यं सामानाधिकरण्यघटितसामानाधिकरण्यसम्बन्धेन घटत्वस्यैव विशेषणं, न तु घटस्य,

एवञ्च—साध्यतावच्छेदकताघटकीभूतशुद्धसमवायेनाऽपि महाकालान्यत्वविशिष्टघटाभावप्रतियोगितावच्छेदकं यन्महाकालान्यत्वविशिष्टं घटत्वं,—तदवच्छिन्नत्वप्रसिद्धेस्तादृशाभावस्यैव प्रतियोगिव्यधिकरणत्वेन लक्षणघटकत्वसम्भवात्कुतो 'घटवान् महाकालत्वा'दित्यत्राव्याप्तिरित्यत आह—**विशिष्टनिरूपितेति**। महाकालान्यत्ववैशिष्ट्यावच्छिन्नावच्छेदकतायां घटत्वनिष्ठायां शुद्धसमवायावच्छिन्नत्वस्यानभ्युपगमात्

——अपि तु तादृशविशिष्टघटत्वप्रतियोगिकसमवायावच्छिन्नत्वस्यैव तत्र स्वीकरणीयत्वादिति भावः ।

——"साध्य-साधनभेदेन व्याप्तेर्भिन्नतया,—यत्र वैशिष्ट्यावच्छिन्नं साध्यं, तत्र प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावघटिता व्याप्तिर्वाच्या, अन्यथा 'विशिष्टसत्तावान् जाते'रित्यत्रातिव्याप्तिः स्यात्, विशिष्टसत्ताऽभावीयप्रतियोगित्वाश्रयसत्तानधिकरणत्वस्य हेत्वाधिकरणे गुणादावसत्त्वेन विशिष्टसत्ताऽभावस्य लक्षणाघटकत्वात्,—

न चैवं 'भूतत्व-मूर्त्तत्वोभयवान्मूर्त्तत्वा'दित्यत्रातिव्याप्तिः, भूतत्व-मूर्त्तत्वोभयस्य भूतत्वविशिष्टमूर्त्तत्वस्वरूपतया तत्रापि वैशिष्ट्यावच्छिन्नस्य साध्यत्वात्, यत्र तु वैशिष्ट्यानवच्छिन्नं साध्यं तत्र—प्रतियोगित्वाश्रयानधिकरणहेत्वधिकरणवृत्त्यभावघटितैव व्याप्तिर्वाच्या, अव्याप्त्यादिदोषविरहेण लाघवात्,—

दीपिका

द्वयस्य यदधिकरणतानिरूपकतावच्छेदकत्वं तदधिकरणत्वस्य व्यभिचारानिरूपकाधिकरणे सत्त्वादतिव्याप्तिः स्यादिति ध्येयम् ।

**केचित्तु,**—"ध्वंसवान् वह्नेरित्यत्रातिव्याप्तिवारणायाधिकरणतायां द्वितीयवृत्तित्वनिवेशः, अन्यथा समवाय-कालीनकालिक-सम्बन्धेन ध्वंसाधिकरणताया अपि तादृशत्वाद्धेत्वधिकरणत्वे सत्त्वेन साध्याभावस्य लक्षणाघटकत्वं स्यात्, साक्षात्परम्परासाधारणावच्छेदकत्वस्वीकारेण निरुक्तध्वंसाधिकरणतायाः समवायावच्छिन्नत्वादिति" प्राहुः ।

जागदीशी

'केचित्तु—"साध्य-साधनभेदेन[2] व्याप्तेर्भेदाद्विशिष्टसाध्यकस्थल एव 'यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत' इत्यादि वक्तव्यम्,

अविशिष्टसाध्यकस्थले तु—'यादृशप्रतियोगिताश्रयानधिकरणत्वं हेतुमत' इत्येव लाघवाद्वाच्यम्,—

तथा च शुद्धघटस्य साध्यतायां महाकालान्यत्वविशिष्टघटाभावोऽपि प्रतियोगिसमानाधिकरण एव,

प्रतियोगिता च प्रतियोगितावच्छेदकधर्मस्वरूपैव, लाघवात्,—

—न तु प्रतियोगिस्वरूपा,—

—तेषां नानात्वेन गौरवादतो,—नैकप्रतियोग्यनधिकरणतामादाय 'संयोग्येतत्त्वा' दित्यादावव्याप्ति"—रित्याहुः,

—तच्चिन्त्यम्,—

—'कालो घटवान् महाकालत्वा'दित्यादावव्याप्तिवारणार्थमेवाऽविशिष्टसाध्यकस्थलेऽपि प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वप्रवेशस्य प्रामाणिकतया गौरवस्याकिञ्चित्करत्वादिति ।

विवृतिः

न च 'संयोग्येतद्वृक्षत्वा'दित्यत्राव्याप्तिः, संयोगाभावप्रतियोगित्वाश्रयीभूतजलादिवृत्तिसंयोगानधिकरणत्वस्य वृक्षे सत्त्वादिति वाच्यम् । प्रतियोगितायाः प्रतियोगितावच्छेदकस्वरूपतया,—संयोगत्वरूपसंयोगाभावप्रतियोगित्वावच्छिन्नानधिकरणत्वस्य वृक्षेऽसत्त्वात्, एवञ्च वैशिष्ट्याद्यनवच्छिन्नघटसाध्यकमहाकालत्वहेतुकस्थले प्रतियोगित्वाश्रयानधिकरणत्वस्यैव हेत्वधिकरणे निवेशनीयतया न महाकालान्यत्वविशिष्टघटाभावो लक्षणघटकः, तदीयप्रतियोगित्वाश्रयीभूतकेवलघटस्य कालिकसम्बन्धेनानधिकरणताया हेत्वधिकरणे महाकालेऽसत्त्वादिति"—केषांचिन्मतं दूषयितुमुपन्यस्यति—केचित्त्विति ।

प्रतियोगिसमानाधिकरण एव = प्रतियोग्यधिकरणमहाकालवृत्तिरेव, एकप्रतियोग्यधिकरणतां = जलादिवृत्तिसंयोगाधिकरणतां ।

प्रामाणिकगौरवस्याकिञ्चित्करत्वमभिप्रेत्य दूषयति—कालो घटवानिति । प्रामाणिकतया=अव्याप्तिवारकत्वेन प्रमाणसिद्धतया, अकिञ्चित्करत्वादिति ।

---

१. 'यत्त्वि'ति पाठान्तरम् ।

२. 'साध्यभेदेन व्याप्तेर्भिन्नत्वा'दिति लिखितपुस्तकपाठः ।

दीधितिः

**न च तादृशसम्बन्धेन हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यवृत्ति-प्रतियोगितावच्छेदकविशिष्टप्रतियोगिसामान्यकत्वमेव वक्तव्यं, तथा चावृत्तिगगनाद्यभावद्वारिकैव तत्प्रसिद्धिः ।**

जागदीशी

'सार्वभौम'मतमाशङ्क्य निराचष्टे,—❀ न चेति ❀ ।—'वाच्य'मिति परेणान्वयः । ❀ तादृशसम्बन्धेनेति❀ । साध्यतावच्छेदकसम्बन्धेनेत्यर्थः । इद'ञ्चावृत्ती'त्यस्य—प्रतियोगिन्या—वृत्त्याऽन्वितं,

विवृतिः

तथा च वैशिष्ट्यानवच्छिन्नसाध्यकस्थले प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्व-निवेशस्य प्रयोजनान्तरविरहेऽपि 'घटवान्महाकालत्वा'दित्यत्राव्याप्तिवारणाय महाकालान्यत्वविशिष्टघटाभावस्य प्रतियोगिव्यधिकरणत्वसम्पादनाय तन्निवेशस्या-ऽवश्यकतया गौरवस्याऽकिञ्चित्करत्वात्, नह्यव्याप्तिदानार्थं प्रतियोगित्वाश्रयान-धिकरणत्वघटितप्रतियोगिवैयधिकरण्यस्य निवेशः सम्भवति, अव्याप्त्यादिवारक-निवेशस्यैव सर्वैरादरणीयत्वादिति भावः ।

दीधितौ—**यत्किञ्चिदिति ।** यत्किञ्चिद्धेत्वधिकरणव्यक्तिनिरूपितसाध्य-तावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभाववत्स्वप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगि-सामान्यको योऽभावस्तत्त्वं 'प्रतियोगिवैयधिकरण्यं' ।

यदभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसामान्यं,—साध्यतावच्छेदकस-म्बन्धावच्छिन्नयत्किञ्चिद्धेत्वधिकरणव्यक्तिनिरूपितवृत्तित्वाभाववत्, — तदभाव-व्यक्तित्वं 'प्रतियोगिवैयधिकरण्य' मिति तु फलितम् ।

**तथा चेति ।** निरुक्तक्रमेण प्रतियोगिवैयधिकरण्यविवक्षणे चेत्यर्थः । तत्प्रसिद्धिः = प्रतियोगिवैयधिकरण्यप्रसिद्धिः,

'तादृशसम्बन्धेने'त्यत्र तृतीयार्थस्यान्वयमाह—**इदञ्चेति ।** साध्यता-वच्छेदकसम्बन्धार्थकतादृशपदोत्तरतृतीयार्थावच्छिन्नत्वञ्चेत्यर्थः । अवृत्तीत्यस्य = वृत्तित्वाभावस्य, प्रतियोगिन्यां=प्रतियोगिभूते, वृत्तौ=वृत्तित्वे, 'तादृशसम्बन्ध'-पदस्य प्रतियोगितावच्छेदकसम्बन्धार्थकत्वे 'वह्निमान्धूमा'दित्यत्र समवायेन वह्न्यभावमादायाव्याप्तिः, तदीयप्रतियोगितावच्छेदकवह्नित्वावच्छिन्नस्य सम-वायेन हेत्वधिकरणे पर्वतादाववर्त्तमानत्वादतस्तादृशप्रतियोगिव्यधिकरणा-ऽभावप्रतियोगितानवच्छेदकघटकप्रतियोगिता यदि साध्यतावच्छेदकसम्ब-

१ प्रतियोगिन्यां वृत्तावन्वित'मिति पाठान्तरम् ।

दीधितिः

**सत्ताद्यधिकरणकर्म्मादौ समवायेन ज्ञानसामान्यस्य,—**
**—संयोगसामान्यस्य चावृत्तेर्नातिप्रसङ्गः,**

जागदीशी

तादृशपदस्य प्रतियोगितावच्छेदकसम्बन्धपरत्वे पुनरग्रे 'प्रतियोगिता'—साध्यतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या ।

'तादृशसम्बन्धेने'त्यस्य फलमाह,—❀ सत्तादीति ❀। [1]विषयताया वृत्त्यनियामकत्वमते, सत्त्ववति घटादौ ज्ञानाभावस्य सहजत एव प्रतियोगिवैयधिकरण्यं सम्भवतीत्यत:,—❀ संयोगसामान्यस्य चेति ।❀

नातिप्रसङ्ग इति ❀ ।—'ज्ञानवान्'–संयोगवान्–वा सत्त्वा'दित्यादौ नातिप्रसङ्ग इत्यर्थः ।

विवृतिः

न्धावच्छिन्नत्वेन विवक्ष्यते, तदा न कोऽपि दोष इत्याशयेनाह—**तादृशपदस्येति** । इदमापाततः—वस्तुतस्तादृशपदस्य साध्यतावच्छेदकसम्बन्धपरत्वमेवाऽवश्यकमन्यथा 'धनी चैत्रत्वा'दित्यत्र स्वामित्वसम्बन्धेन धनस्य साध्यतास्थले साध्यतावच्छेदक—स्वामित्व—सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिः स्यादिति ध्येयम् ।

यत्किञ्चिद्धेत्वधिकरणवृत्तितायाः सम्बन्धसामान्यावच्छिन्नत्वेन विवक्षणेऽपि 'ज्ञानवान् सत्त्वा'दित्यत्र नाऽतिव्याप्तिः, ज्ञानाभावप्रतियोगितावच्छेदकावच्छिन्नस्य ज्ञानस्य,—सत्ताऽधिकरणे गगनादौ केनाऽपि सम्बन्धेनाऽवृत्त्या,—ज्ञानाभावरूप–साध्याभावस्य लक्षणाघटकत्वात्, विषयतासम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नगगनादिवृत्तित्वस्य वक्तुमशक्यत्वादित्याह—**विषयताया इति** । 'घटादा'वित्यादिना गगनादिपरिग्रहः, अन्यथा कालिकेन घटे ज्ञानस्य वर्त्तमानत्वात् 'ज्ञानवान् सत्त्वा'दित्यत्राप्यव्याप्तिसम्भवे साध्यान्तरानुसरणमसङ्गतं स्यादिति भावः ।

सहजतः = यत्किञ्चिद्धेत्वधिकरणवृत्तितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानुपादानेऽपि,

**नातिप्रसङ्ग इति** । सम्बन्धसामान्येन हेत्वधिकरणवृत्तित्वविवक्षणे—संयोगवान् सत्त्वा'दित्यत्र संयोगाभावप्रतियोगितावच्छेदकावच्छिन्नस्य संयोगसामान्यस्य

---

१ 'विषयताया वृत्त्यनियामकत्व' इत्येव क्वाचित्पाठः ।

दीधितिः

**भूतत्व-मूर्त्तत्वोभयत्वविशिष्टं,—गुण-कर्म्मान्यत्वविशिष्टसत्तात्व—**
**—विशिष्टसत्तादिकन्तु न मनोगुणादिवृत्ति,**

जागदीशी

सत्तावद्वृत्तित्वसामान्याभावस्य संयोगादावसत्त्वादुक्तातिव्याप्तिवारण-मेव 'यत्किञ्चित्'पदस्यापि प्रयोजनमित्यवधेयम् ।

'प्रतियोगितावच्छेदकविशिष्टे'त्यस्य,—फलमाह,—❀भूतत्वेत्यादि ❀।

स्वयं मनसः खण्डनाद्भूतत्व-मूर्त्तत्वोभयसाध्यकमूर्त्तत्वस्य सद्धेतुतामाशङ्क्याऽऽह,—❀ गुणकर्मान्यत्वे ❀ त्यादि ।

'विशिष्टान्त'द्वयं मनो—गुणयोः क्रमेणान्वितम् ।

विवृतिः

हेत्वधिकरणगुणादौ कालिकेन वर्त्तमानतया सम्बन्धसामान्येन तदवर्त्तमानप्रतियो-गिसामान्यकगगनाभावमुपादायातिप्रसङ्गः, साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेन हेत्वधिकरणवृत्तित्वविवक्षणे तु—संयोगाभावप्रतियोगिनः—संयोगादेः—समवायेन गुण-कर्मादौ वृत्तित्वविरहेण संयोगाभावरूपसाध्याभावस्य लक्षणघटकत्वान्नातिव्या-प्तिरित्यर्थः ।

न च सत्ताधिकरणे नित्यगुणादौ केनापि सम्बन्धेन संयोगस्य वृत्तित्वविरहा-त्सम्बन्धसामान्येन हेत्वधिकरणवृत्तित्वनिवेशेऽपि,—'संयोगी सत्त्वा' दित्यादौ नाति-प्रसङ्ग इति वाच्यम् । जन्यत्वविशिष्टसत्त्वस्यात्र हेतुत्वेनाभिप्रेततयाऽतिप्रसङ्गसम्भ-वादिति ध्येयम् ।

हेत्वधिकरणे यत्किञ्चित्त्वाविवक्षणे—'संयोगी सत्त्वा'दित्यत्रातिव्याप्तिः, संयोगा-भावप्रतियोगिनः—संयोगस्य—समवायेन हेत्वधिकरणद्रव्यवृत्तित्वात्संयोगाभावस्य लक्षणाघटकत्वात्,

यत्किञ्चित्त्वोपादाने तु,—यत्किञ्चिद्धेत्वधिकरणे गुण-कर्मादौ संयोगस्य समवा-येनावृत्त्या साध्याभावस्य लक्षणघटकत्वान्नातिप्रसङ्ग इत्याह—**सत्तावद्वृत्तीति ।**

उक्तातिव्याप्तिवारणार्थं = 'संयोगी सत्त्वा'दित्यत्रातिव्याप्तिवारणार्थम्, यत्कि-ञ्चिदित्यस्य=हेत्वधिकरणत्वसमानाधिकरणोभयावृत्तितत्तदधिकरणव्यक्तित्वरूपधर्मा-वच्छिन्नस्य । स्थलान्तरेऽतिव्याप्तिं प्रयोजनमाह—**स्वयमिति ।** दीधितिकारेणैवे-त्यर्थः । तथा च मनसोऽसत्त्वे मूर्त्तत्वाधिकरणे पृथिव्यादिचतुष्टये,—भूतत्व-मूर्त्तत्वोभय-रूपसाध्यस्य सत्त्वेन निरुक्तहेतोः सद्धेतुतया-तत्रातिव्याप्तिदानमसङ्गतमतो 'गुण-कर्मा-न्यत्वविशिष्टसत्तावान् जाते'रित्यत्रातिव्याप्त्यभिधानमिति भावः । विशिष्टान्तद्वयं= भूतत्व-मूर्त्तत्वोभयत्वविशिष्टं, विशिष्टसत्तात्वविशिष्टञ्च । **क्रमेणान्वितमिति ।**

जागदीशी

इदञ्च विशिष्टस्यानतिरिक्तत्वं, विशिष्टधर्मावच्छिन्नाधेयत्वस्यातिरिक्तत्वमित्यभ्युपेत्य,

विवृतिः

प्रथमं विशिष्टं,—न मनोवृत्ति, द्वितीयञ्च—न गुणवृत्तीत्यादिरीत्यान्वितमित्यर्थः ।

तथा च यदभावप्रतियोगित्वाश्रयसामान्यं,—यत्किञ्चिद्धेत्वधिकरणे साध्यतावच्छेदकसम्बन्धेनावर्त्तमानं,— तदभावप्रतियोगितानवच्छेदकत्वविवक्षणे,–भूतत्व-मूर्त्तत्वोभयाभावप्रतियोगित्वाश्रयस्य मूर्त्तत्वस्य मनसि सत्त्वेन तदभावस्य लक्षणाऽघटकत्वादभावान्तरमादाय 'भूतत्व–मूर्त्तत्वोभयवान्मूर्त्तत्वा'दित्यत्रातिव्याप्तिः,

एवं—गुण-कर्मान्यत्वविशिष्टसत्ताभावप्रतियोगित्वाश्रयीभूतायाः सत्ताया हेत्वधिकरणे गुणे वर्त्तमानतया,–गुण-कर्मान्यत्वविशिष्टसत्ताभावस्यापि लक्षणाऽघटकतया 'विशिष्टसत्तावान् जाते'रित्यत्राऽतिव्याप्तिरतः,–स्वप्रतियोगितावच्छेदकावच्छिन्नस्यैव हेत्वधिकरणाऽवृत्तित्वं विवक्षणीयं, तथा सति तादृशोभयाभावप्रतियोगितावच्छेदकावच्छिन्नस्य भूतत्व-मूर्त्तत्वोभयस्य मनस्यसत्त्वेन,–विशिष्टसत्ताऽभावप्रतियोगितावच्छेदकावच्छिन्नाया विशिष्टसत्तायाश्च गुणाद्यवृत्तित्वेन,—साध्याभावस्य लक्षणघटकत्वान्नातिव्याप्तिरिति भावः ।

ननु भूतत्व-मूर्त्तत्वोभयस्य तादृशोभयाभावप्रतियोगित्वाश्रयशुद्धमूर्त्तत्वाद्भिन्नस्य सार्वभौममते भूतत्वविशिष्टमूर्त्तत्वस्वरूपस्य मनस्यवर्त्तमानतया,–विशिष्टसत्ताऽभावप्रतियोगित्वाश्रयीभूताया अपि शुद्धसत्तातो भिन्नाया विशिष्टसत्ताया,—गुणाद्यवृत्तितया,–निरुक्तभूतत्व-मूर्त्तत्वोभयाभावस्य, विशिष्टसत्ताभावस्य च लक्षणघटकत्वसम्भवेन,–प्रतियोगितावच्छेदकावच्छिन्ने 'हेत्वधिकरणावृत्तित्व'विवक्षणमनर्थकम् , एवं विशिष्टसत्तात्वावच्छिन्नवृत्तित्वस्य शुद्धसत्तात्वावच्छिन्नवृत्तित्वाभिन्नतया,–सत्तात्वाद्यवच्छिन्ने गुणवृत्तित्वसत्त्वे विशिष्टसत्ताद्यभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वाद्यवच्छिन्नेऽपि गुणवृत्तित्वस्यावश्यं स्वीकरणीयतया,—प्रतियोगितावच्छेदकावच्छिन्नसामान्ये हेत्वधिकरणावृत्तित्वविवक्षणेऽपि उभयत्रातिव्याप्तिरस्त्येवेत्यत आह—**इदञ्चेति** । निरुक्तातिव्याप्तिदानञ्चेत्यर्थः । विशिष्टस्य=भूतत्वविशिष्टमूर्त्तत्वस्य, गुण-कर्मान्यत्वविशिष्टसत्त्वस्य च, अनतिरिक्तत्वं=शुद्धसत्तादितोऽनतिरिक्तत्वम्, एतेन,–प्रतियोगितावच्छेदकपर्यन्तानुसरणेऽतिव्याप्तिरस्त्येवेति-सूचितम् ।

विशिष्टधर्मावच्छिन्नाधेयत्वस्य = विशिष्टसत्तात्वाद्यवच्छिन्नाधेयत्वस्य, अतिरिक्तत्वं = शुद्धसत्तात्वावच्छिन्नाधेयत्वादितो भिन्नत्वम् , एतेन,–प्रतियोगितावच्छेदकावच्छिन्नपर्यन्तानुसरणे नातिव्याप्तिरिति–सूचितम् ।

दीधितिः

**—संयोगसामान्यन्तु न किञ्चिद्द्रव्यावृत्तीति वाच्यम्; —विशिष्टस्यानतिरिक्तत्वात्,**

जागदीशी

अन्यथा ['सार्वभौममते] उभयत्वस्यैकविशिष्टापरत्वरूपत्वे भूतत्व-मूर्त्तत्वोभय-गुणकर्मान्यत्वविशिष्ट-सत्त्वयोरतिरिक्ततया,—तयोः सहजत एव मनो-गुणाद्यवृत्तितया, — 'प्रतियोगितावच्छेदकविशिष्टे'त्यभिधानमसङ्गतं स्यादिति ध्येयम्। 'सामान्य'पदस्य फलमाह,—❀ संयोगसामान्यन्त्विति ❀।

तथा च संयोगी द्रव्यत्वा'दित्यादावव्याप्तिवारणार्थमेव 'सामान्य'पदमिति भावः।

❀ विशिष्टस्येति ❀।—विशिष्टनिरूपिताधेयत्वस्येत्यर्थः। तथा च 'विशिष्टसत्तावान् जाते'रित्यादावतिव्याप्तिरिति भावः।

विवृतिः

**अन्यथेति।** विशिष्टस्य शुद्धानतिरिक्तत्व इत्यर्थः, सहजतः = प्रतियोगितावच्छेदकावच्छिन्नत्वानुपादानेऽपि,

'संयोगसामान्यन्त्वि'त्यादिग्रन्थस्य भावमाह—**तथा चेति। अव्याप्तिवारणार्थमेवेति।** 'सामान्य'पदानुपादाने,—'संयोगी द्रव्यत्वा'दित्यादौ हेत्वधिकरणवृक्षादौ संयोगाभावप्रतियोगिनो जलादिवृत्तिसंयोगस्य,—वृक्षाऽवृत्तित्वेन साध्याऽभावस्य लक्षणघटकत्वादव्याप्तिरतस्तद्वारणाय—'सामान्य'—पदं।

तदुपादाने तु,—संयोगाऽभावप्रतियोगिनः संयोगसामान्याऽन्तर्गतवृक्षवृत्तिसंयोगादेर्वृक्षाऽवृत्तित्वविरहेण नाऽव्याप्तिरिति भावः।

**विशिष्टनिरूपितेति।** यथाश्रुतविशिष्टस्यानतिरिक्तत्वार्थकत्वे प्रतियोगितावच्छेदकावच्छिन्नपर्यन्तानुसरणमसङ्गतं स्याद्विशिष्टसत्ताभावप्रतियोगित्वाश्रयीभूताया विशिष्टसत्ताया गुणाद्यवृत्तित्वादिति भावः।

**अतिव्याप्तिरिति।** शुद्धसत्तात्वावच्छिन्ने गुणवृत्तित्वसत्त्वे विशिष्टसत्ताभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वावच्छिन्नेऽपि गुणवृत्तित्वं निराबाधमेव, सत्तात्वावच्छिन्नवृत्तितातो विशिष्टसत्तात्वावच्छिन्नवृत्तितायाः भेदविरहादिति—'विशिष्टसत्तावान् जाते'रित्यत्र साध्याभावस्य विशिष्टसत्ताभावस्य लक्षणाघटकत्वादतिव्याप्तिरित्यर्थः।

१. 'सार्वभौममत' इति पाठो लिखितपुस्तके नास्ति। 'विशिष्टस्यातिरिक्तत्व' इति च क्वचिदधिकः पाठो लभ्यते।

दीधितिः

**समवायेन जातेः साध्यत्वे मेयत्वादावतिव्याप्तिः,—**
**—जातिमन्निष्ठतादृशाभावप्रतियोगिताया जातित्वेनानवच्छेदात्,**
**—जातिशून्ये च तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः,**

जागदीशी

ननु तादृश-सम्बन्धावच्छिन्न-यत्किञ्चिद्धेत्वधिकरण-निष्ठाधिकरणता-निरूपकतानवच्छेदक [स्व] प्रतियोगितावच्छेदककत्वं 'सामान्यकान्त'पदेन विवक्षितमतो नोक्तदोष इत्यत आह,—❀समवायेनेति ❀।

ननु समवायेन जातेर्व्याप्यवृत्तित्वात्तत्साध्यके प्रतियोगिवैयधिकरण्यमेव न देयं,—

—देयश्चाऽव्याप्यवृत्तिसाध्यकस्थलीयनिरुक्तौ साध्यतावच्छेदके,—

विवृतिः

दोषान्तरानुसरणबीजमाह—**नन्विति । तादृशेति ।** यत्किञ्चिद्धेत्वधिकरण-निष्ठाधिकरणतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तितानवच्छेदकं यदभाव-प्रतियोगितावच्छेदकं तदभावस्यैव प्रतियोगिवैयधिकरण्यमिति 'यत्किञ्चि'दित्यनेन विवक्षितमित्यर्थः।

**नोक्तदोष इति ।** विशिष्टसत्ताभावप्रतियोगितावच्छेदकस्य विशिष्टसत्तात्वस्य हेत्वधिकरणगुणनिष्ठाधिकरणतानिरूपितसमवायावच्छिन्नवृत्तितानवच्छेदकत्वाद् विशिष्टसत्ताभावस्य लक्षणघटकत्वेन 'विशिष्टसत्तावान् जाते'रित्यत्र नातिप्रसङ्ग इत्यर्थः।

समवायेन जातिसाध्यकमेयत्वहेतौ यत्किञ्चिद्धेत्वधिकरणं यदि द्रव्यादिकं तदा,—तन्निरूपितसमवायावच्छिन्नवृत्तितावच्छेदकमेव जात्यभावप्रतियोगितावच्छेदकं जातित्वं, यदि च सामान्यादिकं तादृशहेत्वधिकरणं,—तदा तन्निरूपितसमवायावच्छिन्नवृत्तित्वाप्रसिद्धिः स्यादतो,—यत्किञ्चिद्धेत्वधिकरणद्रव्यादिनिरूपितसमवायावच्छिन्नवृत्तितानवच्छेदकत्वस्य घटाभावप्रतियोगितावच्छेदके घटत्वे सत्त्वेन,—घटाभावमादायातिव्याप्त्यापत्तिरित्याशयः।

पुनः स्थलान्तरे ऽतिव्याप्तिदानप्रयोजनमाह,—**नन्विति ।**

ननु निरुक्तप्रतियोगिव्यधिकरणहेतुसामानाधिकरणघटाभावप्रतियोगितानवच्छेदकत्वस्य जातित्वे सत्त्वात् प्रतियोगिवैयधिकरण्यघटितलक्षणस्य 'जातिमान्मेयत्वा'दित्यत्रातिव्याप्तिर्दुर्वारेत्यत आह—**देयश्चेति ।** तथा च तादृशघटाद्यभावप्रतियोगितानवच्छेदकत्वस्य जातित्वरूपे साध्यतावच्छेदकत्वे सत्त्वेऽपि,—व्याप्यवृत्तितानवच्छेदक-

दीधितिः

**संयोगादिसाध्यकगुण-कर्म्मान्यत्वादौ चातिव्याप्तिः,—**
**—अद्रव्ये हेतुमति तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः,**
**—द्रव्ये च संयोगादेरपि वृत्तेः,—**
**—नैवम् ;**

जागदीशी

—'व्याप्यवृत्तितानवच्छेदकत्व'विशेषणम् , अतो न तत्स्थलक्षणस्याति-व्याप्तिरत आह,—❀ संयोगादीति ❀ ।

[ ❀गुण—कर्मान्यत्वेति'❀ ।—एकैकोपादाने तत्र प्रतियोगिवैयधि-करण्यं प्रसिद्धमत उभयोपादानम् ।

अद्रव्ये गुणादौ समवायेन वृत्तेः प्रसिद्धेरत आह,—❀हेतुमतीति❀ । सामान्यादाविति शेषः । ][1]

अत्र 'विशिष्टनिरूपिताधेयत्वस्यातिरिक्तत्वोपगमे—स्वप्रतियोगि-तावच्छेदकावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभाववद्धे-

विवृतिः

त्वस्य तत्र विरहेण लक्षणगमनासम्भवान्न प्रतियोगिवैयधिकरण्यघटितलक्षणस्यापि जातिसाध्यकमेयत्वहेतावतिव्याप्तिरिति भावः ।

'संयोगी गुण-कर्मान्यत्वा'दित्यत्र यत्किञ्चिद्धेत्वधिकरणं यदि द्रव्यं,—तदा तन्निरूपितसमवायावच्छिन्नवृत्तितावच्छेदकमेव संयोगाभावप्रतियोगितावच्छेदकं संयोगत्वं,

यदि तु सामान्यादिकं तथा —तदा तन्निरूपितसाध्यतावच्छेदकसमवाया-वच्छिन्नवृत्तित्वमप्रसिद्धम्, अतस्तादृशप्रतियोगिव्यधिकरणघटाद्यभावप्रतियोगितान-वच्छेदकत्वस्य, व्याप्यवृत्तितानवच्छेदकत्वस्य च संयोगत्वे सत्त्वादतिव्याप्तेरनुद्धा-रात्सार्वभौममतं न सम्यगिति भावः ।

साध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तितावच्छेदकत्वनिरूपितविशेषणताविशेष-सम्बन्धेन यत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकत्वाभाववत्स्वप्रतियोगिताव-च्छेदककत्वस्य 'प्रतियोगिवैयधिकरण्य'पदार्थत्वे,—'सार्वभौममत'मपि समीचीनमेवेति विभावनीयम् ।

**अत्रेति** । सार्वभौममत इत्यर्थः । विशिष्टनिरूपिताधेयत्वस्य = विशिष्टसत्तात्वा-द्यवच्छिन्नाधेयत्वस्य, अतिरिक्तत्वाभ्युपगमे = शुद्धसत्तात्वाद्यवच्छिन्नाधेयत्वभिन्नत्व-

१. [ ] एतदन्तर्गतः पाठो लिखितपुस्तके नास्ति ।

जागदीशी

त्वधिकरणयत्किञ्चिद्व्यक्तिवृत्तित्व-सामान्यकत्वस्य विवक्षणात् ,———

विवृतिः

स्वीकारें, विवक्षणादिति। यत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तित्वसामान्ये,—यदभाव-प्रतियोगितावच्छेदकावच्छिन्नत्व, साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावस्त-दभावव्यक्तित्वं—'प्रतियोगिव्यधिकरणत्व'मिति विवक्षणादित्यर्थः।

वस्तुतो—यत्किञ्चिद्धेत्वधिकरणवृत्तितासामान्ये,—यादृशप्रतियोगितावच्छेदका-वच्छिन्नत्व,— साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावस्तादृशप्रतियोगितानव-च्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्यैव व्याप्तित्वविवक्षणादित्यर्थः पर्यवसित इत्यवधेयम् ।

विशिष्टनिरूपितवृत्तित्वस्यानतिरिक्तत्वे 'विशिष्टसत्तावान् जाते'रित्यत्रातिव्याप्तिः, सत्तात्वावच्छिन्नायां यत्किञ्चिद्धेत्वधिकरणगुणवृत्तितायां वैशिष्ट्यसत्तात्वावच्छिन्नत्व-समवायावच्छिन्नत्वयोरुभयोः सत्त्वाद्विशिष्टसत्ताभावस्य लक्षणाघटकत्वादतो वैशि-ष्ट्यसत्तात्वावच्छिन्नवृत्तित्वं सत्तात्वावच्छिन्नवृत्तित्वतो भिन्नमित्याशयः।

हेत्वधिकरणपर्वतादिनिरूपितयत्किञ्चिद्रूपादिनिष्ठवृत्तितायां वह्नित्वावच्छिन्नत्व,—संयोगावच्छिन्नत्वयोर्द्वयोरभावसत्त्वाद्वह्निमान्धूमादित्यत्राव्याप्तिरतः 'सामान्य' इत्यु-क्तम् । गगनत्वावच्छिन्नत्वविशिष्टकालिकसम्बन्धावच्छिन्नत्वाप्रसिद्ध्या गगनाभाव-स्याऽपि प्रतियोगिव्यधिकरणत्वासम्भवेन 'घटवान्महाकालत्वा'दित्यत्राव्याप्तिरतो विशिष्टाभावमपहायोभयाभावो विवक्षितः।

न च प्रकारतानिष्ठस्य गगनत्वावच्छिन्नत्वविशिष्टकालिकसम्बन्धावच्छिन्न-त्वस्य महाकालवृत्तितासामान्य एवाभावसत्त्वान्नाव्याप्तिरिति वाच्यम्। वृत्तित्व-निष्ठस्यैव तादृशविशिष्टस्याभावस्य वक्तव्यत्वात् , अन्यथा पर्वतादिनिरूपितवृत्तिता-सामान्यस्यैव प्रकारतानिष्ठवह्नित्वावच्छिन्नत्वविशिष्टसंयोगसम्बन्धावच्छिन्नत्वविरह-वत्त्वेन वह्न्यभावस्य लक्षणघटकतया 'वह्निमान्धूमा'दित्यत्राऽव्याप्तिः स्यात् ।

यत्किञ्चित्पदानुक्तौ 'धूमवान्वह्ने'रित्यत्रातिव्याप्तिः, वह्न्यधिकरण-पर्वत-निरू-पितवृत्तितासामान्य एव धूमत्वावच्छिन्नत्व,—संयोगसम्बन्धावच्छिन्नत्वयोः सत्त्वेन साध्याभावस्य लक्षणाघटकत्वात् ।

न च यत्किञ्चिद्धेत्वधिकरणवृत्तित्वसामान्ये,—यादृशप्रतियोगितावच्छेदका-वच्छिन्नत्वाभावस्तादृशप्रतियोगितैव विवक्ष्यतामिति वाच्यम्। अयोगोलकनिरूपित-वृत्तितासामान्यान्तर्गतकालिकसम्बन्धावच्छिन्नवृत्तितायां, धूमत्वावच्छिन्नत्वस्यासत्त्वेन धूमाभावस्य लक्षणाघटकत्वाद्धूमवान्वह्नेरित्यत्रातिव्याप्त्यापत्तेः। न च तथापि यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तितासामान्ये, —

जागदीशी

———नोक्तदोष" इत्यस्मद्गुरुचरणाः ।

नव्यास्तु—"साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोग्यधिकरण-यावद्धेत्वधिकरणको यो यस्तदन्यत्वं प्रतियोगिवैयधिकरण्यं वाच्यम्,

विवृतिः

यादृशप्रतियोगितावच्छेदकावच्छिन्नत्वाभावः, यादृशप्रतियोगितावच्छेदकावच्छिन्नहेत्वधिकरणवृत्तितायां वा,—साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावः, तादृशप्रतियोगितानवच्छेदकत्वमेव निवेश्यतामिति वाच्यम् । 'संयोगी गुणान्यत्वे सति नित्यत्वा'-दित्यत्रातिव्याप्त्यापत्तेः, सामान्यादिनिरूपितसमवायावच्छिन्नवृत्तित्वस्य, संयोगत्वावच्छिन्नवृत्तित्वस्य चाप्रसिद्धेः । नित्यद्रव्यनिरूपितसमवायावच्छिन्नवृत्तितायां संयोगत्वावच्छिन्नत्वस्य, संयोगत्वावच्छिन्ननित्यद्रव्यवृत्तितायाञ्च समवायावच्छिन्नत्वस्य विद्यमानतया,—साध्याभावस्य लक्षणाघटकत्वादिति ध्येयम् ।

नोक्तदोष इति । हेत्वधिकरणसामान्यादिनिरूपितवृत्तितासामान्यस्यैव संयोगत्वावच्छिन्नत्व,—समवायावच्छिन्नत्वोभयाभाववत्त्वेन संयोगाभावस्य लक्षणघटकत्वात्संयोगी गुणकर्मान्यत्वादित्यत्र नातिव्याप्तिरूपो दोषः ।

'घटवान् महाकालत्वा'दित्यत्र च महाकालनिरूपितवृत्तितासामान्य एव गगनत्वावच्छिन्नत्व,— कालिकसम्बन्धावच्छिन्नत्वोभयाभावसत्त्वाद्गगनाभावमादायैव लक्षणसमन्वयान्नाव्याप्तिरित्यर्थः ।

गगनस्यावृत्तित्वमते प्रकारान्तरेण गगनाभावस्य 'प्रतियोगिवैयधिकरण्य'मुपपादयतां नव्यानां मतमाह—**नव्यास्त्विति** । 'प्राहु'रिति परेणान्वयः । **साध्यतावच्छेदकेति** । तथा च यदभावप्रतियोगितावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणत्वं हेत्वधिकरणताव्यापकं, तदभावभिन्नाभावः 'प्रतियोगिव्यधिकरण' इत्यर्थः ।

एतेन—यत्रैकमेव हेत्वधिकरणं तत्र हेत्वधिकरणे यावत्त्वाप्रसिद्ध्याऽव्याप्तिरित्यपि—समाहितं ।

'वह्निमान्धूमा'दित्यत्र धूमाधिकरणताव्यापकप्रतियोग्यधिकरणताको वह्न्यभावः

दीपिका

**नव्यास्त्विति** । अभावविशिष्टान्यो योऽभावः स एव 'प्रतियोगिव्यधिकरणहेतुसमानाधिकरण'पदेन वाच्यः, वैशिष्ट्यञ्च,—स्वतादात्म्य, स्वप्रतियोगितावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्ननिरूपकतानिरूपित—हेत्वधिकरणताव्यापकाधिकरणता—कत्वोभयसम्बन्धेन ।

जागदीशी

—अतो गगनाभावमादायैव प्रसिद्धेर्न कोऽपि दोषः,

न चैवं यद्यत्सम्बन्धेन यद्धर्मावच्छिन्नानधिकरणं हेत्वधिकरणं; तत्तत्सम्बन्धान्यसाध्यतावच्छेदकसम्बन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यमेव लाघवाद्व्याप्तिरस्तु,—

विवृतिः

तदन्यो घटाभावः, स एव प्रतियोगिव्यधिकरणः, 'घटवान् महाकालत्वा'दित्यत्र तु गगनाभाव एव तथा, गगनस्य कालिकेनाधिकरणत्वाप्रसिद्ध्या 'यदभाव'पदेन तस्य धर्तुमशक्यत्वात् ।

केवलान्वयिनि 'वाच्यं ज्ञेयत्वा'दित्यादौ सर्वत्र समवायावच्छिन्नवाच्यत्वाभावमादायोक्तरीत्या लक्षणसमन्वयप्रकारः स्वयमूहनीयः ।

सम्बन्धसामान्येन प्रतियोग्यधिकरणत्वविवक्षणे 'धूमवान्वह्ने'रित्यत्रातिव्याप्तिः, वह्न्यधिकरणे सर्वत्रैव संयोगेन धूमाभावप्रतियोगिनो धूमस्य कालिकेनाधिकरणतायाः सत्त्वेन,—'यदभाव'पदेन धूमाभावमुपादाय,–तदन्यगगनाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके धूमत्वेऽक्षतत्वादतः 'साध्यतावच्छेदकसम्बन्धेने'त्युक्तम् ।

तथा सति संयोगेन धूमाभावप्रतियोगिनो धूमस्य संयोगेनाधिकरणताया अयोगोलके विरहेण 'यदभाव'पदेन धूमाभावस्य धर्तुमशक्यत्वात्, तादृशवह्न्यभावभिन्नत्वस्य धूमाभावे सत्त्वेनातिव्याप्तिविरहात् ।

हेत्वधिकरणत्वव्यापकत्वानिवेशेऽपि तत्रैवातिव्याप्तिः, यत्किञ्चिद्वह्न्यधिकरणे पर्वतादौ धूमाभावप्रतियोगिनो धूमस्य संयोगेनाधिकरणताया विद्यमानतया 'यदभाव' पदेन धूमाभावस्य धर्तुं शक्यत्वात् ।

'व्यापकत्व'निवेशे च वह्न्यधिकरणेऽयःपिण्डे संयोगेन धूमाधिकरणताया असत्त्वेन 'यदभाव'पदेन वह्न्यभावमुपादाय नातिव्याप्तिरिति दिक् ।

**न चैवमिति ।** एवं = निरुक्तरीत्या प्रतियोगिवैयधिकरण्यविवक्षणे, यद्यदिति । तथा च यद्यत्सम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नानधिकरणं हेत्व-

दीपिका

**यद्यत्सम्बन्धेनेति ।** संसर्गविशिष्टान्यसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थः । वैशिष्ट्यञ्च,—स्वतादात्म्य, स्वावच्छिन्नसाध्यतावच्छेदकावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वाभाववद्धेत्वधिकरणवृत्त्यभाव - प्रतियोगिप्रतियोगिकत्वोभयसम्बन्धेन ।

जागदीशी

—तथा च 'घटवान् महाकालत्वा' दित्यादौ समवायेन घटाद्यभावोऽपि प्रतियोगिव्यधिकरणः सम्भवतीति वाच्यम् ;

'घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वा'दित्यादावव्याप्तेः,—

—केनापि सम्बन्धेन हेतुमतः साध्यतावच्छेदकावच्छिन्नानधिकरणत्वासम्भवात् ,

विवृतिः

धिकरणं तत्तत्सम्बन्धान्यसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावछिन्नाऽधिकरणनिरूपितवृत्तित्वं हेतौ 'व्याप्ति'रित्यर्थः।

'वह्निमान्धूमा'दित्यादौ समवायादिना वह्न्यनधिकरणं धूमाधिकरणमिति—समवायान्यसाध्यतावच्छेदकसंयोगसम्बन्धेन वह्निसामानाधिकरण्यमादाय लक्षणसमन्वयः।

'यद्यदि'त्यनुक्तौ—'धूमवान्वह्ने'रित्यत्रातिव्याप्तिः। समवायेन धूमानधिकरणत्वस्य हेतुभूतवह्न्यधिकरणे सत्त्वात्।

तथाऽभिधाने च यावदन्तर्गतसंयोगेनापि धूमानधिकरणत्वस्य हेत्वधिकरणे सत्त्वात्तदन्यसाध्यतावच्छेदकसम्बन्धाप्रसिद्ध्या नातिव्याप्तिः। **घटाभावोऽपीति**। तथा च समवायेन घटानधिकरणत्वस्य महाकाले वर्त्तमानत्वात्समवायान्यसाध्यतावच्छेदककालिकसम्बन्धेन घटत्वावच्छिन्नसामानाधिकरण्यमादायैव 'घटवान्महाकालत्वा'दित्यत्र लक्षणसमन्वय इति भावः।

न चोक्तलक्षणस्याऽभावाघटितत्वेन कथं 'घटाभावोपी'त्यभिधानं सङ्गच्छत इति-वाच्यम्। स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणको योऽभावस्तदीयप्रतियोगितानवच्छेदकसाध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्यैव व्याप्तित्वाभिप्रायेण तथाभिधानस्य सङ्गमनीयत्वात्, स्वं = साध्यभाव इति—वदन्ति।

द्रव्यत्वमात्रस्य साध्यत्वे पटादिनिरूपितसमवायसम्बन्धेन द्रव्यत्वानधिकरणत्वस्य हेतुमति घटे सम्भवेनाव्याप्त्यसम्भवा'द्घटवृत्तित्वविशिष्टे'त्युक्तम्। न चैवं घटानुयोगिकसमवायेनापि घटवृत्तित्वविशिष्टद्रव्यत्वानधिकरणताया हेतुमति घटान्तरे सत्त्वात्कथमव्याप्तिरिति वाच्यम्, तद्घटवृत्तित्वविशिष्टद्रव्यत्वसाध्यकतद्व्यक्तित्वहेतावेवाव्याप्तेरभिप्रेतत्वादिति ध्येयम्।

दीधितिः

**साध्यतावच्छेदकसम्बन्धसामान्ये,—निरुक्तप्रतियोगिप्रतियोगिकत्व,— हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्य विवक्षितत्वात् ॥१८॥**

जागदीशी

तादात्म्येन तथाविधानधिकरणत्वसम्भवेऽपि 'दधित्वविशिष्टप्रमेयवान् 'स्थूलदधित्वा' दित्यादावव्याप्तेरिति—प्राहुः ।

☸तादृशसम्बन्धसामान्य इति☸ । अस्य पूर्ववदर्थो बोध्यः । क्वचित्साध्यतावच्छेदकसम्बन्ध सामान्ये' इत्येव पाठः । ☸ विवक्षितत्वादिति ☸ । अभावान्तमूलग्रन्थेनेत्यादिः ;

विवृतिः

तथाविधानधिकरणत्वसम्भवेऽपि = तादात्म्येन साध्यतावच्छेदकावच्छिन्नासम्बन्धित्वसम्भवेऽपि । सम्बन्धित्वनिवेशस्य प्रयोजनान्तरविरहेऽप्युक्ताव्याप्तिवारणार्थमेव तस्यावश्यकत्वमित्यवधेयम् । **दधित्वविशिष्टेति ।** अत्र दधित्ववैशिष्ट्यं—सामानाधिकरण्यसम्बन्धेन, सामानाधिकरण्यञ्च—समवायेन दधित्वाधिकरणे समवायावच्छिन्नवृत्तित्वं, तादृशप्रमेयञ्च त्रसरेण्वादिस्वरूपं, तस्य च तादात्म्यसम्बन्धेन साध्यत्वं बोध्यम् ।

अत एव हेतौ 'स्थूल'पदमपि व्यभिचारवारकतया सार्थकम्, अन्यथा दधित्वाधिकरणे द्व्यणुके तादात्म्येन त्रसरेण्वादिरूपसाध्यस्यासत्त्वेन हेतोर्व्यभिचारित्वं स्यादिति ध्येयम् ।

न च दध्यन्तरानुयोगिकसमवायेन दधित्वविशिष्टप्रमेयस्यानधिकरणताया हेत्वधिकरणे सत्त्वात्कथमव्याप्तिरिति वाच्यम्, तद्दधिवृत्तित्वविशिष्टदध्नः साध्यत्वे तद्व्यक्तित्वहेतौ तथाप्यव्याप्तेर्वज्रलेपत्वात्, विषयितायाः संसर्गत्वानभ्युपगमेन तेन सम्बन्धेनापि तद्दध्यनधिकरणत्वस्य हेतुमत्यसम्भवात् ।

यत्तु—"विषयितायाः संसर्गत्वाभ्युपगमेऽपि ज्ञान-ज्ञानत्वान्यतरस्य समवायेन साध्यत्वे ज्ञानत्वहेतावव्याप्तिः । केनापि सम्बन्धेन साध्यानधिकरणत्वस्य हेतुमत्यसम्भवादिति—" मतं,—

—तत्तुच्छं, दिक्कृतविशेषणतासम्बन्धेन तादृशसाध्याधिकरणत्वस्य हेतुमति ज्ञाने सम्भवेनाव्याप्त्यनवकाशात् ।

वस्तुतो विषयित्वादेः संसर्गत्वानभ्युपगमे 'गगनाभाववृत्तित्वविशिष्टगगनाभाव-

१ 'अन्त्यावयविभिन्ने'ति क्वचिदधिकः पाठो लभ्यते, स च न सम्प्रदायानुमतः ।

जागदीशी

तथा च साध्यतावच्छेदकसम्बन्धसामान्ये,—यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व-हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्तादृशप्रतियोगितानवच्छेदकीभूतसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यर्थः ।

'सम्बन्धसामान्ये' इत्युक्तौ,—कालिकसम्बन्धे धूमप्रतियोगिकत्वाऽयःपिण्डानुयोगिकत्वोभयसत्त्वा'द्धूमवान् वह्नेः' इत्यादावतिव्याप्तिरतः,——"साध्यतावच्छेदके"—ति ।

समवायिनः संयोगेन साध्यतायां 'जातिमत्त्वा'दावतिव्याप्तिः, साध्यतावच्छेदकीभूतसमवायात्मकधर्मे, —समवायित्वावच्छिन्नप्रतियोगिकत्व,—हेत्वधिकरण— गुणाद्यनुयोगिकत्वोभयसत्त्वेन,—साध्याभावस्य लक्षणाघटकत्वादतः—'सम्बन्ध'—पदं,

विवृतिः

वान् गगनाभावत्वा'दित्यत्राव्याप्तिः, तादृशविशिष्टगगनाभावस्य कालिकादिनाऽधिकरणत्वस्यानभ्युपगमादित्यस्मद्गुरुचरणाः ।

**व्याप्तिरित्यर्थ इति ।** तथा च 'वह्निमान्धूमा'दित्यत्र साध्यतावच्छेदक संयोगसम्बन्धे,—घटत्वाद्यवच्छिन्नप्रतियोगिकत्वसत्त्वेऽपि, हेत्वधिकरणपर्वतानुयोगिकत्वविरहेण घटाद्यभावस्य लक्षणघटकतया तदीयप्रतियोगितानवच्छेदकत्वस्य वह्नित्वे सत्त्वाल्लक्षणसमन्वयः ।

'धूमावान्वह्ने'रित्यत्र तु संयोगे धूमप्रतियोगिकत्वसत्त्वेऽपि यत्किञ्चिद्धेत्वधिकरणाऽयःपिण्डानुयोगिकत्वविरहेण धूमाभाव एव लक्षण घटक इति, न कोऽपि दोष इत्याशयः । सम्बन्धे साध्यतावच्छेदकत्वाभिधानप्रयोजनमाह—**सम्बन्धसामान्य इत्युक्ताविति ।**

**अतिव्याप्तिरिति ।** धूमाभावस्य लक्षणाघटकतया गगनाभावमादायातिव्याप्तिरिति भावः ।

'सम्बन्ध'पदव्यावृत्तिमाह—**समवायिन इति ।** जातिमत्त्वाधिकरणे गुणादौ संयोगेन कस्याप्यसत्त्वेन निरुक्तहेतोर्व्यभिचारित्वं बोध्यम् । **अतिव्याप्तिरिति ।** अवच्छेदको हि,—धर्मः, सम्बन्धश्च भवति, तथा च साध्यतावच्छेदकसामान्ये—तादृशोभयाभावविवक्षणे साध्यतावच्छेदकसामान्यान्तर्गतसमवायरूपसाध्यतावच्छेदकधर्मे,—समवाय्यभावप्रतियोगितावच्छेदकसमवायित्वावच्छिन्नस्य गुणत्वादेः प्रतियोगिकत्वस्य, यत्किञ्चिद्धेत्वधिकरणगुणानुयोगिकत्वस्य च द्वयोः सत्त्वेन,—समवाय्यभावस्य लक्षणाघटकत्वात्संयोगेन समवायिसाध्यकजातिमत्त्वहेतावतिव्याप्तिरित्यर्थः ।

जागदीशी

यद्धर्मावच्छिन्न-संसर्गताकप्रकृतसाध्यकानुमितिः फलं तद्धर्मावच्छिन्न-सम्बन्धसामान्य इतिं तु फलितार्थः ।

घटीयसंयोगे, पर्वतीयसंयोगे वा,—हेतुमन्महानसानुयोगिकत्व-वह्नित्वावच्छिन्नप्रतियोगिकत्वोभयाभावसत्त्वात् 'वह्निमान् धूमादि'त्यादावव्याप्तिरतः—प्रथमं—'सामान्य'—पदं,

तथा च,—महानसीयवह्निसंयोग एव तादृशोभयाभावविरहान्नाव्याप्तिः ।

संयोगसामान्य एव हेतुमदयोगोलकानुयोगिकत्व,—धूमत्वावच्छिन्नप्रतियोगिकत्वोभयाभावसत्त्वाद्'धूमवान् वह्ने'रित्यादौ नातिव्याप्तिः ।

विवृतिः

**यद्धर्मावच्छिन्नेति** । तथा च यद्रूपावच्छिन्ना या यत्किञ्चित्सम्बन्धानवच्छिन्ना साध्यतावच्छेदकता,—तद्रूपावच्छिन्नतादृशावच्छेदकताश्रयसामान्य इत्यर्थः पर्यवसितः, एवञ्च समवायनिष्ठसाध्यतावच्छेदकतायाः किञ्चित्सम्बन्धावच्छिन्नतया धर्त्तुमशक्यत्वेन,–तादृश्याः संयोगनिष्ठावच्छेदकताया आश्रयीभूतसंयोगसामान्ये,–समवायित्वावच्छिन्नप्रतियोगिकत्वसत्त्वेऽपि हेत्वधिकरणगुणानुयोगिकत्वविरहादुभयाभावस्याक्षततया, समवाय्यभावस्य लक्षणघटकत्वान्न 'समवायिमाञ्जातिमत्त्वा'दित्यत्रातिव्याप्तिरिति भावः ।

'साध्यप्रतियोगिकसाध्यतावच्छेदकसम्बन्ध'इत्युक्तौ घटीयसंयोगमादायाव्याप्तेरभावादाह—**पर्वतीयेति** । **अव्याप्तिरिति** । इदमुपलक्षणं, समवाय-संयोगान्यतरसम्बन्धेन वह्निसाध्यकधूमहेतावपि साध्यतावच्छेदकीभूतसमवाये वह्निप्रतियोगिकत्वसत्त्वेऽपि पर्वताद्यनुयोगिकत्वविरहेणोभयाभावसत्त्वादव्याप्तिरित्यपि द्रष्टव्यम् । **सामान्यपदमिति** । तथा च साध्यतावच्छेदकसम्बन्धसामान्यान्तर्गतमहानसीयसंयोगे वह्नित्वावच्छिन्नप्रतियोगिकत्व,हेतुमन्महानसानुयोगिकत्वयोर्द्वयोः सत्त्वेन वह्न्यभावस्य लक्षणाघटकत्वान्नाव्याप्तिरित्याशयः। न चासम्भवः शङ्कनीयस्तत्संयोगेन वह्निसाध्यकतद्धूमहेतौ, वह्निधूमोभयसाध्यकधूमहेतौ च लक्षणसमन्वयसम्भवादुभयप्रतियोगिकत्वाप्रसिद्ध्या साध्याभावस्य लक्षणाघटकत्वादिति ध्येयम् ।

**नातिव्याप्तिरिति** । धूमाभावस्य लक्षणघटकत्वादिति भावः । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वसामान्यं यत्,—यच्च हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्यं,–तदुभयाभाव एव साध्यतावच्छेदकसामान्ये विवक्षणीयः । अन्यथा 'तादृशप्रतियोगिकत्वसामान्य'पर्यन्तानुक्तौ,–'वह्निमान्धूमा'दित्यत्राव्याप्तिः,

जागदीशी

संयोगसामान्य एव समवायनिष्ठपर्वतानुयोगिकत्वस्य, वह्नित्वावच्छिन्नप्रतियोगिकत्वस्य च,—द्वयोरभावसत्त्वात्तथैवाऽव्याप्तिरतः—"सामान्योभये—"ति;

सामान्यपदमुभयत्रान्वितमिति भावः।

तादृशोभयाभावश्च,—स्वरूपसम्बन्धेन बोध्यः,

तेन समवायादिना तदुभयाभावस्य सम्बन्धमात्रे सत्त्वेऽपि सद्धेतौ नाव्याप्तिः। 'एतद्घटवान् कालान्तरीय-तद्घटत्वा'दित्यादावेतद्घटत्वावच्छिन्न प्रतियोगिकत्वविशिष्टतद्घटानुयोगिकत्वाप्रसिद्धेः—

विवृतिः

संयोगसामान्ये,—पर्वताद्यनुयोगिकत्वसामान्याभावविरहेऽपि—समवायनिष्ठं यद्वह्नित्वावच्छिन्नप्रतियोगिकत्वं—तदभावस्य तत्र सत्त्वेनोभयाभावस्याक्षततया वह्न्यभावस्य लक्षणघटकत्वात्,

एवं—'तादृशानुयोगिकत्वसामान्य'पर्यन्ताविवक्षणे तत्रैवाव्याप्तिः, संयोगसामान्ये,—वह्नित्वावच्छिन्नप्रतियोगिकत्वसामान्याभावासत्त्वेऽपि समवायनिष्ठं यत्पर्वताद्यनुयोगिकत्वं तदभावस्य तत्र सत्त्वेनोभयाभावसत्त्वात्,

तदुपादाने च—वह्नित्वावच्छिन्नप्रतियोगिकत्वसामान्यान्तर्गतसंयोगनिष्ठतादृशप्रतियोगिकत्वस्य, पर्वताद्यनुयोगिकत्वसामान्यान्तर्गतसंयोगनिष्ठतादृशानुयोगिकत्वस्य च साध्यतावच्छेदकसंयोगसामान्येऽभावविरहान्नाव्याप्तिरित्याह—**संयोगसामान्य** इति।

**अव्याप्तिरिति।** पूर्वोक्तोभयसाध्यके लक्षणसमन्वयान्नासम्भवोऽभिहित इति भावः।

**तादृशोभयाभावश्चेति।** प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वसामान्य—हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावश्चेत्यर्थः।

**सम्बन्धमात्र इति।** समवायादेस्तादृशप्रतियोगिकत्वानुयोगिकत्वयोर्व्यधिकरणसम्बन्धतया तेन सम्बन्धेन तदुभयाभावस्य सर्वत्र सत्त्वेन साध्यतावच्छेदकसम्बन्धसामान्येऽपि सत्त्वे बाधकाभावादिति भावः। अत्रापि तादृशोभयासाध्यकसद्धेतौ लक्षणसमन्वयसम्भवान्नासम्भव इति ध्येयम्।

केचित्तु"—आत्मत्वसाध्यकज्ञानहेतौ प्रतियोगिवैयधिकरण्याघटिताया व्याप्तेः सत्त्वेन व्याप्तिलक्षणस्य नासम्भवोऽभिहित—"इति वदन्ति।

विशिष्टाभावपरित्यागे बीजमाह—**एतदिति। अप्रसिद्धेरिति।** विभिन्नकालीनयोराधेयभावानभ्युपगमादिति भावः।

जागदीशी

—अभावान्तरमादायाऽतिव्याप्तिः,—

गगनप्रतियोगिकत्वविविशिष्ट-महाकालानुयोगिकत्वाप्रसिद्ध्या गगनाभावमादाय प्रकृताव्याप्तिवारणासम्भवश्च स्यात्,

—अतो निरुक्तप्रतियोगिकत्वविशिष्ट-यत्किञ्चिद्धेत्वधिकरणानुयोगिकत्वसामान्याभावं [1]परित्यज्य—'तदुभयसामान्याभाव'—उक्तः ।

विवृतिः

**अभावान्तरमिति ।** न च निरुक्तरीत्याऽभावाप्रसिद्ध्यैव नातिव्याप्तिरिति वाच्यम् । गगनाभावस्यैव प्रसिद्धिसम्भवात्, गगनप्रतियोगिकत्वविशिष्टतद्धटानुयोगिकत्वस्य संयोगे प्रसिद्धस्य साध्यतावच्छेदकसम्बन्धसामान्येऽभावसत्त्वात् ।

केचित्तु—"तज्ज्ञानाभावमादायैवातिव्याप्तिसम्भवः, विषयतायां तज्ज्ञानप्रतियोगिकत्वविशिष्टतद्धटानुयोगिकत्वस्य प्रसिद्धिसम्भवादिति—"वदन्ति ।

ननु तद्धटत्वरूपहेतौ साध्यसामानाधिकरण्यविरहादेव नोक्तस्थलेऽतिव्याप्तिः, न च व्यापकत्वलक्षणस्यातिव्याप्तिरिति वाच्यम् । तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदके हेत्वधिकरणवृत्तितावच्छेदकत्वविवक्षणादेव तल्लक्षणातिव्याप्त्यसम्भवादित्यत आह—**गगनेति ।** प्रकृताव्याप्तिवारणासम्भवः = 'घटवान्महाकालत्वा'दित्यत्राव्याप्तिवारणासम्भवः, न च महाकालाभावमादायैव नाव्याप्तिः सम्भवति, महाकालानुयोगिकत्वविशिष्टमहाकालानुयोगिकत्वस्य तादात्म्ये प्रसिद्धस्य कालिके विरहादिति वाच्यम् । तादात्म्य-कालिकान्यतरसम्बन्धेन घटसाध्यकमहाकालत्वहेतावव्याप्तेरभिधीयमानत्वात्, साध्यतावच्छेदकसम्बन्धसामान्यान्तर्गततादात्म्ये तादृशविशिष्टाभावस्यासत्त्वादिति वदन्ति ।

ननु यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसम्बन्धसामान्ये,—हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसाध्यतावच्छेदकसम्बन्धत्वाभावस्तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं, अथवा हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये,—यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वसामान्याभावस्तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमेव लाघवाद्व्याप्तिरस्तु,—

—तावतैव 'वह्निमान्धूमा'दित्यादौ वह्न्यभावो न लक्षणघटकः, वह्निप्रतियोगिकसम्बन्धसामान्यान्तर्गतसंयोगे—हेत्वधिकरणीभूतपर्वताद्यनुयोगिकसाध्यतावच्छेदकसम्बन्धत्वाभावस्य, तादृशपर्वताद्यनुयोगिकसंयोगे वा,—वह्निप्रतियोगित्वाभावस्य

[1] 'अपहाये'ति लिखितपुस्तकपाठः ।

जागदीशी

न च यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिक[[1]त्वविशिष्ट-] सम्बन्धसामान्ये,—हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिक[[2]त्व साध्यतावच्छेदकसम्बन्धत्वस्य,—

तथाविधसम्बन्धसामान्ये वा,—यादृशप्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिकत्वस्य व्यतिरेकः,—तादृशप्रतियोगितानवच्छेदकत्वमेव साध्य-तावच्छेदकस्य कथं नोक्तमिति वाच्यम् ;

'द्रव्यवान् प्रमेयत्वा'दित्यादौ संयोगेन साध्यतायामतिव्याप्त्यापत्तेः;

प्रमेयानुयोगिकसंयोगसामान्यस्यैव द्रव्यत्वावच्छिन्नप्रतियोगिकत्वेन साध्याभावस्य लक्षणाघटकत्वादिति ध्येयम् ।

विवृतिः

चाऽसत्त्वात् । 'घटवान्महाकालत्वा'दित्यत्र तु गगनाभाव एव लक्षणघटको, गगनप्रतियोगिकतादात्म्ये,—महाकालानुयोगिककालिकसम्बन्धत्वस्य, महाकालानु-योगिककालिके वा गगनप्रतियोगिकत्वस्य चाभावसत्त्वादित्याशङ्कते,—न चेति । 'वाच्य'मिति—परेणान्वयः । तथाविधसम्बन्धसामान्ये = हेत्वधिकरणीभूत-यत्किञ्चिद्व्यक्त्यनुयोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये,

समाधत्ते—द्रव्यवानिति । अतिव्याप्त्यापत्तेरिति । निरुक्तनिरुक्तिद्वय एवातिव्याप्त्यापत्तेरित्यर्थः ।

अतिव्याप्तिमुपपादयति—प्रमेयेति । तथा च गुणाद्यनुयोगिकसंयोगसम्बन्धा-प्रसिद्ध्या यत्किञ्चित्प्रमेयत्वरूप'हेत्वधिकरण'पदेन द्रव्यस्यैवोपादेयतया,—तदनुयो-गिकसाध्यतावच्छेदकसंयोगसम्बन्धत्वस्य द्रव्यत्वावच्छिन्नप्रतियोगिकसम्बन्धसामा-न्यान्तर्गतसंयोगेऽभावविरहाद् द्रव्याभावस्य लक्षणाघटकतया प्रथमेऽतिव्याप्तिः ।

द्वितीयेऽपि हेत्वधिकरणद्रव्यानुयोगिकसाध्यतावच्छेदकसंयोगसम्बन्धे द्रव्यत्वा-वच्छिन्नप्रतियोगिकत्वसत्त्वेन द्रव्याभावरूपसाध्याभावस्य लक्षणाघटकत्वादति-व्याप्तिरिति भावः ।

हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसम्बन्धसामान्ये यादृशप्रतियोगिता-वच्छेदकावच्छिन्नप्रतियोगिकत्वाभावविवक्षणे निरुक्तातिव्याप्तिवारणेऽप्ययोगोलका-नुयोगिकसम्बन्धसामान्यान्तर्गतकालिकसम्बन्धे, — धूमप्रतियोगिकत्वाभावविरहेण धूमाभावस्य लक्षणाघटकत्वाद्धूमवान्वह्नेरित्यत्रातिव्याप्तिरतस्तादृशैकाभावो नात्र शङ्कापथमधिरोहतीत्यवधेयम् ।

१-२. लिखितपुस्तके नैष पाठ उपलभ्यते ।

जागदीशी

एवञ्च कालिकसम्बन्धसामान्ये,—महाकालानुयोगिकत्वसत्त्वेऽपि,—गगनप्रतियोगिकत्वविरहाद्गगनाभाव एव 'घटवान् महाकालत्वादि'त्यादौ प्रतियोगिव्यधिकरणतया प्रसिद्ध इति भावः ।

ननु हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वं यदि तद्वृत्तित्वं, तदा 'धूमवान् वह्ने'रित्यादावतिव्याप्तिः, धूमप्रतियोगिकस्यापि संयोगस्य कालिकसम्बन्धेनायोगोलकवृत्तित्वात् ।

यदि च साध्यतावच्छेदकसम्बन्धस्य संसर्गतानियामको यः सम्बन्धस्तेन सम्बन्धेन हेत्वधिकरणवृत्तित्वम् [एव] तदनुयोगिकत्वं,

—तदा संयोगेन द्रव्यस्य साध्यतायां द्रव्य-जात्यन्यतरत्वादावतिव्याप्तिः, जातौ समवायेन वृत्तेरप्रसिद्धेः ।

विवृतिः

प्रकृते लक्षणसमन्वयं प्रदर्शयति—**एवञ्चेति** । **प्रसिद्ध इति** । गगनस्यावृत्तित्वादिति हृदयम् ।

यादृशं हेत्वधिकरणीभूतं यत्किञ्चिद्व्यक्त्यनुयोगिकत्वं विचारसहं, तस्य व्यभिचारिस्थले साध्यवृत्तिसाध्यतावच्छेदकसम्बन्धे विरहात्प्रथमोपस्थितस्यापि निरुक्तप्रतियोगिप्रतियोगिकत्वस्य यादृशप्रतियोगितावच्छेदकावच्छिन्नवृत्तित्वार्थकत्वविवक्षणे न क्षतिरित्याशयेन हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वमाक्षिपति——**नन्विति** ।

न चैवं संयोगेन रूपस्य पृथिवीत्वव्यापकत्वापत्तिः, पृथिव्यनुयोगिकसंयोगस्य कालिकेन रूपत्वावच्छिन्नवृत्तित्वेन रूपाभावस्य लक्षणाघटकत्वादिति वाच्यम् । तादृशापत्तिवारणाय साध्यतावच्छेदकधर्मे, साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वस्य विवक्षणीयत्वादिति भावः । तद्वृत्तित्वं=तादृशहेत्वधिकरणवृत्तित्वं, **अयोगोलकवृत्तित्वादिति** । तथा च साध्यतावच्छेदकसंयोगे उभयाभावविरहाद्गगनाभावं, ज्ञानाद्यभावमादाय वाऽतिव्याप्तिरित्याशयः,

ननु साध्यतावच्छेदकसंसर्गताघटकसम्बन्धेनैव यत्किञ्चिद्धेत्वधिकरणव्यक्तिवृत्तित्वं विवक्षणीयं, धूमसंयोगस्य तादृशसंसर्गताघटकसमवायसम्बन्धेनायोगोलकवृत्तित्वविरहेणैवोभयाभावसत्त्वान्न 'धूमवान्वह्ने'रित्यत्रातिव्याप्तिरित्याशङ्कते—**यदि चेति** । **नियामक इति** । घटक इत्यर्थः ।

समाधत्ते—**तदेति** । **अतिव्याप्तिरिति** । साध्यतावच्छेदकसंयोगनिष्ठसंसर्गताघटकसमवायेन जातिवृत्तित्वाप्रसिध्या तस्या यत्किञ्चिद्धेत्वधिकरणपदेन धत्तु-

जागदीशी

न च साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतासामान्ये,—निरुक्तोभयाभाववत्त्वं विवक्षितं, तत्र च हेत्वधिकरणवृत्तित्वं स्वरूपसम्बन्धेनैव वाच्यमिति-साम्प्रतम्; 'अत एवे'त्यादिवक्ष्यमाणग्रन्थासङ्गतिप्रसङ्गात्;

समवायस्यैकत्वेऽपि तदवच्छिन्नाधिकरणतायां निरुक्तोभयाभावसत्त्वेन

विवृतिः

मशक्यत्वात्, द्रव्यस्य तथात्वेऽपि तन्निरूपितसमवायावच्छिन्नवृत्तित्वस्य, द्रव्यत्वावच्छिन्नप्रतियोगिकत्वस्य च संयोगसामान्ये सत्त्वेन द्रव्याभावस्य लक्षणाघटकत्वाद्गगनाभावमादायातिव्याप्तिरित्यर्थः। **न चेति**। 'साम्प्रत'मिति परेणान्वयः। **विवक्षितमिति**। तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतासामान्ये,—यादृशप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपितत्व स्वरूपसम्बन्धेनयत्किञ्चिद्धेत्वधिकरणव्यक्तिवृत्तित्वोभयाभावस्तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्यैव व्याप्तित्वं विवक्षितमित्यर्थः।

केचित्तु—"अधिकरणत्वमप्याधेयप्रतियोगिकं भवतीति मते यथाश्रुतमेव सम्यगि"त्याहुः।

संयोगावच्छिन्नाधिकरणतायां धूमत्वावच्छिन्नाधेयतानिरूपितत्वसत्त्वेऽपि स्वरूपेणायोगोलकवृत्तित्वविरहादुभयाभावस्य सत्त्वेन धूमाभावस्य लक्षणघटकत्वान्न 'धूमवान्वह्ने'रित्यत्रातिव्याप्तिर्न वा संयोगेन द्रव्यसाध्यकद्रव्य-जात्यन्यतरत्वहेतावतिव्याप्तिः, तत्रापि संयोगावच्छिन्नाधिकरणतायां,—द्रव्यत्वावच्छिन्नाधेयतानिरूपितत्वसत्त्वेऽपि,—स्वरूपेण हेत्वधिकरणजातिवृत्तित्वाभावादुभयाभावस्याक्षततया साध्याऽभावस्य लक्षणघटकत्वादित्यवधेयम्।

पर्वतनिष्ठसंयोगावच्छिन्नाधिकरणतायां हेत्वधिकरणमहानसवृत्तित्वविरहाद्वह्निमान्धूमादित्यत्राव्याप्तिवारणाय'सामान्य'इत्युक्तम्, अन्यत्सर्वं पूर्ववदित्यास्तां विस्तरः।

उत्तरयति—**अत एवेत्यादीति**। वक्ष्यमाणग्रन्थासङ्गतिमुपपादयति—**समवायस्येति**। तथा च सम्बन्धधर्मिकोभयाभावघटितलक्षणस्य निरुक्तार्थकत्वे 'द्रव्यं जाते'रित्यत्र समवायस्यैकत्वमते वक्ष्यमाणातिव्याप्तिर्न सङ्गच्छते, समवायावच्छिन्नाधिकरणताया द्रव्यत्वत्वावच्छिन्नाधेयतानिरूपितत्ववत्त्वेऽपि,—हेत्वधिकरणगुणवृत्तित्वविरहवत्त्वेनोभयाभावस्याक्षततया द्रव्यत्वाभावस्य लक्षणाघटकत्वादित्यर्थः।

जागदीशी

'द्रव्यं जाते'रित्यादावतिव्याप्त्यभावादिति चेन्न ;

'संयोगः पर्वते वह्नेः सम्बन्धो, न तु वह्नौ पर्वतस्ये'त्यादिप्रतीत्या [हि[1]] किञ्चित्प्रतियोगिक—किञ्चिदनुयोगिक—सम्बन्धत्वमनुभवसिद्धं कुत्र चिदेव संयोगादौ, न तु सर्वत्र, तच्च स्वरूपसम्बन्धविशेषोऽतिरिक्तो वेत्यन्यदेतत् ;

तथा च साध्यतावच्छेदकसम्बन्धसामान्ये,—निरुक्त[प्रतियोगि]-प्रतियोगिकसम्बन्धत्व - हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसम्बन्धत्वोभयाभावस्य विवक्षणात्,—धूमसंयोगस्यायोगोलकानुयोगिकसंसर्गत्वविरहादेव नातिप्रसङ्गः,

—तत्र यथार्थविशिष्टधीनियामकस्यैव तदनुयोगिकसम्बन्धत्वात् ।

विवृतिः

'नन्वि'त्याद्याशङ्कासमाधानमाह—नेति । "पर्वते वह्ने"रित्यादिना संयोगसम्बन्धे पर्वतानुयोगिकत्वं, वह्निप्रतियोगिकत्वं च प्रदर्शितं ।

"न तु वह्नावित्यादिना च तत्र वह्न्यनुयोगिकत्वाभावः, पर्वतप्रतियोगिकत्वाभावश्च प्रदर्शितः, सर्वत्र संयोगेऽनुयोगिकत्वं, प्रतियोगिकत्वं च नानुभवसिद्धमिति तु 'यत्रे'त्यादिना स्वयमेव प्रदर्शयिष्यति ।

अनुयोगिकत्वादेरनुभवसिद्धत्वे लक्षणार्थं प्रदर्श्य 'धूमवान्वह्ने'रित्यत्रातिव्याप्तिं वारयति—**तथा चेति । विवक्षणादिति ।** 'मैव'मित्यादिग्रन्थेनेति शेषः । **नातिप्रसङ्ग इति ।** संयोगसामान्य उभयाभावसत्त्वेन धूमाभावस्य लक्षणघटकत्वादिति भावः ।

ननु तदनुयोगिकसम्बन्धत्वं—यदि तद्धर्मिकज्ञानविषयीभूतसंसर्गत्वं, तदा 'संयोगेन धूमवदयोगोलक'मित्यादिभ्रमविषयत्वस्य संयोगे सत्त्वेनायोगोलकानुयोगिकत्वमपि धूमसंयोगे सम्भवत्येवेति कथमतिव्याप्तिवारणमित्यत आह—**तत्रेति ।** तद्धर्मिणीत्यर्थः, नियामकस्य = जनकस्य, **तदनुयोगिकेति ।** तथा च यत्रायोगो-

दीपिका

**तथा चेति ।** अत्र पर्वतनिरूपिताधेयतायाः स्वरूपसम्बन्धावच्छिन्नाधिकरणत्वसम्बन्धेन साध्यतायां पर्वत–वाच्यत्वान्यतरत्वरूपव्यभिचारिण्यतिव्याप्तिः, साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नाधिकरणत्वसम्बन्धे,— पर्वतानुयोगिकसम्बन्धत्व, पर्वतनिरूपिताधेयताप्रतियोगिकत्वोभयसत्त्वेन साध्याभावस्य प्रतियोगिव्यधिकरण-

1. [ ] एतदन्तर्गतः पाठोऽस्मल्लिखितपुस्तके नास्ति ।

जागदीशी

एतेन,—'वह्निमान् वह्निरूपा'दित्यादावतिव्याप्तिः, पर्वत-वह्निसंयोग-एव,—वह्निप्रतियोगिकत्व-हेत्वधिकरणीभूतवह्न्यनुयोगिकत्वोभयाभाव-विरहेण वह्निसामान्याभावस्य लक्षणाघटकत्वादित्यपास्तम्।

पर्वत-वह्निसंयोगस्य हेतुमद्वह्निवृत्तित्वेऽपि,—वह्न्यनुयोगिकसम्बन्धत्वविरहेण तत्र तादृशोभयाभावसत्त्वात्।

इदन्त्ववधातव्यं—यत्रैकसंयोगव्यक्त्या यत्पदार्थयोः परस्परं विशिष्टधीः प्रमा, तत्र तयोरेकस्मिन् संयोगेन साध्ये तदीयरूपादौ व्यभिचारिण्यतिव्याप्तिः, तदुभयसंयोगस्य निरुक्तोभयाभावविरहादिति ॥१८॥

विवृतिः

लकानुयोगिकसम्बन्धत्वं, तत्र तद्धर्मिकयथार्थविशिष्टज्ञानविषयत्वमिति नियमाद्धूम-संयोगेऽयोगोलकधर्मिकयथार्थज्ञानविषयत्वरूपव्यापकाभावेनायोगोलकानुयोगिक—सम्बन्धत्वरूपव्याप्याभावः सिद्ध एवेति भावः। **एतेनेति**। तदनुयोगिकसम्बन्धत्वस्य तद्वृत्तिसम्बन्धत्वार्थकत्वं परित्यज्य निरुक्तार्थकरणेनेत्यर्थः।

तद्वृत्तिसम्बन्धत्वस्य तथात्वेऽतिव्याप्तिं सङ्गमयति—**पर्वतेति**। तथा च साध्यतावच्छेदकपर्वत-वह्निसंयोगे वह्निप्रतियोगिकत्व—हेत्वधिकरणीभूतवह्निवृत्तित्वोभयसत्त्वाद्वह्न्यभावस्य लक्षणाघटकत्वादतिव्याप्तिरिति भावः।

अतिव्याप्तिनिरासे हेतुमाह—**पर्वतेति**। तथा च तादृशवह्निसंयोगे वह्नि-धर्मिकप्रमाविषयत्वाभावेन वह्न्यनुयोगिकसम्बन्धत्वाभावोऽव्याहत एवेति नातिव्याप्तिरित्याशयः। **इदन्त्ववधातव्यमिति**। अत्र लक्षणे वक्ष्यमाणं चिन्तनीयमित्यर्थः। यत्र = स्थलविशेषे, एकसंयोगव्यक्त्या = मेषद्वयसंयोगव्यक्त्या, यत्पदार्थयोः= उभयोर्मेषयोः; परस्परं विशिष्टधीः प्रमा = 'संयोगेन तन्मेषवानेतन्मेषः, एतन्मेषवांश्च तन्मेष' इत्याकारकविशिष्टज्ञानं प्रमा, तत्र = तादृशस्थलविशेषे, तयोः = निरुक्तयोर्मेषयोर्मध्ये, एकस्मिन् = मेषे, व्यभिचारिणि = तन्मेषसाध्यकतदीयरूपात्मके हेतौ, अतिव्याप्तिमुपपादयति—**तदुभयसंयोगस्येति**। मेषद्वयसंयोगस्येत्यर्थः।

दीपिका

त्वाभावात्, पर्वतनिष्ठाधिकरणतायां पर्वतानिरूपिताधेयताप्रतियोगिकत्वस्य सत्त्वात्—आधेयताप्रतियोगिकाधिकरणते'ति व्याप्तिपञ्चकग्रन्थे मथुरानाथेनोक्तत्वादिति,—'निरुक्तप्रतियोगिप्रतियोगिकत्वं'परित्यज्य तादृशप्रतियोगिकसम्बन्धत्वमनुसृतं।

तथा च पर्वतनिष्ठाधिकरणतायां पर्वतनिरूपितस्वरूपसम्बन्धावच्छिन्नाधेयतायाः संसर्गत्वविरहात्साध्याभावस्य घटत्तुं शक्यत्वादिति ध्येयम्।

दीधितिः

धूमसंयोगे—वह्न्यधिकरणायोगोलकानुयोगिकत्वस्य,—
चैत्रान्यत्वविशिष्टैतद्दण्डसंयोगे– एतद्दण्डाधिकरणचैत्रानुयोगि-
कत्वस्य,—

जागदीशी

'यत्किञ्चि'दित्यस्य फलमाह,—❀ धूमसंयोग इति ❀। अन्यथा वह्न्यधिकरणमहानसानुयोगिकत्व-धूमप्रतियोगिकत्वोभयस्यैव 'धूमवान् वह्ने'रित्यादावतिप्रसङ्गः स्यादिति भावः। षष्ठ्यन्तद्वयं,—'विरहा'दित्यन्वयि। 'निरुक्त'पदस्य छद्मतः फलमाह,—❀ चैत्रान्यत्वेति ❀। 'निरुक्त'पदानुक्तौ 'चैत्रान्यत्वविशिष्टैतद्दण्डवानेतद्दण्डा'दित्यत्र चैत्रवृत्त्येतद्दण्डसंयोग

विवृतिः

तथा च साध्यतावच्छेदकमेपद्वयसंयोगे तन्मेपप्रतियोगिकसम्बन्धत्वस्य हेत्वधिकरणतन्मेपानुयोगिकसम्बन्धत्वस्य च द्वयोः सत्त्वेनोभयाभावविरहादभावान्तरमादायाऽतिव्याप्तिरिति भावः।

केचित्तु "–तादृशसंयोगे मानाभाव इत्यभिप्रायेणेदं लक्षणमिति–" वदन्ति।

अन्यथेति। हेत्वधिकरणव्यक्तौ यत्किञ्चित्त्वस्यानुपादान इत्यर्थः। अतिप्रसङ्ग इति। तदुपादाने च यत्किञ्चिद्धेत्वधिकरणाऽयोगोलकानुयोगिकसम्बन्धत्वस्य धूमसंयोगे विरहाद्धूमाभावस्य लक्षणघटकत्वान्नातिव्याप्तिरित्याशयः। निरुक्तपदस्येति। प्रतियोगितावच्छेदकावच्छिन्नार्थक'निरुक्त'पदस्येत्यर्थः। छद्मत इति। 'निरुक्तपदानुपादान'इत्यनुक्त्वा प्रकारान्तरेणेत्यर्थः। निरुक्तपदानुक्ताविति। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वं विहाय,–प्रतियोगित्वाश्रयप्रतियोगिकत्वनिवेश इत्यर्थः। एतद्दण्डः = संयोगेन चैत्र-मैत्रोभयवृत्तिदण्डः, तस्य च चैत्रेऽपि विद्यमानतया तत्र चैत्रान्यत्वविशिष्टैतद्दण्डस्य संयोगेनासत्त्वान्निरुक्तैतद्दण्डस्य व्यभिचारितया तत्रातिव्याप्तिः, साध्यतावच्छेदकसंयोगसामान्ये,–चैत्रान्यत्वविशिष्टैतद्दण्डाभावप्रतियोगित्वाश्रयीभूतकेवलैतद्दण्डप्रतियोगिकत्व–हेत्वधिकरणीभूतचैत्रानुयोगिकत्वोभयसत्त्वेन साध्याभावस्य लक्षणाघटकत्वात्,

दीपिका

परे तु,—'पर्वतानुयोगिकस्वरूपसम्बन्धेन वाच्यत्वाभाववान् पर्वतत्वा'दित्यादावतिव्याप्तिः, साध्यतावच्छेदकसम्बन्धे,— पर्वतानुयोगिकसम्बन्धत्व — साध्यतावच्छेदकावच्छिन्नाभावीयप्रतियोगिकत्वैतदुभयसत्त्वेन,—साध्याभावस्य लक्षणाघट-

जागदीशी

एव,—चैत्रान्यत्वविशिष्टैतद्दण्डाभावप्रतियोगिप्रतियोगिकत्व-हेत्वधिकरणीभूत-चैत्रानुयोगिकत्वोभयाभावविरहात्तादृशदण्डाभावस्य लक्षणाघटकतयाऽतिव्याप्तिः स्यात्—,

—तदुपादाने तु चैत्रान्यत्वविशिष्टैतद्दण्डत्वावच्छिन्नप्रतियोगिकत्वस्याभावादेव तत्रोभयाभावसम्भव इति नातिव्याप्तिरिति भावः ।

यदि च 'प्रतियोगिता प्रत्याश्रयं नानैव, न त्वेके'ति मतं, तदा चैत्रान्यत्व-विशिष्टदण्डत्वावच्छिन्नं यच्चैत्रावृत्तिदण्डनिष्ठं प्रतियोगित्वं, तदाश्रयप्रतियोगिकत्व,—हेत्वधिकरणीभूतचैत्रानुयोगिकत्वोभयाभावस्य संयोगसामान्य एव सत्त्वात् 'निरुक्त'पदं विनाऽपि नातिव्याप्तिः सम्भवतीति तन्मतसाधारण्येनातिव्याप्तिरक्षणार्थमुक्तम्—※एतदिति※[शि॰ २१२ पृ॰]।

विवृतिः

प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वस्य लक्षणघटकत्वे तु,—साध्यतावच्छेदकीभूते संयोगे हेत्वधिकरणचैत्रानुयोगिकत्वसत्त्वेऽपि,—चैत्रान्यत्ववैशिष्ट्यैतद्दण्डत्व-धर्मद्वयावच्छिन्नप्रतियोगिकत्वविरहेणोभयाभावसत्त्वात्साध्याभावस्य लक्षणघटकतया नातिव्याप्तिरिति भावः ।

साध्यघटकैतत्पदप्रयोजनमाह—यदि चेति । तथा च 'चैत्रान्यत्वविशिष्टदण्डवानेतद्दण्डा'दित्युक्तौ प्रतियोगिताया आश्रयभेदेन भिन्नत्वमिति मते प्रतियोगितावच्छेदकावच्छिन्नार्थक'निरुक्त'पदं परित्यज्य,—केवलप्रतियोगित्वाश्रयप्रतियोगिकत्वविवक्षणेऽपि नातिव्याप्तिः, साध्यतावच्छेदकीभूतसंयोगसामान्ये,—एतद्दण्डाधिकरणचैत्रानुयोगिकत्वसत्त्वेऽपि—चैत्रान्यत्वविशिष्टदण्डाभावीयं यच्चैत्र-मैत्रावृत्तिदण्डनिष्ठप्रतियोगित्वं, तदाश्रयचैत्रावृत्तिदण्डप्रतियोगिकत्वविरहादेवोभयाभावसत्त्वेन साध्याभावस्य—चैत्रान्यत्वविशिष्टदण्डाभावस्य—लक्षणघटकत्वादत—एतद्दण्डस्य साध्यत्वानुसरणं ।

तथा च सति तादृशाभावीयं यदेतद्दण्डनिष्ठप्रतियोगित्वं तदाश्रयत्वमेतद्दण्ड एव न त्वन्यत्रेति,—'निरुक्त'पदं विना भवत्यतिव्याप्तिरिति भावः । न च 'प्रतियोगिभेदे प्रतियोगिताया भिन्नत्व'मिति मतावलम्बने 'संयोग्येतत्त्वा'दित्यत्राव्याप्तिः, एतद्वृक्षाऽनुयोगिकसमवाये संयोगाभावप्रतियोगित्वाश्रयजलादिवृत्तिसंयोगप्रतियोगिकत्वविर-

दीपिका

कत्वात्, तन्निवेशे च,—पर्वतानुयोगिकस्वरूपे साध्यप्रतियोगिकसम्बन्धत्वविरहान्नातिव्याप्तिरित्याहुः ।

जागदीशी

गुण-कर्मान्यत्वविशिष्टसत्तासमवाये च—जात्यधिकरणगुणानुयोगिकत्वस्य,—

—विरहान्नातिप्रसङ्गः ॥ १९ ॥

जागदीशी

[ [1]यद्यनुयोगिता प्रत्याश्रयं नानैव, न त्वेकेत्यभिमतं, तदा ] दण्डसामान्यस्य हेतुत्वे,—एतद्दण्डप्रतियोगिकसंयोगसामान्ये दण्डान्तराधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वाभावादेवोभयाभावसत्त्वादतिव्याप्तिविरहः स्यादतो हेतौ—॥एतदिति॥ [शि० २१२ पृ०]।

संयोगेन साध्यतायां निरुक्तपदस्य व्यावृत्तिमुक्त्वा,—समवायेन साध्यतायां तामाह,—॥गुणकर्मान्यत्वेति॥।—इदञ्च समवायस्य [[2]अधिकरणभेदेनापि] नानात्वमभिप्रेत्य, तस्यैकत्वे तु तत्र गुणानुयोगिकत्व,—विशिष्टसत्ताप्रतियोगिकत्वोभयसत्त्वेनातिव्याप्तितादवस्थ्यात।

यद्यपि'यादृशप्रतियोगितावच्छेदकावच्छिन्ने'त्याद्युक्तौ,—'वह्नि-धूमोभय-

विवृतिः

हादिति वाच्यम्। उभयमतसाधारण्येनाव्याप्त्यनवकाशादिति—नव्याः।

हेतुघटकैतत्पदप्रयोजनमाह—दण्डसामान्यस्येति।

तथा च 'चैत्रान्यत्वविशिष्टैतद्दण्डवान् दण्डा'दित्युक्तौ 'निरुक्त'पदपरित्यागेऽपि नातिव्याप्तिः, संयोगसामान्ये चैत्रान्यत्वविशिष्टदण्डाभावीयप्रतियोगित्वाश्रयैतद्दण्डप्रतियोगिकत्वसत्त्वेऽपि यत्किञ्चिद्धेत्वधिकरणीभूतं यच्चैत्र-मैत्रभिन्नदेवदत्तादिकं तदनुयोगिकत्वविरहेणोभयाभावसत्त्वादत 'एतद्दण्डस्य' हेतुत्वानुसरणम्,

तथा सति एतद्दण्डस्य हेतोरधिकरणं चैत्रो, मैत्रो वा नान्य इति—'निरुक्त'पदपरित्यागेऽतिव्याप्तिरस्त्येवेत्याशयः। तामाहेति। निरुक्तपदपरित्यागेऽतिव्याप्तिमाहेत्यर्थः।

ननु समवायश्चैक एव, तत्र च विशिष्टसत्तात्वावच्छिन्नप्रतियोगिकत्व—हेत्वधिकरणयत्किञ्चिद्गुणानुयोगिकत्वोभयोः सत्त्वेन साध्याभावस्य लक्षणाघटकत्वान्निरुक्तपदसत्त्वेऽप्यतिव्याप्तिवारणं न सम्भवतीत्यत आह—इदञ्चेति। निरुक्तातिव्याप्तिदानञ्चेत्यर्थः। तथा च समवायस्य नानात्वमभिप्रेत्यैव 'निरुक्त'पदाऽसत्त्वेऽतिव्याप्तेरभिधीयमानतया तत्सत्त्वे नास्त्यतिव्याप्तिरिति भावः। सम्बन्धमात्र एवोभयत्वावच्छिन्नप्रतियोगिकत्वं नास्तीत्याशयेन शङ्कते—यद्यपीति।

१. २. [ ] एतदन्तर्गतः पाठो लिखितपुस्तके नास्ति।

जागदीशी

वान् धूमा'दित्यत्राव्याप्तिः, संयोगसामान्य एव वह्नि-धूमोभयत्वावच्छिन्न-प्रतियोगिकत्व-धूमाधिकरणपर्वतानुयोगिकत्वोभयाभावसत्त्वात्,—

न च निरुक्तप्रतियोगितावच्छेदकावच्छिन्नवत्ताप्रमायाः सांसर्गिक-विषयत्वमेव—निरुक्तप्रतियोगिकत्वं—वक्तव्यं,—

—तच्च पर्वते वह्नि-धूमयोः प्रत्येकसंयोगस्याप्यस्तीति नाव्याप्तिः,

अन्यथा'संयोगेन 'पर्वतो वह्नि-धूमोभयवा'नित्यादिप्रमाया दुर्घटत्वापत्तेरिति वाच्यम्;

तथा सति'अत एवे'त्यादिना वक्ष्यमाणाया 'वह्नि-धूमोभयवान् वह्ने'-रित्यात्रातिव्याप्तेरसङ्गत्यापत्तेः,

वह्नि-धूमोभयवत्ताप्रमानियामकसंयोगमात्रस्यैव हेत्वधिकरणीभूता-

विवृतिः

प्रतियोगित्वाश्रयप्रतियोगिकत्वविवक्षणे तु नाव्याप्तिः, संयोगसम्बन्धे तादृशोभयाभावप्रतियोगित्वाश्रयधूमादिप्रतियोगिकत्वस्य, हेत्वधिकरणपर्वताद्यनुयोगिकत्वस्य च द्वयोः सत्त्वादतः पूर्वोक्तातिव्याप्तिवारणाय प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वस्यावश्यं विवक्षणीयतया—वह्नि-धूमोभयत्वावच्छिन्नप्रतियोगिकत्वस्य संयोगे विरहात्साध्याभावस्य लक्षणघटकतयाऽव्याप्तिरित्याह— **अव्याप्तिरिति**।

ननु 'प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वं'—'यत्किञ्चिद्धर्मिकप्रतियोगितावच्छेदकावच्छिन्नवा'नित्याकारकयथार्थज्ञानीयसंसर्गत्वाख्यविषयत्वमेव, 'यथार्थ'पदानुपादानेऽयोगोलकानुयोगिकसंयोगमात्र एव धूमवदयोगोलकमित्याकारकधूमत्वावच्छिन्नवत्ताप्रमीयसंसर्गत्वाख्यविषयत्वसत्त्वेन 'धूमवान्वह्ने'रित्यत्रातिव्याप्तिः।

एवञ्च न 'वह्नि-धूमोभयवान्धूमा'दित्यत्राव्याप्तिः, साध्यतावच्छेदकीभूतसंयोगसामान्ये 'वह्नि-धूमोभयत्वावच्छिन्नवान्पर्वत'इत्याकारकयथार्थज्ञानीयसंसर्गत्वाख्यविषयत्वरूपतादृशोभयत्वावच्छिन्नप्रतियोगिकत्वस्य, — हेत्वधिकरणपर्वताद्यनुयोगिकत्वस्य च सत्त्वेन वह्नि-धूमोभयाभावस्य लक्षणाघटकत्वादित्याशङ्कते—

**न चेति**। तच्च = निरुक्तविषयत्वरूपप्रतियोगिकत्वञ्च, प्रत्येकसंयोगे = वह्नि-संयोगे, धूमसंयोगे च, **अन्यथेति**। वह्नि-धूमयोः प्रत्येकसंयोगे निरुक्तप्रतियोगिकत्वानभ्युपगम इत्यर्थः।

निराकरोति—**तथा सतीति**। निरुक्तप्रतियोगि-प्रतियोगिकत्वस्य निरुक्त-विषयत्वस्वरूपत्व इत्यर्थः।

वक्ष्यमाणातिव्याप्त्यभावमुपपादयति—**वह्नीति**। तथा च निरुक्तरीत्या

जागदीशी

ऽयोगोलकानुयोगिकत्वाभावेन वह्नि-धूमोभयत्वावच्छिन्नाभावमादायाति-व्याप्त्यसम्भवात्,—

—तथाऽपि—साध्य—साधनभेदेन व्याप्तेर्भेदाद्व्यासज्यवृत्तिधर्मेण साध्यतायां 'निरुक्त'पदमपहाय,—तादृशप्रतियोगिताश्रयप्रतियोगिकत्वघटितस्यैव प्रवेशान्नोक्तस्थलाऽव्याप्तिः ।

न चैवमुभयत्वेन साध्यतायां व्यभिचारिण्यतिव्याप्तिस्तदवस्थैव स्यात्, 'अत एवे'त्यादिना'वह्नि-धूमोभयवान् वह्ने'रित्यादौ ग्रन्थकृतैवाग्रे तद्दोषस्य वक्ष्यमाणत्वादिति ।

वस्तुतः—सम्बन्धमात्रस्यैकप्रतियोगिकत्वापरानुयोगिकत्वनियमेन वह्नि-धूमोभयत्वावच्छिन्नप्रतियोगिकसम्बन्धत्वाप्रसिद्ध्यैव, —तदुभयत्वावच्छि-

विवृतिः

निरुक्तप्रतियोगिकत्वविवक्षणे वक्ष्यमाणा 'वह्नि-धूमोभयवान्वह्ने' रित्यत्रातिव्याप्तिर्न सङ्गच्छते, 'वह्नि-धूमोभयवान् पर्वतादि'रित्याकारकप्रमाजनकसंयोगविषयत्वरूप-तादृशोभयत्वावच्छिन्नप्रतियोगिकत्वं यत्र संयोगे, तत्र हेत्वधिकरणाऽयोगोलकानु-योगिकत्वविरहेणोभयाभावस्याक्षततया साध्याभावस्य लक्षणघटकत्वादतो निरुक्त-रीत्या तादृशप्रतियोगिकत्वं न वाच्यमित्याशयः ।

'यद्यपी'त्यस्य समाधानमाह,—**तथापीति** । व्यासज्यवृत्तिधर्मेण = एकत्वा-नवच्छिन्नपर्याप्तिकधर्मेण, प्रतियोगित्वाश्रयप्रतियोगिकत्वविवक्षणे नोक्तस्थले-ऽतिव्याप्तिः सम्भवतीति तु प्रागेव प्रदर्शितम् ।

ननु व्यासज्यवृत्तिधर्मावच्छिन्नसाध्यकस्थले यदि प्रतियोगित्वाश्रयप्रतियोगि-कत्वमात्रं निवेश्यते, तदा, 'वह्नि-धूमोभयवान् वह्ने'रित्यत्रातिव्याप्तिः, संयोगसामान्ये तादृशोभयाभावप्रतियोगित्वाश्रयवह्निप्रतियोगिकत्व— हेत्वधिकरणायोगोलकानुयो-गिकत्वयोरुभयोः सत्त्वेन, साध्याभावस्य लक्षणाघटकत्वादित्याशङ्क्य,—समाधत्ते—

—**तद्दोषस्येति** । तथा चोक्तस्थलेऽतिव्याप्तिरत्र लक्षणेऽस्त्येवेति भावः ।

नन्वनुगतव्याप्यत्वव्यवहारसंपादनाय लक्ष्यभेदेनापि लक्षणस्यैक्यमवश्यमङ्गीक-र्त्तव्यम्, अन्यथा लक्षणस्य नानात्वे तादृशव्यवहारो न स्यादित्युक्तोभयत्वेन रूपेण साध्यतायामव्याप्तिरस्त्येवेत्यत आह—**वस्तुत इति** ।

एकप्रतियोगिकत्वाऽपरानुयोगिकत्वनियमेन = एकधर्मावच्छिन्नप्रतियोगिकत्वा-

जागदीशी

न्नाभावस्य लक्षणाघटकत्वान्नाव्याप्तिः, अत एवाग्रे,–'वह्नि-धूमोभयवान् वह्ने'रित्यादावतिव्याप्तिर्दास्यते ।

न च वह्नि-धूमोभयत्वावच्छिन्नप्रकारित्वादावेव तादृशोभयत्वावच्छिन्नप्रतियोगिकसम्बन्धत्वप्रसिद्धिसम्भवः । प्राचां मते-प्रकारित्वादेः सम्बन्धत्वाभावात्, विशिष्टधीनियामकस्यैव तथात्वादिति ध्येयम् ।

न चैवमपि 'घटवान्नित्यज्ञानत्वा'दित्यत्राऽव्याप्तिः, विषयितासम्बन्धे गगनीयत्व,–नित्यज्ञानानुयोगिकत्वोभयसत्त्वेन ['गगनत्वेन] गगनाभावमा-

विवृतिः

ऽपरधर्मावच्छिन्नानुयोगिकत्वनियमेन, नाव्याप्तिरिति । तथा च वह्नि-धूमोभयत्वावच्छिन्नप्रतियोगिकसम्बन्धाप्रसिद्ध्या,—'यादृशप्रतियोगितावच्छेदक'पदेन तादृशोभयत्वस्य धर्त्तुमशक्यतया, 'यादृशप्रतियोगितावच्छेदक'पदेन घटत्वादिकमादाय न 'वह्नि-धूमोभयवान् धूमा'दित्यत्राव्याप्तिरित्यर्थः ।

अत एवेति । उभयत्वावच्छिन्नप्रतियोगिकत्वस्याप्रसिद्धत्वादेवेत्यर्थः । तथा च तुल्ययुक्त्या 'यादृशप्रतियोगितावच्छेदक'पदेन घटत्वादिकमादाय 'वह्नि-धूमोभयवान्वह्ने'रित्यत्रातिव्याप्तिरग्रे दास्यत एवेति भावः ।

ननु 'तादृशोभयविषयकज्ञानस्य सर्वसम्मततया ज्ञाननिष्ठप्रकारितात्मकसम्बन्धे उभयत्वावच्छिन्नप्रतियोगिकत्वं प्रसिद्धमेव, तथा चोभयसाध्यकसद्धेतावव्याप्तिः, नातिव्याप्तिश्चोभयसाध्यकव्यभिचारिणीत्याशङ्क्य समाधत्ते—प्राचामिति ।

प्रकारितायां संसर्गत्वाऽभावे बीजमाह—विशिष्टधीति । तथा च तन्मते प्रकारितासम्बन्धेन विशिष्टबुद्ध्यनुत्पादेन संसर्गत्वव्यापकविशिष्टधीजनकत्वाभावस्य प्रकारितायां सत्त्वेन संसर्गत्वाभावोऽपि तत्र सिद्ध एवेति ध्येयम् ।

शङ्कते—न चैवमपीति । वाच्यमित्यनेनान्वयः । एवमपि = 'घटवान् महाकालत्वा'दित्यत्र गगनाभावमादायाव्याप्तिवारणेऽपि, नित्यज्ञानत्वादिति । 'नित्य'-पदं सद्धेतुत्वरक्षायै, अन्यथा ज्ञानत्वस्य घटाविषयकेऽपि,–ज्ञाने सत्त्वेन, तत्र घटस्य विषयितासम्बन्धेनाभावात्तस्य व्यभिचारित्वं स्यादिति भावः ।

अव्याप्तिं सङ्गमयति—विषयितेति । 'गगनाभावमादायापी'त्यपिनाऽन्यपदार्थाभावस्याप्रसिद्धत्वमस्त्येवेति सूचितम् । न च नित्यज्ञानान्यत्वविशिष्टपटाद्यभावमादायैव लक्षणसमन्वय इति वाच्यम्, तस्यापि नित्यज्ञाने विषयितया सत्त्वाऽभ्युपगमात्, अन्यथा नित्यज्ञानस्य सर्वविषयकत्वहान्यापत्तेरिति ध्येयम् ।

१. अयं पाठः काशीमुद्रिते, लिखिते च न दृश्यते ।

जागदीशी

दायापि प्रसिद्ध्यसम्भवादिति वाच्यम्; तादृशसम्बन्धेन घटादेर्व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्यस्याप्रवेशादिति ध्येयम्।

[के[1] चित्तु—"घटनिरूपितविषयितात्वेन घटस्य सम्बन्धत्वं स्वीक्रियते, न तु विषयितात्वेनेति पटनिष्ठतादृशप्रतियोगिताकत्वमादायैव नाव्याप्तिः।

नवीनास्तु—"विषयितात्वेनैव सम्बन्धता, किन्तु निरुक्त-प्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्व-साध्यनिरूपितत्वैतत्त्रितयाऽभावघटितत्वेन न कोऽपि दोषः सम्भवतीति—"वदन्ति ]

अत्र ब्रूमः,—साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्याधिकरणतानिरूपितस्वरूपसम्बन्धेन,–यदभाव-प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभाववत्त्वं हेतुमतस्तदभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणेनैव सामञ्जस्ये,—निरुक्त'प्रतियोगिकत्वे'त्यादिखण्डशः प्रसिद्धिर्विफला,

विवृतिः

समाधत्ते—तादृशसम्बन्धेनेति। न च व्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावटिततया विषयितासम्बन्धेन वस्तुमात्रस्यैव नित्यज्ञाने सत्त्वेन,–तत्सम्बन्धावच्छिन्नाभावाऽप्रसिद्ध्या व्याप्यवृत्तिसाध्यकलक्षणस्याप्यव्याप्तिरिति वाच्यम्। 'साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिता' पदेन साध्यतावच्छेदकसंसर्गातिरिक्तसम्बन्धावच्छिन्नत्व— साध्यतावच्छेदकव्यापकत्वोभयाभाववत्प्रतियोगिताया एव विवक्षितत्वात्, तथा च समवायादिना पटाद्यभावमादायैव लक्षणसमन्वयान्नाव्याप्तिरिति भावः।

दीधितिकारमाक्षिपति—अत्र ब्रूम इति। निरुक्तरीत्या प्रतियोगिवैयधिकरण्यविवक्षणे प्रयोजनाभावं ब्रूम इत्यर्थः। साध्यतावच्छेदकेति। तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणताप्रतियोगिक-स्वरूपसम्बन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभाववत्त्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्य 'व्याप्तित्व'विवक्षयैव सामञ्जस्य इत्यर्थः।

अत्र 'सामान्य'पदव्यावृत्तिः पूर्ववत्।

गगनाभावस्य निरुक्तरीत्या, प्रतियोगिवैयधिकरण्यप्रसिद्धिर्विफलेत्याह—

१. [ ] एतदन्तर्गतः पाठो लिखिते न दृश्यते।

जागदीशी

'कालो घटवान् महाकालत्वा' दित्यादौ,—कालिकसम्बन्धावच्छिन्न-घटाधिकरणतानिरूपितस्वरूपसम्बन्धेन—पटत्वावच्छिन्नाधिकरणत्वसामान्याभावस्यैव हेतुमति सत्त्वेन—पटत्वावच्छिन्नाभावस्यैव निरुक्तप्रतियोगि-व्यधिकरणस्य सुलभत्वादिति ध्येयम् ।

एवं—यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसम्बन्धसामान्ये,—साध्यतावच्छेदकसम्बन्धत्व-हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिक—सम्बन्धत्वोभयाभावः,—तादृशप्रतियोगिता कथं नोक्तेति चिन्तनीयम् ॥१९॥

विवृतिः

—निरुक्तेति । उक्तविवक्षया 'घटवान्महाकालत्वा' दित्यत्राव्याप्तिं वारयति,—'कालो घटवा'निति ।

प्रतियोगितावच्छेदककोटौ लाघवमनुसृत्याह—**एवमिति** ।

'यादृशेति । 'वह्निमान्धूमा' दित्यादौ वह्नित्वावच्छिन्नप्रतियोगिकसम्बन्धसामान्यान्तर्गते संयोगे साध्यतावच्छेदकसंयोगसम्बन्धत्व—हेत्वधिकरणपर्वताद्यनुयोगिकत्वयोर्द्वयोः सत्त्वेन वह्न्यभावस्य लक्षणाघटकत्वाद्घटाभावमादाय लक्षणसमन्वयः, 'धूमवान्वह्ने' रित्यत्र धूमत्वावच्छिन्नप्रतियोगिकसम्बन्धसामान्य एवायोगोलकानुयोगिकत्वविरहेणोभयाभावस्य सत्त्वान्न तत्र लक्षणसमन्वयः ।

'घटवान्महाकालत्वा' दित्यत्र तु,—गगनत्वावच्छिन्नप्रतियोगिकतादात्म्ये कालिकसम्बन्धत्व,—महाकालानुयोगिकत्वयोरुभयोरभावसत्त्वाद्गगनाभावमादायैव लक्षणसमन्वयः ।

न चातिलाघवात्साध्यतावच्छेदकसम्बन्धत्वविशिष्टहेत्वधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिकत्वाभाव एव विवक्ष्यतां, कालिकसम्बन्धत्वविशिष्टमहाकालानुयोगिकत्वस्य कालिकसम्बन्धे प्रसिद्धस्य गगनत्वावच्छिन्नप्रतियोगिकतादात्म्येऽभावसत्त्वादेव गगनाभावमादाय 'घटवान्महाकालत्वा' दित्यत्र लक्षणसमन्वयसम्भवादिति वाच्यम्,—

—'संयोगी गुण-कर्मान्यत्वा' दित्यत्रातिव्याप्त्यापत्तेः—साध्यतावच्छेदकसमवायसम्बन्धत्वविशिष्टसामान्याद्यनुयोगिकसम्बन्धत्वाप्रसिद्ध्या 'यत्किञ्चिद्धेत्वधिकरण' पदेन सामान्यादेर्धर्तुमशक्यत्वात्,

द्रव्यस्य तथात्वे तु—समवायसम्बन्धत्वविशिष्टस्य तदनुयोगिकसम्बन्धत्वस्य संयोगत्वावच्छिन्नप्रतियोगिकसम्बन्धसामान्यान्तर्गते समवायेऽभावविरहेण संयोगाभावस्य लक्षणाघटकत्वात् ।

इदमत्रावधेयम्—निरुक्ताधिकरणतानिरूपितत्वेन संसर्गतामनभ्युपगम्यैव

दीधितिः

"स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु,–निरुक्तप्रतियोग्य-

जागदीशी

कालस्य जगदाधारत्वप्रवादमनुसृत्याह,—❀स्वरूपसम्बन्धेनेति❀ । कालिकविशेषणतयेत्यर्थः । गगनादेरवृत्तित्वप्रवादस्तु संयोग–समवायपरः, तथा चोक्तप्रणाल्याऽपि गगनाभावो न प्रतियोगिव्यधिकरण इति,— 'घटवान् महाकालत्वा'दित्यादावव्याप्तिस्तदवस्थैवेति भावः ।

❀निरुक्तेति❀ । प्रतियोगितावच्छेदक-सम्बन्धेन यादृश-प्रतियोगितावच्छे-

विवृतिः

दीधितिकृता निरुक्तक्रमेण प्रतियोगिवैयधिकरण्यस्य विवक्षणीयतया,—तन्मते नानुपपत्तिगन्धोऽपि, न च विशिष्टरूपेण संसर्गताया अवश्यं स्वीकरणीयत्वमिति' वाच्यं, प्रमाणाभावात्, एवं–निरुक्तसाध्यतावच्छेदकसम्बन्धत्वघटितोभयाभावप्रतियोगितावच्छेदककोटौ–यादृशप्रतियोगित्वादेरनिवेशनीयतया लाघवसम्भवेऽपि–अनुयोगितावच्छेदककोटौ तस्य निवेशनीयतया,—दीधितिकारोक्तोभयाभावघटितनिरुक्त्यपेक्षया लाघवानवकाशादिति ।

**कालस्येति** । गगनादेः कालिकेन महाकालावृत्तित्वस्य जगदाधारत्वप्रवादो न सम्भवतीत्याशयः ।

नन्वेवं विभूनामवृत्तित्वप्रवादो व्याहन्येतेत्यत आह—**गगनादेरिति** । तथा च समवायादिनैव सम्बन्धेन गगनादेरवृत्तित्वं, न तु कालिकेनेति भावः ।

**अव्याप्तिरिति** । तथा च साध्यतावच्छेदककालिकसम्बन्धसामान्ये,—गगनत्वावच्छिन्नप्रतियोगिकत्व,—महाकालानुयोगिकत्वयोर्द्वयोः सत्त्वेन गगनाभावस्यापि प्रतियोगिवैयधिकरण्यासम्भवाद्घटवान्महाकालत्वादित्यत्राव्याप्तिरशक्यपरिहारैवेति भावः ।

**प्रतियोगितेति** । प्रतियोगितावच्छेदकसम्बन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नासम्बन्धित्वं हेतुमतस्तादृशप्रतियोगितासामान्ये,—साध्यतावच्छेदकीभूतयद्धर्मावच्छिन्नत्व,—साध्यतावच्छेदकीभूतयत्सम्बन्धावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नो हेतुव्यापकस्तद्व्यापकसामानाधिकरण्यञ्च हेतौ 'व्याप्ति'रिति पर्यवसितार्थः ।

भवति हि—संयोगेन वह्न्यादेर्धूमादिव्यापकत्वं, समवायेन वह्नित्वावच्छिन्नाऽनधिकरणहेत्वधिकरणपर्वतादिवृत्तिसमवायावच्छिन्नवह्न्यभावप्रतियोगितायां,–वह्नि-

दीधितिः

**—नधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये,—**

जागदीशी

दकावच्छिन्नासम्बन्धित्वं हेतुमतस्तादृशप्रतियोगितासामान्य इत्यर्थः।

तथा च संयोगादिना घटाद्यभावमादायैव 'घटवान् महाकालत्वा'-दित्यत्र लक्षणसङ्गतिः।

घटाभावप्रतियोगितायां धूमत्वावच्छिन्नत्व-संयोगसम्बन्धावच्छिन्न-त्वोभयाभावसत्त्वेन 'धूमादेः संयोगेन वह्न्यादिव्यापकत्वापत्तिवारणाय——सामान्येति। तथा च,—धूमनिष्ठतादृशप्रतियोगितायामेव तदुभय-सत्त्वाददोषः।

विवृतिः

त्वावच्छिन्नत्वसत्त्वेऽपि साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नत्वविरहेणोभयाभावस्य विद्यमानत्वात्,

ननु संयोगेन धूमादेर्वह्न्यादिव्यापकत्वं,—संयोगेन धूमानधिकरणाऽयोगोलक-वृत्तिसंयोगावच्छिन्नधूमाभावप्रतियोगितायां धूमत्वावच्छिन्नत्व–संयोगसम्बन्धा-वच्छिन्नत्वयोर्द्वयोः सत्त्वात्।

अन्यत्र सर्वत्रैवोक्तरीत्या सद्धेतुस्थले साध्यस्य हेतुव्यापकत्वं, असद्धेतुस्थले च साध्यस्य हेत्वव्यापकत्वं स्वयमूहनीयम्।

'घटवान्महाकालत्वा'दित्यत्र लक्षणसमन्वयप्रकारं प्रदर्शयति—**तथा चेति**। निरुक्तलक्षणकरणे चेत्यर्थः। **संयोगादिनेति**। आदिपदात्समवायपरिग्रहः। तथा च संयोगेन घटत्वावच्छिन्नानधिकरणमहाकालवृत्तिसंयोगावच्छिन्नघटाभावप्रति-योगितायां,–साध्यतावच्छेदकीभूतघटत्वावच्छिन्नत्वसत्त्वेऽपि साध्यतावच्छेदककालिक-सम्बन्धावच्छिन्नत्वाभावेनोभयाभावस्याक्षततया—तादृशकालिकसम्बन्धेन घटत्वा-ऽवच्छिन्नस्य महाकालत्वव्यापकत्वाल्लक्षणसङ्गतिरित्यर्थः।

'सामान्य'पदव्यावृत्तिमाह,—**घटाभावप्रतियोगितायामिति**। संयोगेन घटत्वावच्छिन्नानधिकरणहेत्वधिकरणवृत्तिघटाभावप्रतियोगितायामित्यर्थः। 'सामान्य'-पदोपादानात्तादृशव्यापकत्वापत्तिं वारयति,—**तथा चेति**। धूमनिष्ठतादृशप्रतियोगि-तायां = प्रतियोगितावच्छेदकसम्बन्धेन धूमत्वावच्छिन्नानधिकरणहेत्वधिकरणाऽयोगो-लकवृत्त्यभावीयप्रतियोगितासामान्यान्तर्गतायां धूमनिष्ठप्रतियोगितायाम्, **अदोष इति**। न धूमादेर्वह्न्यादिव्यापकत्वापत्तिरित्यर्थः।

१. 'धूमत्वादिना संयोगेने'ति लिखितपुस्तकपाठः।

दीधितिः

**यत्सम्बन्धावच्छिन्नत्व,-यद्धर्मावच्छिन्नत्वोभयाभावः,—**

जागदीशी

**<sup></sup>**
❀यत्सम्बन्धेति❀ ।—समवायिनः संयोगेन साध्यतायां घटत्वादि-हेतावव्याप्तिः, साधनवन्निष्ठस्य समवायेन संयोगिसामान्याभावस्य प्रति-योगितायां—संयोग-समवायोभयावच्छेद्यतासत्त्वादतो 'धर्म्म-सम्बन्ध'-योरुपादानं,

विवृतिः

ननु साध्यतावच्छेदकताया धर्मे, सम्बन्धे च विद्यमानतया, तादृशप्रतियोगिता-सामान्ये,—साध्यतावच्छेदकावच्छिन्नत्वरूपयदवच्छिन्नत्वाभाव एव निवेश्यतां, किं तादृशोभयाभावनिवेशेन ?

न च समवायेन वह्न्यभावप्रतियोगितायां साध्यतावच्छेदकवह्नित्वावच्छिन्नत्वा-ऽसत्त्वाद्वह्निमान्धूमादित्यत्राव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकताश्रयीभूतं यद्यत् तावदवच्छिन्नत्वाभावस्य विवक्षणीयत्वान्निरुक्तप्रतियोगितायां तथाविधसंयो-गावच्छिन्नत्वविरहेण तावदवच्छिन्नत्वाभावस्यानपायादित्यत आह—**समवा-यिन इति ।**

**घटत्वादिहेताविति ।** हेत्वधिकरणे घटे समवायिनो द्रव्यान्तरस्य साध्यी-भूतस्य संयोगेन सत्त्वात्सद्धेताविल्यर्थः ।

अव्याप्तिमुपपादयति-**साधनवन्निष्ठेति ।** तथा च समवायेन संयोगित्वाव-च्छिन्नानधिकरणे घटे वर्त्तमानस्य समवायेन संयोग्यभावस्य,—प्रतियोगितायां संयो-गिनिष्ठायां,—साध्यतावच्छेदकताश्रयसमवाय-संयोगोभयावच्छिन्नतया, हेतुसमा-नाधिकरणाभावीयप्रतियोगितासामान्ये,- साध्यतावच्छेदकावच्छिन्नत्वाऽभावविरहेण समवायित्वावच्छिन्नस्य संयोगेन घटत्वव्यापकत्वानुपपत्तिरतो 'धर्म-सम्बन्ध'यो—रुभयोरुपादानमित्यर्थः ।

न चैकतरोपादानादेवोक्ताव्याप्तिवारणसम्भवे द्वयोरुपादानं व्यर्थमिति वाच्यम् । समवायिनः समवायेन साध्यतायां घटत्वादिहेतौ,—समवायेन घटाद्यभावमादाया-ऽव्याप्तिवारणार्थं 'यद्धर्मे'त्यादेः, संयोगिनः संयोगेन साध्यतायां धूमादिहेतौ समवा-येन संयोग्यभावमादायाव्याप्तिवारणार्थञ्च 'यत्सम्बन्धे'त्यादेरप्यवश्यं निवेशनी-यत्वात् ।

अत्रेदं चिन्त्यते—केवलसमवायाद्येकैकनिष्ठावच्छेदकताया ऐक्यात्समवायमा-दाय तादृशोभयस्य सत्तायाः सम्पादयितुमशक्यत्वादव्याप्तेरसम्भवादिदसङ्गतमिति।

जागदीशी

तथा च-तदभावप्रतियोगिताया,-धर्म्मविधया समवायेन, सम्बन्धविधया संयोगेन चावच्छेद्यत्वाभावान्नाव्याप्तिरिति भावः ।

अत्र च क्वचित्—'यादृशसम्बन्धावच्छिन्ने'त्यपि द्रष्टव्यं, शब्दैक्यस्याऽनुपादेयत्वात्,

विवृतिः

तादृशोभयोपादाने तु—नाव्याप्तिरित्याह-तथा चेति । धर्मविधया = किञ्चित्सम्बन्धावच्छिन्नसाध्यतावच्छेदकतावत्त्वेन, संसर्गविधया=किञ्चित्सम्बन्धानवच्छिन्नसाध्यतावच्छेदकतावत्त्वेन,

नाव्याप्तिरिति । तथा च घटत्वसमानाधिकरणस्य समवायेन संयोग्यभावस्य प्रतियोगितायां, — किञ्चित्सम्बन्धावच्छिन्नावच्छेदकताश्रयसमवायावच्छिन्नत्वस्य, किञ्चित्सम्बन्धानवच्छिन्नावच्छेदकताश्रयसंयोगावच्छिन्नत्वस्य च, द्वयोरभावसत्त्वे बाधकाभावात्, उक्ताभावीयप्रतियोगितावच्छेदकसमवायनिष्ठावच्छेदकतायाः किञ्चित्सम्बन्धानवच्छिन्नत्वात्तथाविधसंयोगनिष्ठावच्छेदकतायाश्च किञ्चित्सम्बन्धावच्छिन्नत्वादिति न 'समवायिसान्घटत्वा'दित्यत्राव्याप्तिरित्यर्थः ।

नन्वत्र कल्पे 'वह्निमान्धूमा'दित्यत्राव्याप्तिः, महानसीयसंयोगेन वह्नित्वावच्छिन्नाऽनधिकरणधूमाधिकरणपर्वतवृत्त्यभावस्य,-महानसीयसंयोगेन वह्निसामान्याभावस्य प्रतियोगितायां वह्नित्वावच्छिन्नत्व-संयोगावच्छिन्नत्वयोर्द्वयोः सत्त्वात्,

एवं 'दण्डिमान् दण्डिसंयोगा'दित्यत्राप्यव्याप्तिः, चालनीन्यायेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणतत्तद्दण्डयभावप्रतियोगितायां, साध्यतावच्छेदकदण्डावच्छिन्नत्वस्य, साध्यतावच्छेदकसंयोगावच्छिन्नत्वस्य च द्वयोः सत्त्वादित्यत आह—

—अत्र चेति । निरुक्तलक्षणे चेत्यर्थः ।

समवायस्यैकत्वमते यत्सम्बन्धावच्छिन्नत्वमात्रविवक्षणेऽपि तेन सम्बन्धेन साध्यतायां सद्धेतावव्याप्त्यभावादाह—क्वचिदिति ।

वस्तुतस्तत्संयोगेन वह्निसाध्यकतद्धूमहेतौ 'यत्सम्बन्धावच्छिन्नत्व'मात्रनिवेशेप्यव्याप्त्यभावादाह—"क्वचिदिति" । यादृशसम्बन्धावच्छिन्नेत्यपि = यद्रूपावच्छिन्नसंसर्गावच्छिन्नेत्यपि,

नन्वेवं लक्षणस्य नानात्वापत्तिरित्यत आह—शब्दैक्यस्येति । तथा च लक्ष्य-

दीपिका

क्वचिद्यादृशः सम्बन्ध इति । अयमभिप्रायः—प्रतियोगिव्यधिकरणहेतुमन्निष्ठाऽभावीयप्रतियोगितासामान्ये,—साध्यतावच्छेदकनिष्ठकिञ्चित्सम्बन्धानवच्छिन्ना-

जागदीशी

तेन धूमवति तत्तत्संयोगसम्बन्धेन वह्निसामान्याभावसत्त्वेऽपि नाव्याप्तिः, तत्तत्संयोगाद्यवच्छिन्नप्रतियोगितायाः संयोगसामान्यानवच्छिन्नत्वात्, संयोगत्वस्य सम्बन्धविधयावच्छेदकतावच्छेदकत्वस्थल एव तथात्वात् ।

एवं 'यद्धर्मावच्छिन्ने'त्यत्रापि,—क्वचित् 'यादृशधर्मावच्छिन्ने'ति बोध्यं.

तेन 'दण्डिमान् दण्डिसंयोगा'दित्यादौ तादृशप्रतियोगितायां तद्-

विवृतिः

भेदेन लक्षणस्य नानात्वमिष्टमेवेति भावः । **तेनेति** । यादृशसम्बन्धावच्छिन्नत्वविवक्षणेनेत्यर्थः । **नाव्याप्तिरिति** । महानसीयसंयोगेन वह्न्यभावप्रतियोगितायां संयोगत्वविशिष्टसंयोगावच्छिन्नत्वविरहेणोभयाभावसत्त्वान्नाव्याप्तिरित्यर्थः ।

इदमुपलक्षणम्—यादृशसम्बन्धावच्छिन्नत्वविवक्षणे संयोग-समवायान्यतरसम्बन्धेन वह्निसाध्यकधूमहेतौ केवलसमवायेन वह्न्यभावमादायापि नाव्याप्तिरित्यपि द्रष्टव्यम् ।

अव्याप्त्यभावमुपपादयति—**तत्तदिति** । संयोगसामान्यानवच्छिन्नत्वात् = संयोगत्वमात्रावच्छिन्नसंयोगानवच्छिन्नत्वात्, सम्बन्धविधया = किञ्चित्सम्बन्धानवच्छिन्नत्वेन, अवच्छेदकतावच्छेदकस्थले=प्रतियोगितावच्छेदकतावच्छेदकस्थले, तथात्वात्=प्रतियोगितायां संयोगसामान्यावच्छिन्नत्वसम्भवात्,

'वह्निमान्धूमा'दित्यादौ यादृशधर्माप्रसिद्ध्या तत्र 'यद्धर्मावच्छिन्नत्व'मात्रनिवेश एव कर्त्तव्य इत्याशयेनाह—**क्वचिदिति** । यत्र साध्यतावच्छेदकता किञ्चिद्धर्मा-

दीपिका

वच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्व,—साध्यतावच्छेदकनिष्ठकिञ्चित्सम्बन्धानवच्छिन्नावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वोभयाभावः क्वचिन्निवेशनीयः ।

प्रथमं रूपवृत्तित्वं,—स्वावच्छेदकनिष्ठकिञ्चित्सम्बन्धावच्छिन्नावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन,

द्वितीयं रूपवृत्तित्वञ्च,—स्वावच्छेदकनिष्ठकिञ्चित्सम्बन्धानवच्छिन्नावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ।

तेन न महानसीयसंयोगेन वह्न्यभावमादाय 'वह्निमान् धूमा'दित्यादावव्याप्तिः, न वा तत्तद्दण्ड्यभावमादाय 'दण्डिमान् दण्डिसंयोगा'दित्यत्राप्यव्याप्तिः ।

जागदीशी

ण्डावच्छेद्यत्व-संयोगसम्बन्धावच्छेद्यत्वोभयाभावासत्त्वेऽपि नाव्याप्तिः ।

प्रमेयत्वावच्छेद्यत्वविशिष्ट-स्वरूपसम्बन्धावच्छिन्नत्वाप्रसिद्ध्या 'प्रमेयवान् वाच्यत्वा'दित्यादावव्याप्तिरतो—'विशिष्टाभाव'—मपहाय तादृशोभयाभाव उक्तः ।

न च 'निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीय-यद्धर्मावच्छिन्नप्रतियोगितासामान्ये,—यत्सम्बन्धावच्छिन्नत्वाभावस्तत्सम्बन्धेन तद्धर्मावच्छिन्नं व्यापक'मित्यर्थोऽस्तु, धर्मान्तरावच्छिन्नाभावाप्रवेशेन लाघवादिति वाच्यम्;

'घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वा'दित्यादावव्याप्तेः,तादृशद्रव्यत्व-

विवृतिः

वच्छिन्ना तत्रेत्यर्थः । तेन = यादृशधर्मावच्छिन्नत्वविवक्षणेन, [नाव्याप्तिरिति । तत्तद्दण्ड्यभावप्रतियोगितायां दण्डत्वमात्रविशिष्टदण्डत्वावच्छिन्नत्वविरहेणोभयाभावसत्त्वान्नाव्याप्तिरित्यर्थः ।

'विशिष्टाभाव'परित्यागे बीजमाह—**प्रमेयत्वेति । अप्रसिद्ध्येति ।** कस्यामपि प्रतियोगितायामप्रसिद्ध्येत्यर्थः, **अव्याप्तिरिति ।** व्याप्यवृत्तिसाध्यकस्थले निरुक्तक्रमेणैव व्यापकत्वमित्याशयेनेदम्, अन्यथा प्रमेयस्य व्याप्यवृत्तितया तत्साध्यके उभयाभावघटितव्याप्तेरनिवेशाद्विशिष्टाभावस्य व्यावृत्तिस्तत्र न सङ्गच्छत इति भावः ।

उभयाभावनिवेशे तु—समवायेन प्रमेयाभावप्रतियोगितायां प्रमेयत्वावच्छिन्नत्वस्य, स्वरूपेण गगनत्वाद्यभावीयप्रतियोगितायाञ्च,—स्वरूपसम्बन्धावच्छिन्नत्वस्य प्रसिद्ध्या तयोर्हेतुमन्निष्ठघटाभावीयप्रतियोगितायामभावसत्त्वाल्लक्षणसमन्वयो बोध्यः।

ननु स्वप्रतियोगितावच्छेदकसम्बन्धेन साध्यतावच्छेदकयद्धर्मावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावीयप्रतियोगितासामान्ये,—साध्यतावच्छेदकयत्सम्बन्धावच्छिन्नत्वाभावस्तेन सम्बन्धेन साध्यतावच्छेदकीभूततद्धर्मावच्छिन्नस्य हेतुव्यापकत्वमेव विवक्ष्यतां, 'घटवान्महाकालत्वा'दित्यत्र तु समवायेन घटाद्यभावमादायैव लक्षणसमन्वयः, तदीयप्रतियोगितायां साध्यतावच्छेदककालिकसम्बन्धावच्छिन्नत्वस्याऽसत्त्वादित्याशङ्क्य दूषयति—**घटवृत्तित्वेति ।**

दीपिका

**विशिष्टाभावमपहायेति ।** ननु स्वरूपसम्बन्धेन प्रमेयस्य व्याप्यवृत्तितया तत्र प्रतियोगिवैयधिकरण्याऽनिवेशेन कथमव्याप्तिरभिहिता जगदीशेनेति चेदत्र केचित्—"प्रतियोगिताधर्मिकोभयाभावघटितलक्षणस्य व्याप्यवृत्त्यव्याप्यवृत्तिसाधारणतया तत्राऽव्याप्तेरभिधान"मित्याहुः ।

दीधितिः

**—तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं बोध्यम् ।**

जागदीशी

भेदमादाय कथञ्चित्तत्र लक्षणसमन्वयेऽपि,—'दधित्वविशिष्टप्रमेयवान्स्थूलदधित्वा'दित्यत्राव्याप्तिः, केनापि सम्बन्धेन हेतुमतः साध्यतावच्छेदकावच्छिन्नानधिकरणत्वासम्भवात्,

तत्रापि दध्यन्तरानुयोगिकसमवायादिसम्बन्धेन हेतुमतः प्रकृतसाध्यानधिकरणत्वे तूक्तक्रमेणापि व्यापकत्वं सुवचमिति तु—विभावनीयमिति ।

❀ तेन सम्बन्धेनेति ❀ ।—न चैवं संयोगेनापि रूपस्य पृथिवीत्वव्यापकत्वापत्तिः, तेन सम्बन्धेन रूपाभावप्रतियोग्यधिकरणाप्रसिद्धेरिति वाच्यम्;

तथात्वेऽपि तेन सम्बन्धेन रूपसामानाधिकरण्याप्रसिद्ध्यैव व्याप्ति-

विवृतिः

**भेदमादायेति ।** तादात्म्येन तथाविधद्रव्यत्वानधिकरणत्वस्य घटे सम्भवादिति भावः ।

सर्वमन्यत्पूर्वोक्तदिशावसेयम्

**न चैवमिति ।** एवं = तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वोक्तौ, व्यापकत्वापत्तिं सङ्गमयति—**तेन सम्बन्धेनेति ।** संयोगसम्बन्धेनेत्यर्थः । तथा च निरुक्तस्थले संयोगेन रूपाभावो न लक्षणघटकः, तदीयप्रतियोगितावच्छेदकसंयोगसम्बन्धेन रूपत्वावच्छिन्नाधिकरणाप्रसिद्ध्या तदनधिकरणत्वस्यापि वक्तुमशक्यत्वात्, अपि तु संयोगेन घटाभाव एव तथा, तदीयप्रतियोगितायां साध्यतावच्छेदकसंयोगावच्छिन्नत्वसत्त्वेऽपि, रूपत्वावच्छिन्नत्वविरहेणोभयाभावसत्त्वाद्भवति संयोगेन रूपत्वावच्छिन्नस्य पृथिवीत्वव्यापकत्वापत्तिरिति भावः ।

रूपस्य संयोगेनाधिकरणाप्रसिद्ध्या साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणवृत्तित्वरूपसाध्यसामानाधिकरण्याप्रसिद्ध्यैव न तत्र व्याप्तिलक्षणातिव्याप्तिरित्याशयेन समाधत्ते—**तथात्वेऽपीति ।** संयोगेन रूपस्य पृथिवीत्वव्यापकत्वेऽपीत्यर्थः । तेन सम्बन्धेन = संयोगसम्बन्धेन, ।

दीपिका

वस्तुतो—घटत्वाऽभाव-पटत्वाऽभावाऽन्यतरस्य स्वरूपेण साध्यत्वे घट-पटान्यतरत्वहेतावव्याप्तौ ग्रन्थतात्पर्यम् । निरुक्तान्यतरस्याऽव्याप्यवृत्तितया, केवलाऽन्वयितया च स्वरूपसम्बन्धाऽवच्छिन्नत्वविशिष्टतादृशाऽन्यतरत्वाऽवच्छिन्नत्वस्याऽप्रसिद्धेरित्यपि-वदन्ति ।

जागदीशी

लक्षणातिव्याप्तिविरहात्, 'यद्धर्मे' त्यत्र धर्म्मस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपकतावच्छेदकत्वेनापि विशेषणीयत्वाद्वा ।

[ तेन[1] वह्न्याकाशोभयत्वादिनाऽपि न व्यापकत्वमिति । ]

न च वृत्त्यनियामकसम्बन्धेन साध्यतायामव्याप्तिः, तादृशसम्बन्धस्य प्रतियोगितावच्छेदकतया तत्सम्बन्धावच्छिन्नत्वस्याप्रसिद्धेः,—

—तादृशसम्बन्धस्यापि प्रतियोगितावच्छेदकत्वपक्ष एव एतन्निरुक्त्यादरात् ।

"निरुक्तप्रतियोगितासामान्ये,—यत्सम्बन्धातिरिक्तसम्बन्धानवच्छिन्नत्व-यद्धर्मावच्छिन्नत्वोभयाभावस्तत्सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्व"-मिति तु न युक्तम् ;

वृत्त्यनियामकसम्बन्धेन साध्यतायां व्यभिचारिण्यतिव्याप्त्यापत्तेः ।

विवृतिः

ननु तथापि संयोगेन रूपस्य पृथिवीत्वव्यापकत्वं दुर्वारमित्यत आह—**यद्धर्म-इति । विशेषणीयत्वादिति ।** तथा च यद्धर्मावच्छिन्नत्वघटके साध्यतावच्छेदकीभूते यद्धर्मे,—साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानिरूपकतावच्छेदकत्वस्य विवक्षणीयतया, न रूपस्य संयोगेन पृथिवीत्वव्यापकत्वं, संयोगावच्छिन्नाधिकरणतानिरूपकतावच्छेदकत्वस्य रूपत्वरूपे यद्धर्मेऽप्रसिद्धत्वादित्याशयः ।

ननु स्वामित्वेन धनसाध्यकचैत्रत्वहेतौ निरुक्तलक्षणस्याव्याप्तिः, संयोगेन घटाऽभावस्य तत्र प्रसिद्धत्वेऽपि,—प्रतियोगित्वनिष्ठस्य वृत्त्यनियामकस्वामित्वसम्बन्धावच्छिन्नत्वस्याप्रसिद्धतया तद्घटितोभयाभावस्याप्यप्रसिद्धत्वादित्याशङ्क्य निराचष्टे—

**तादृशसम्बन्धस्येति ।** तथा च स्वामित्वादिवृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगित्वस्वीकारपक्ष एवैतल्लक्षणप्रणयनात्, तादृशोभयाभावप्रसिद्ध्यैव तत्र नाव्याप्तिरिति भावः । यत्सम्बन्धावच्छिन्नत्वं = साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नत्वं, "तद्घटितोभयाभाव एव प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितायां निवेशनीयः, एवञ्च वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगित्वास्वीकारेऽपि न क्षतिः, 'धनी चैत्रत्वा'दित्यादौ समवायादिना धनाऽभावस्यैव लक्षणघटकत्वसम्भवात्, तदीयधननिष्ठप्रतियोगितायां साध्यतावच्छेदकधनत्वावच्छिन्नत्वसत्त्वेऽपि वृत्त्यनियामकस्वामित्वातिरिक्तसमवायाद्यनवच्छिन्नत्वविरहेणोभयाभावस्याक्षतत्वादिति" केषाञ्चिन्मतं दूषयति—**न युक्तमिति । अतिव्याप्त्यापत्तेरिति ।**

१ अयं पाठो बहुषु पुस्तकेषु नास्ति ।

जागदीशी

यद्वा,—"स्वावच्छेदकताघटकसम्बन्धेन यादृशप्रतियोगितावच्छेदका-नधिकरणं हेत्वधिकरणं, तादृशप्रतियोगितासामान्ये,—यद्धर्मावच्छिन्ना-

विवृति

तथा च स्वामित्वेन धनसाध्यकद्रव्यत्वहेतौ व्यभिचारिणि वृत्त्यनियामकस्वामित्व-सम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धया लक्षणघटकस्य समवायादिना धना-ऽभावस्य धननिष्ठप्रतियोगिताया धनत्वावच्छिन्नत्ववत्त्वेऽपि,—स्वामित्वसंसर्गाऽतिरिक्त-समवायाद्यनवच्छिन्नत्वविरहवत्त्वेनोभयाभावसत्त्वात्स्वामित्वेन द्रव्यत्वव्यापकधनत्वा-वच्छिन्नसामानाधिकरण्यमादायातिव्याप्त्यापत्तेरित्यर्थः ।

वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वेऽपि तत्सम्बन्धावच्छिन्न-प्रतियोगितावच्छेदकतायाः सर्वानुमतत्वस्यावश्यं स्वीकरणीयतया निरुक्तलक्षण-मन्यथा व्याचष्टे—यद्वेति । स्वावच्छेदकेति । तथा च प्रतियोगिवच्छेदकता-घटकसम्बन्धेन यादृशप्रतियोगितावच्छेदकस्यानधिकरणं हेत्वधिकरणं. तादृशप्रतियो-गितासामान्ये,—साध्यतावच्छेदकयद्धर्मावच्छिन्नावच्छेदकतानिरूपितत्व,—साध्य-तावच्छेदकयत्सम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वोभयाभावस्तादृशतत्सम्बन्धेन तादृशतद्धर्मावच्छिन्नस्य हेतु'व्यापकत्वं',—तद्व्यापकसामानाधिकरण्यं हेतौ 'व्याप्ति'—रिति विवक्षितमित्यर्थः ।

अस्ति च संयोगेन वह्न्यादेर्धूमादिव्यापकत्व, समवायेन वह्निमतोऽभावस्य प्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन तादृशप्रतियोगितावच्छेदकस्य वह्ने-रनधिकरणहेत्वधिकरणपर्वतादिवृत्तितादृशाभावप्रतियोगितायां, वह्नित्वावच्छिन्नावच्छे-दकतानिरूपितत्वस्य विद्यमानत्वेऽपि, साध्यतावच्छेदकसंयोगावच्छिन्नावच्छेदकता-निरूपितत्वविरहेणोभयाभावसत्त्वात् । 'घटवान्महाकालत्वा'दित्यत्र च समवा-यादिना घटवतोऽभावमादायैव निरुक्तरीत्या लक्षणसमन्वयः ।

स्वामित्वसम्बन्धेन धनसाध्यकचैत्रत्वहेतुकस्थले,—स्वामित्वेन 'धनवान्नास्ती'-त्यभावो न लक्षणघटकः, तदीयप्रतियोगितावच्छेदकताघटकस्वामित्वसम्बन्धेन धनसम्बन्धिताया एव चैत्रे सत्त्वात्, अपि तु समवायादिना धनवदभाव एव तथा, तदीयप्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन धनानधिकरणचैत्रवृत्ति-तादृशाभावीयप्रतियोगितायां धनत्वावच्छिन्नावच्छेदकतानिरूपितत्वसत्त्वेऽपि,—स्वामित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वविरहेणोभयाभावस्याक्षततया स्वामित्वेन धनत्वावच्छिन्नस्य चैत्रत्वव्यापकत्वं बोध्यम् ।

गुरुधर्मावच्छिन्नप्रतियोगितावच्छेदकत्वानुपगमे,—संयोगेन प्रमेयवह्नित्वाव-

जागदीशी

वच्छेदकताकत्व-यत्सम्बन्धावच्छिन्नावच्छेदकताकत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं विवक्षितं,

वृत्त्यनियामकसम्बन्धस्य प्रतियोगिताच्छेदकत्वाभावेऽपि,—प्रतियोगितावच्छेदकताघटकसम्बन्धत्वं सर्वसम्मतमेव,—

"चैत्रो न पचती'त्यादौ वृत्त्यनियामकाऽनुकूलत्वसम्बन्धेन पाकविशिष्टायाः कृतेरभावस्य चैत्रादावन्वयदर्शनात् ।

विवृतिः

च्छिन्नस्य धूमव्यापकत्वानुपपत्तिः, प्रमेयवह्नित्वावच्छिन्नावच्छेदकतानिरूपितत्वविशिष्टसंयोगसम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वस्य कस्यामपि प्रतियोगितायामप्रसिद्धत्वादतो 'विशिष्टाभाव'मपहायोभयाभावो निवेशितः,

तथा सति विषयितया प्रमेयवह्निमदभावीयप्रतियोगितायां प्रमेयवह्नित्वावच्छिन्नावच्छेदकतानिरूपितत्वस्य, संयोगेन घटवदभावप्रतियोगितायां संयोगावच्छिन्नावच्छेदकतानिरूपितत्वस्य च प्रसिद्धतया तद्घटितोभयाभावस्य विषयितया प्रमेयवह्निमदभावीयप्रतियोगितायां सत्त्वान्न व्यापकत्वानुपपत्तिः ।

एतेन—तादृशप्रतियोगितासामान्ये यद्धर्मावच्छिन्नयत्सम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वाभाव इत्येकाभावनिवेशोऽपि—निरस्तः, 'प्रमेयवह्निमान् धूमा'दित्यत्र तादृशस्याप्रसिद्धत्वादव्याप्त्यापत्तेरिति विभावनीयम् ।

तत्सम्बन्धावच्छिन्नप्रतियोगितायास्तेन सम्बन्धेन वृत्तिमद्वृत्तित्वमिति मते,—'वाच्यं ज्ञेयत्वा'दित्यत्राव्याप्तिः, स्वरूपेण वाच्यत्ववतः समवायेन योऽभावस्तदीयप्रतियोगिताश्रयसमवेतपदार्थभिन्नत्वस्य हेत्वधिकरणे गगने सत्त्वात्, तादृशाभावीयप्रतियोगितायाञ्च वाच्यत्वत्वावच्छिन्नावच्छेदकतानिरूपितत्व—स्वरूपसम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वयोर्द्वयोः सत्त्वादतो 'यादृशप्रतियोगित्वाश्रयभिन्नत्व'मुपेक्ष्य 'यादृशप्रतियोगितावच्छेदकानधिकरणत्वं' 'हेत्वधिकरणे' निवेशितमिति दिक् ।

ननु वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य सर्वसम्मतत्वं कथमङ्गीकर्त्तव्यमित्यत आह—**चैत्रेति** । तथा च 'चैत्रो न पचती'त्यादावनुकूलत्वसम्बन्धेन पाकविशिष्टकृत्यभाववाँश्चैत्र इत्यन्वयबोधस्यानुभविकतया निरुक्ताभावीयकृतिनिष्ठप्रतियोगितानिरूपितपाकनिष्ठावच्छेदकताया वृत्त्यनियामकानुकूलत्वसम्बन्धावच्छिन्नतायां विवादाभावेन वृत्त्यनियामकसम्बन्धावच्छिन्नाऽपि प्रतियोगिताऽवच्छेदकता सर्वसम्मतैवेति भावः ।

जागदीशी

व्यभिचारिणि तु,—साध्यवत्सामान्याभावप्रतियोगितायामेव तादृशोभयाभावविरहान्नातिव्याप्तिरिति तु"—नव्याः।

ननु व्याप्यवृत्तिसाध्यकस्थलेऽप्युक्तक्रमेणैव व्यापकत्वं निर्वाच्यम्,—

—अन्यथा 'दण्डिमा'नित्यादौ दण्डित्वादिप्रकारेण व्यापकत्वानुपपत्तेः,

तथा च 'प्रमेयवान् घटत्वा'दित्यादावव्याप्तिः, प्रमेयत्वावच्छिन्नत्वस्याप्रसिद्धेः।

न च प्रकारित्वादौ तत्प्रसिद्धिः—,

—प्रतियोगितानिष्ठाया एवावच्छेद्यतायाः प्रकृते निवेशनीयत्वात्,

विवृतिः

'सामान्य'पदव्यावृत्तिमाह—**व्यभिचारिणीति**। साध्यवत्सामान्याभावप्रतियोगितायां = साध्यतावच्छेदकसम्बन्धेन साध्यवत्सामान्याभावप्रतियोगितायां, तादृशोभयाभावविरहात् = यद्धर्मावच्छिन्नावच्छेदकताकत्व — यत्सम्बन्धावच्छिन्नावच्छेदकताकत्वोभयाभावविरहात्, **नातिव्याप्तिरिति**। अन्यथा 'सामान्य'पदानुपादाने 'धूमवान्वह्ने'रित्यत्र घटवत्सामान्याभावीयप्रतियोगितायां तादृशोभयाभावसत्त्वादतिव्याप्तिः स्यादिति भावः।

'**समवायेने**'त्यादिग्रन्थोत्थितौ हेतुमाह-**नन्विति**। **अन्यथेति**। व्याप्यवृत्तिसाध्यकस्थले निरुक्तक्रमेण व्यापकत्वाविवक्षण इत्यर्थः। यद्यपि संयोगेन वस्तुमात्रस्याव्याप्यवृत्तितया दण्डिसाध्यकस्थले प्रतियोगिवैयधिकरण्यघटितस्यैव निरुक्तव्यापकत्वस्य निर्वाच्यत्वमावश्यकं, तथापि रूपत्वन्यूनवृत्तिजातिमतः साध्यतास्थले तादृशजातिमत्त्वेन व्यापकत्वानुपपत्तेरे**वान्यथे**त्यादिग्रन्थाभिप्रेततया नानुपपत्तिरित्यवधेयम्।

**व्यापकत्वानुपपत्तेरिति**। तथा च व्याप्यवृत्तिसाध्यकस्थले हेतुमन्निष्ठाभावनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदक—वत्त्वस्यैव व्यापकत्वस्वरूपतया,—साध्यतावच्छेदकीभूतानां दण्डादीनां तादृशतत्तद्दण्ड्यभावप्रतियोगितावच्छेदकत्वेन दण्डादिप्रकारेण दण्ड्यादेर्व्यापकत्वं न सम्भवति, अपि तु परम्परया दण्डत्वादिप्रकारेणैवेति तत्रापि निरुक्तक्रमेण व्यापकत्वाऽभिधाने तादृशतत्तद्दण्ड्यादेरभावप्रतियोगितायां,— दण्डत्वादिमात्रविशिष्टदण्डाद्यवच्छिन्नत्वविरहेणोभयाभावसत्त्वाद्दण्डादिप्रकारेण दण्ड्यादेर्व्यापकत्वमव्याहतमेवेति भावः।

**तथा चेति**। व्याप्यवृत्तिसाध्यकस्थलेऽपि निरुक्तक्रमेण व्यापकत्वाभिधाने चेत्यर्थः। अवच्छेद्यतायाः = अवच्छिन्नत्वस्य, प्रकृते = निरुक्तलक्षणे,

दीधितिः

**समवायसम्बन्धेन मेयसामान्याभावस्य सामान्यादौ सत्त्वा-न्मेयत्वादेरप्यभावप्रतियोगितावच्छेदकत्वं सुलभम्,**

जागदीशी

अन्यथा प्रकारित्व-प्रतियोगित्वसाधारणैकावच्छेद्यत्वविरहेण व्यभिचारिण्यतिव्याप्त्यापत्तेः,—

[ [1]विषयितया प्रमेयत्वविशिष्टस्य ज्ञानादेरभावप्रतियोगितायां प्रमेयत्वावच्छिन्नत्वस्य प्रसिद्धावपि स्वरूपसम्बन्धेन साध्यतावच्छेदकतावच्छेदकेन तदवच्छिन्नत्वस्याप्रसिद्धेः,— ] अत आह,—❀ समवायेति ❀।

ननु स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वेऽपि,—प्रकृतसाध्यीयसाध्यतावच्छेदकसम्बन्धसामान्ये,—तादृशोभयाभावविवक्षयैव सर्वसामञ्जस्ये कृतं विवक्षान्तरेण, ?

विवृतिः

**एकावच्छेद्यतेति**। प्रत्येकनिष्ठावच्छिन्नत्वस्य भिन्नत्वेनेति भावः।

विषयितया प्रमेयत्ववज्ज्ञानाभावस्य प्रतियोगितायां,—प्रमेयत्वावच्छिन्नत्वसत्त्वेऽपि साध्यतावच्छेदकस्वरूपसम्बन्धावच्छिन्नत्वस्य न तत्र प्रसिद्धिरित्याह——**विषयितया चेति**।

दीधितौ—**सुलभमिति**। तथा च 'प्रमेयवान् वाच्यत्वा'दित्यत्र समवायेन प्रमेयाभावप्रतियोगितायां प्रसिद्धस्य प्रमेयत्वावच्छिन्नत्वस्य, स्वरूपेण गगनत्वाभावीयप्रतियोगितायां च प्रसिद्धस्य स्वरूपसम्बन्धावच्छिन्नत्वस्य हेतुमन्निष्ठघटाद्यभावप्रतियोगितायामभावसत्त्वाल्लक्षणसमन्वय इति भावः।

सम्बन्धधर्मिकोभयाभावघटितलक्षणे'ऽतएवे'त्यादिना दोषान्तरप्रदानप्रयोजनमाह—**नन्विति**। **स्वरूपसम्बन्धेनेति**। कालिकसम्बन्धेनेत्यर्थः। तथा च गगनादेः कालिकसम्बन्धेन महाकालवृत्तित्वेऽपि घटप्रतियोगिककालिकसम्बन्धे पटत्वावच्छिन्नप्रतियोगिकत्वविरहेणोभयाभावसत्त्वात्पटाभावस्यैव पूर्वोक्तरीत्या 'घटवान्महाकालत्वा'दित्यत्र प्रतियोगिवैयधिकरण्यसम्भवेन पूर्वलक्षणस्यैव सम्यक्तया लक्षणान्तरानुसरणं निरर्थकमिति भावः।

ननु कालिकेन प्रमेयसाध्यकमहाकालत्वहेतुकस्थले निरुक्तरीत्या प्रतियोगि-

[1] अयं पाठो बहुषु पुस्तकेषु नास्ति।

दीधितिः

**अत एव—समवायस्यैकत्वेन द्रव्यत्वादिप्रतियोगिकत्व-गुणाद्यनुयोगिकत्वोभयसत्त्वेऽपि,—'द्रव्यं जाते'रित्यादौ,—**

जागदीशी

'घटवान् महाकालत्वा'दित्यत्र घटीयतादृशविशेषणतायां पटत्वावच्छिन्नप्रतियोगिकत्वविरहेण पटाभावस्यैव प्रतियोगिवैयधिकरण्यसम्भवात्,

'कालः प्रमेयवान्महाकालत्वा'दित्यत्र च कालिकसम्बन्धेन प्रमेयसामान्यस्य व्याप्यवृत्तितया तत्र प्रतियोगिवैयधिकरण्यस्यैवानुपादेयत्वेन निर्दोषादतः पूर्वकल्पे दोषान्तरमाह,—❀ अत एवेति ❀ ।

विवृतिः

व्यधिकरणाभावाप्रसिद्धिः, सर्वेषामेव प्रमेयतया साध्यप्रतियोगिकेषु घट-पटादिप्रतियोगिककालिकेषु घटत्वाद्यवच्छिन्नप्रतियोगिकत्व—हेत्वधिकरणमहाकालानुयोगिकत्वयोर्द्वयोः सत्त्वादित्यत आह—**काल इति । व्याप्यवृत्तितयेति ।** तथा च तत्र हेतुमन्निष्ठाभावीयसाध्यतावच्छेदकसंसर्गातिरिक्तसम्बन्धावच्छिन्नत्व—साध्यतावच्छेदकव्यापकत्वोभयाभाववत्प्रतियोगितानवच्छेदकत्वघटितव्याप्तिलक्षणस्य समवायादिना घटाद्यभावमादाय समन्वयः सम्भवतीति भावः। पूर्वकल्पे = सम्बन्धधर्मिकोभयाभावघटितलक्षणे, दोषान्तरम् = अतिव्याप्तिस्वरूपं दोषान्तरम् ।

ननु 'वह्नि-धूमोभयवान्वह्ने'रित्यत्र नातिव्याप्तिः, उभयत्वावच्छिन्नप्रतियोगिकत्वविरहस्य सम्बन्धमात्रे सत्त्वेन वह्नि-धूमोभयाभावस्यैव प्रतियोगिव्यधिकरणत्व-

दीपिका

**पूर्वकल्पे दोषान्तरमाहेति ।** नन्वत्र 'घट—घटान्यप्रमेयोभयवान् महाकालत्वा'दित्यत्राव्याप्तिः, कालिकविशेषणतामात्रस्य साध्यीयसाध्यतावच्छेदकसम्बन्धतया तत्र घटत्वादिप्रत्येकधर्मावच्छिन्नप्रतियोगिकत्व—महाकालानुयोगिकत्वोभयस्यैव सत्त्वादिति चेन्न ।

साध्यतावच्छेदकसम्बन्धावच्छिन्नाधेयतावच्छेदकतासामान्ये— साध्यतावच्छेदकनिष्ठत्व-हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसम्बन्धावच्छिन्नाधेयतानिरूपितत्व,—स्यादृशप्रीतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपितत्वैतत्त्रितयाभावस्य विवक्षितत्वात् ।

**यद्वेति ।** [ पृ० २२८ जा० ] न च तथापि तादृशप्रतियोगितासामान्ये,—यद्धर्मावच्छिन्नं यत्,—तन्निरूपकत्व—यत्सम्बन्धावच्छिन्नं यत्तन्निरूपकत्वैतदुभयाऽभावो निवेश्यतां, किमवच्छेदकताद्वयप्रवेशेनेति वाच्यं ।

दीधितिः

—'वह्नि-धूमोभयवान् वह्ने'रित्यादौ संयोगस्य द्वित्वावच्छिन्न-प्रतियोगिकत्वविरहेऽपि च,—

—नातिव्याप्ति" रित्यपि—वदन्ति ॥२०॥

जागदीशी

यद्यपि संयोगमात्रस्यैव द्वित्वावच्छिन्नप्रतियोगिकत्वविरहाद्वह्नि-धूमोभयत्वावच्छिन्नाभावमादायैव नातिव्याप्तिसम्भावना,

—तथाऽपि 'वह्नि-धूमोभयवान् वह्ने'रित्यादौ संयोगस्य द्वित्वावच्छिन्न-प्रतियोगिकत्वविरहेऽपि समवायस्यैकत्वेन द्रव्यत्वप्रतियोगिकत्व—गुणानु-योगिकत्वोभयवत्त्वेन 'द्रव्यं जाते'रित्यादौ नातिव्याप्तिरिति—योजना ।

❀ विरहेऽपि चेति ❀। —"चकारस्तु प्रामादिक"—इति प्राञ्चः ।

विवृतिः

सम्भवादित्याशङ्क्य—प्राचीनमतसिद्धं समाधानमाह—**तथाऽपीति** । तथा च तादृशसंयोगसामान्ये तादृशोभयत्वावच्छिन्नप्रतियोगिकत्वविरहेणोभयाभावसत्त्वात्सा-ध्याभावस्य लक्षणघटकतया यद्यपि 'वह्निधूमोभयवान्वह्ने'रित्यत्र पूर्वलक्षणे नाति-व्याप्तिसम्भावना, तथाऽपि 'द्रव्यं जाते'रित्यत्र समवायस्यैकत्वमते द्रव्यत्वप्रति-योगिकत्व—हेत्वधिकरणगुणानुयोगिकत्वयोर्द्वयोः सत्त्वेन द्रव्यत्वाभावरूपसाध्या-भावस्य लक्षणाघटकत्वात्पूर्वलक्षणेऽतिव्याप्तिरतः—प्रतियोगिताधर्मिकोभयाभाव-घटितलक्षणानुसरणे न तत्रातिव्याप्तिरिति भावः ।

ननु द्वित्वावच्छिन्नप्रतियोगिकत्वविरहे'ऽपि चे'ति चकारेणोभयत्रैव पूर्वलक्षणेऽ-तिव्याप्तेः सूचितत्वादिदमसङ्गतमित्यत आह—**चकारस्त्विति** । तथा चोक्तस्थले चकारः सम्पातायात इति भावः ।

दीपिका

'प्रमेयवान् वाच्यत्वा'दित्यादौ घटाधिकरणत्वाऽभावीयप्रतियोगितायां प्रमेयत्वा-च्छिन्नं यदाऽऽधेयत्वं तन्निरूपकत्व, स्वरूपसम्बन्धाऽवच्छिन्नाऽवच्छेदकताकत्वोभयस्य सत्त्वात् । एवं—तत्रैव समवायेन प्रमेयवतः संयोगेनाऽभावमादाय तत्प्रतियोगितायां प्रमेयत्वावाच्छिन्नाऽवच्छेदकताकत्व, स्वरूपसम्बन्धाऽवच्छिन्नं यत्प्रतियोगितात्वनिष्ठमा-धेयत्वं तन्निरूपकत्वैतदुभयस्य सत्त्वात् ।

### जागदीशी

वस्तुतस्तु—"संयोगस्य = सम्बन्धमात्रस्य, द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेऽपि = द्वित्वावच्छिन्नप्रतियोगिकत्वाप्रसिद्धावपीत्यर्थः । तथा च सम्बन्धमात्रस्य एकप्रतियोगिकापरानुयोगिकसम्बन्धत्वनियमेन वह्नि-धूमोभयत्वावच्छिन्नप्रतियोगिकसम्बन्धस्याप्रसिद्ध्या । तादृशप्रतियोगिकत्वस्य लक्षणाघटकत्वेऽपि—'वह्नि-धूमोभयवान् वह्ने'रित्यादौ नाऽतिव्याप्तिः, प्रकारित्वादेः सम्बन्धत्वे मानाभावादिति" तु प्रागेव प्रपञ्चितमस्माभिः ।

केचित्तु—"वह्नेः" इत्यत्र "धूमात्" इति, "नाऽतिव्याप्तिः" इत्यनन्तरञ्च "अव्याप्तिर्वा" इति पाठं कल्पयन्तो—'द्रव्यं जाते'रित्यादावतिव्याप्तिं, 'वह्नि-धूमोभयवान् धूमा'दित्यत्र चाऽव्याप्तिमेव पूर्वलक्षणे दोषं'—
—सङ्गमयन्ति ॥२०॥

### विवृतिः

चकारसत्त्वे तस्य प्रामादिकत्वकथनं न युक्तमित्यतः स्वयं समाधानमाह—**वस्तुतस्त्विति** । तथा च 'यादृशप्रतियोगितावच्छेदक'पदेन निरुक्तोभयत्वस्य धर्त्तुमशक्यत्वात् 'द्रव्यं जाते':, 'वह्नि-धूमोभयवान् वह्ने'रित्युभयत्रैव पूर्वोक्तलक्षणेऽतिव्याप्तिः प्रतियोगिताधर्मिकोभयाभावघटितलक्षणानुसरणादेव वारणीयेति भावः ।

पूर्वलक्षणे 'द्रव्यं जाते'रित्यत्रातिव्याप्तिः, 'वह्नि-धूमोभयवान् धूमा'दित्यत्र चाव्याप्तिरेव दोषतयाऽभिमतेति केचिद्वदन्ति,—व्याचक्षते च ते निरुक्तग्रन्थमन्यथैवेति—तन्मतमुपन्यस्यति—**केचित्त्विति** । अतितुच्छत्वात्स्वयमेतन्मतमुपेक्षितमित्यवधेयम् ।

### दीपिका

ननु "यद्वा कल्पे—तादृशप्रतियोगितावच्छेदकतासामान्ये,—यत्सम्बन्धावच्छिन्नत्व, यद्धर्मावच्छिन्नत्वैतदुभयाभाव एव लाघवान्निवेश्यतां, किं तादृशप्रतियोगितायामुभयाऽभावनिवेशनेन, ? न चात्र 'वह्निमान्धूमा'दित्यत्र वह्निमत्पर्वताऽभावस्य लक्षणघटकस्य प्रतियोगितानिरूपितवह्नित्वावच्छिन्नाऽवच्छेदकतायामुभयाऽभावसत्त्वादव्याप्तिः, मन्मते तु,—साध्यतावच्छेदकेतरधर्मावच्छिन्नाऽवच्छेदकताकत्वविरहविशिष्टं यत्साध्यताऽवच्छेदकधर्मावच्छिन्नाऽवच्छेदकताकत्वं,—तदभावसत्त्वाददोष इति वाच्यम् । स्वावच्छेदकताघटकसम्बन्धेन स्वाश्रयानाधिकरणहेतुमन्निष्ठाऽभावप्रतियोगिताऽवच्छेदकतासामान्ये, — उभयाभावस्य विवक्षणाददोषात्,

दीधितिः

**प्रतियोगित्वादिश्च स्वरूपसम्बन्धविशेषो, न तु सम्बन्धत्वेन निविष्टः,**

जागदीशी

ननु स्वरूपसम्बन्धविशेषात्मकप्रतियोगित्वस्य विशिष्टधीजनकत्वरूपसम्बन्धताघटकनियमघटितत्वादात्माश्रयत्वमत आह, ❀ प्रतियोगित्वादिरिति ❀ ।—आदिनाऽ[नुयोगित्वनिरूपितत्ववृत्तित्वाऽ]वच्छेदकत्वपरिग्रहः। ❀ न तु सम्बन्धत्वेनेति ❀ ।—प्रतियोगितात्वादिधर्मान्तरप्रकारेण

विवृतिः

'प्रतियोगित्वादिश्चे'त्याद्युत्थितौ बीजमाह—**नन्विति । आत्माश्रयत्वमिति ।** स्वघटितत्वेनापादकेन स्वस्मिन् स्वभिन्नत्वापादनमित्यर्थः, तथा च 'निरुक्तव्यापकता यदि निरुक्तव्यापकता घटिता स्यात्तदा स्वभिन्ना स्यात्' इत्यापत्तिरेवात्रात्माश्रयपदेन विवक्षितेति भावः ।

पक्षीभूतायां निरुक्तव्यापकतायां निरुक्तव्यापकताघटितत्वरूपापादकसत्त्वं प्रदर्शयति—**स्वरूपसम्बन्धेति ।** तथा च प्रतियोगिताधर्मिकोभयाभावघटितलक्षणघटकप्रतियोगित्वं स्वरूपसम्बन्धत्वेनैव प्रविष्टं, तादृशसम्बन्धत्वञ्च विशिष्टधीव्यापकताविशिष्टानन्यथासिद्धत्वरूपविशिष्टधीजनकतात्मकं, निरुक्तजनकत्वरूपसम्बन्धत्वघटकव्यापकत्वञ्च प्रतियोगिताधर्मिकोभयाभावघटितव्यापकत्वस्वरूपमेव, अन्यस्य दुर्वचत्वात्, एवञ्च निरुक्तव्यापकत्वस्य प्रतियोगिताघटिततया तन्निष्ठसम्बन्धत्वघटकीभूतं यन्निरुक्तव्यापकत्वं,-तद्घटितत्वेन स्वघटितत्वरूपापादकस्य स्वस्मिन् विद्यमानतया तत्र स्वभिन्नत्वापादनमात्माश्रयप्रसङ्ग इति भावः ।

आदिपदग्राह्यमाह—**आदिनेति ।** तादृशञ्च प्रतियोगित्वादिकं प्रतियोग्यादिस्वरूपं, प्रतियोगितावच्छेदकादिस्वरूपं वेत्यन्यदेतत् ।

**न त्विति ।** तथा च सम्बन्धत्वेन प्रतियोगिताया अप्रवेशे तस्या व्यापकत्वाघटिततया नात्माश्रय इति भावः ।

ननु तर्हि केन रूपेण निरुक्तलक्षणघटकीभूतायाः प्रतियोगितायाः प्रवेश इत्यत आह—**प्रतियोगितात्वादीति ।** हेतुमन्निष्ठाभावीयत्वस्य प्रथमोपस्थिततया तेन

दीपिका

वह्नित्वावच्छिन्नाऽवच्छेदकतायाः स्वाश्रयानाधिकरणहेत्वधिकरणकत्वाविरहेण लक्षणाऽघटकत्वात् ।

न च 'विशिष्टसत्तावाञ्जाते'रित्यत्राऽतिव्याप्तिः, साध्याऽभावस्य लक्षणाऽघटकत्वा-

दीधितिः

**सामानाधिकरण्येऽपि सम्बन्धः,—संयोगत्वादिनैव निविशते।**
**दर्शितश्च नियमाघटितमपि सम्बन्धत्वम् ।**

जागदीशी

हेतुमन्निष्ठाभावीयत्वप्रकारेणैव वा तत्प्रवेशादिति भावः । ※ संयोगत्वादिनैवेति ※ । ननु प्रतियोगितात्वमपि स्वरूपसम्बन्ध एवेत्युक्तदोषतादवस्थ्यम् ;

किञ्च वृत्त्यनियामकसम्बन्धेन हेतुतास्थले,—तेन सम्बन्धेन हेतुसम्बन्धित्वस्याऽवश्यं प्रवेश एवेत्यतः सम्बन्धत्वेन निवेशेऽपि न क्षतिरित्याशयेनाह,—※दर्शितश्चेति※ ।—विशेष्य-विशेषणत्वान्यविशिष्टधीविषयत्वमेव सम्बन्धत्वमिति भावः ।

विवृतिः

रूपेण प्रतियोगिताप्रवेशस्यावश्यकत्वमाह—**हेतुमन्निष्ठेति** ।

ननु वह्निसामानाधिकरण्यं यदि संयोगसम्बन्धेन वह्न्यधिकरणे तेनैव सम्बन्धेन वृत्तित्वं, तदा सम्बन्धत्वप्रवेशात्पुनरात्माश्रय इत्यत आह—दीधितौ—**सामानाधिकरण्येऽपीति** । 'संयोगत्वादिने'त्यादिना समवायत्वादिपरिग्रहः ।

नियमाघटितसम्बन्धत्वप्रवेशे बीजमाह—**नन्विति** । उक्तदोषतादवस्थ्यम्, आत्माश्रयतादवस्थ्यम् ।

ननु प्रतियोगितात्वमपि स्वरूपसम्बन्धविशेष एव न तु सम्बन्धत्वेनापि तस्य प्रवेश इति,-कथमात्माश्रय इत्यत आह-**किञ्चेति** । **वृत्त्यनियामकसम्बन्धेनेति** । स्वामित्वादिसम्बन्धेनेत्यर्थः । तथा च तादृशस्थले तेन सम्बन्धेनाधिकरणादेरप्रसिद्ध्या साध्यसम्बन्धित्वस्यैव साध्यसामानाधिकरण्यस्वरूपतया सम्बन्धताया व्याप्तिघटकताध्रौव्य आत्माश्रयप्रसङ्गस्य कथामात्रेण वारयितुमशक्यत्वादिति भावः । **विशेष्यत्वेति** । विशेष्यत्वभिन्ना सती, विशेषणत्वभिन्ना च सती, या विशिष्टबुद्धि-

दीपिका

दिति वाच्यं, स्वावच्छेदकाऽवच्छिन्नाऽनधिकरणत्वस्य विवक्षितत्वात् । भवन्मतेऽपि,—'यादृशप्रतियोगिताऽवच्छेदकाऽनधिकरण'मित्यत्र यादृशप्रतियोगिताऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाऽधिकरणत्वाऽभावः प्रवेश्यः, अन्यथा 'विशिष्टसत्तावाञ्जाते'रित्यत्र केवलसत्तात्वावच्छिन्नाऽधिकरणतामादायातिव्याप्तिः,

